


# विद्या प्रसारक मंडळ, ठाणे

| | | |
|---|---|---|
| पुस्तकाचे नाव | : | श्रीमद्वेदान्तदेशिक विरचित<br>मीमांसापादुकाया : विशिष्टमध्ययनम् |
| लेखक | : | राघवन् चक्रवर्ति |
| प्रकाशक | : | तिरोपति : डी. टि. पब्लिकेशन्स् |
| प्रकाशन वर्ष | : | १९९८ |
| पृष्ठे | : | २३० पृष्ठे |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ३१

पूर्वमीमांसा विशिष्टाद्वैतञ्च

# श्रीमद्वेदान्तदेशिक विरचित मीमांसापादुकायाः विशिष्टमध्ययनम्



**डा. चक्रवर्ति राघवन्**
व्याख्याता, विशिष्टाद्वैतवेदान्तविभाग
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति

**डी. टि. स्वामी पब्लिकेशन्स्, तिरुपति**

पूर्वमीमांसा विशिष्टाद्वैतञ्च

# श्रीमद्वेदान्तदेशिक विरचित मीमांसापादुकायाः विशिष्टमध्ययनम्

डा. चक्रवर्ति राघवन्
M A, M Phil., Ph D (Sanskrit), M A (Hindi)
व्याख्याता, विशिष्टाद्वैतवेदान्तविभागः
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति

डी. टि. स्वामी पब्लिकेशन्स्, तिरुपति
१९९८

Pūrvamīmāmsā and Viśiṣṭādvaita
A Comprehensive Study of the Mīmāmsāpādukā of
Śrī Vedāntadeśika



750 copies





Copies can be had from
**Dr. C. Raghavan**
113, G.S Mada Street
Tirupati - 517 507, (A.P)

Price : 100/-



*This book is published with the financial assistance of TIRUMALA TIRUPATI DEVASTHANAMS, TIRUPATI Under their scheme "Aid to Publish Religious books"*

Laser Typesetted and Printed at
ANNAPURNA GRAPHICS
53, Upstairs, R S. Gardens
Tirupati - 517 507, (A.P) ✆ 53184



*शान्ताद्यनन्तगुणिनोवात्स्यश्रीचक्रवर्तिनः ।*
*तातस्यपादयुग्मे मे प्रबन्धोऽयं समर्प्यते ।।*



*सिद्धान्ते भास्करं तं गुणनिधिमनघं देवनाथार्यसूरिं*
*तत्पादूसेवकार्यं भुवि विदितभवं तातरामानुजार्यम् ।*
*शिष्टं वात्स्यान्ववायं सुचरितविदितं श्रीनृसिंहार्यमीडे*
*मीमांसाद्वन्द्ववेद्यं दिवि भुवि च सदा भास्करं श्रीनिवासम् ।।*

*जनकौ शान्तिसम्पन्नौ दयापूरितरूपिणौ ।*
*पूजनीयावहं वन्दे कल्याणी चक्रवर्तिनौ ।।*



# विषयसूचिका

श्रीः
श्रीमते रामानुजाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः

# भूमिका

'वेदोऽखिलो धर्ममूलम्' इत्यादिवचनैः वेदः धर्मप्रमाणेषु प्रथमगणितः। सोऽयं वेदः नानाशाखासंकुल. अतिमहान् वृक्षः स्वाश्रितेभ्य ऐहिकामुष्मिकश्रेयस्साधनरूपाणि प्रियाणि हिततमानि च फलानि वितरति। 'अनन्ता वै वेदाः' इति अनन्तत्वमपि श्रुतेः प्रमाणसिद्धम्। अत एव दुरवगमोऽप्यय वेदः। तादृशस्य वेदस्य अर्थं बोधयितुमेव प्रवृत्तं मीमांसाशास्त्रम्। वेदः कर्मकाण्डरूपेण ब्रह्मकाण्डरूपेण च द्वेधा यथा विभक्तः, तथैव तदर्थनिर्णयौपयिकं मीमांसाशास्त्रमपि 'कर्म मीमांसा' 'ब्रह्म मीमांसा' चेति द्विधा विभक्तम्। प्रतिपाद्यार्थभेदमुपेक्ष्य यथा कृत्स्नोऽपि वेद· 'वेद' इति नाम्ना व्यपदिश्यते तथैव 'मीमांसा' इति पदेन कृत्स्नं मीमांसाशास्त्र निर्दिश्यते। अत एवानयोः ऐक्यं स्वरसतः प्रतीयते। कर्ममीमांसायाः प्रवर्तकः "जैमिनिः महर्षिः", ब्रह्ममीमांसायास्तु "बादरायणो" महर्षिः प्रवर्तकः। जैमिनिना प्रोक्तानां सूत्राणां व्याख्यानं शबरस्वामिना व्यरचि, यदद्य 'शाबरभाष्यम्' इति नाम्ना प्रथते। तदुपरि कुमारिलभट्टः प्रभाकरश्च स्वस्वमतानसारं

व्याख्यां रचयन्तौ परस्परं भिन्नं प्रस्थानं प्रवर्तयामासतुः । एतस्मिन् प्रस्थानद्वयेऽपि बहवो ग्रन्थाः ग्रथिताः । इत्यास्तामेतत् ।

अथैवं सति व्यासबोधायनटङ्कद्रमिडार्यादिशिष्टपरिगृहीतं पन्थानमवलम्ब्य जैमिनिसूत्राणि व्याख्याचक्रुः कवितार्किकसिंहाः श्रीमद्वेदान्तदेशिकाः । एते काञ्चीमण्डले तूप्पुल् इति ग्रामे, क्रिस्तोः परं त्रयोदशशतके स्वजनिं प्रापुः । तैः स्तोत्रकाव्यं, महाकाव्यं, नाटकं न्यायमीमांसावेदान्तादिशास्त्रग्रन्थाश्च व्यरचिषत । मीमांसारचनायां "सेश्वरमीमांसा", "मीमांसापादुके"ति ग्रन्थद्वयमेतेषां प्राधान्यमावहति । तत्राद्यो ग्रन्थः गद्यरूपः, अपरस्तु पद्यरूपः । उभयोरपि भगवतः विग्रहवत्वफलप्रदत्वादि प्रसाधनमेव प्रधानं चिकीर्षितम् । अत एव सेश्वरमीमांसाप्रस्थानमिदं शाबरप्रस्थानात् भिद्यमानं सत् दार्शनिकक्षेत्रे महत्वमावहति । सेश्वरमीमासा, मीमांसापादुका चेति ग्रन्थद्वयमपि न सम्पूर्णं साम्प्रतम् उपलभ्यते । तत्रापि मीमांसापादुकामधिकृत्यैव वयमत्र लेखनीं व्यापारयामः ।

अथ पूर्वोत्तरमीमांसयोरैकशास्त्र्यं वर्णयन्ति विशिष्टाद्वैतिनः । तत्र प्रमाणानि बहूनि प्रदर्शयन्त्याचार्याः । श्रीमति भाष्ये भगवद्रामानुजाचार्याः "तदाह वृत्तिकारः संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरि"ति विषयेऽस्मिन् वृत्तिकारस्य सम्मतिं प्रदर्शयन्तः वादस्यास्य सम्प्रदायसिद्धत्वमपि प्रकटीचक्रुः । ततः "मीमांसाशास्त्रम् 'अथातो धर्मजिज्ञासा' (पू.मी. १-१-१) इत्यारभ्य 'अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात्' इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्" इति पूर्वोत्तरमीमांसाशास्त्रयोरेकत्वं स्पष्टमुदीरयामासुः श्रीभाष्यकृतः । तदेव मतं श्रुतप्रकाशिकादिग्रन्थेषु निपुणं परिपोषितं भवति । एवमेव स्वाचार्योक्तिं मनागपि अपरिवर्तयन्तः श्रीमद्वेङ्कटनाथार्याः मीमांसापादुकाख्ये ग्रन्थे

''मीमांसेत्येकमेतत् श्रुतिविषयनयस्तोमसङ्ग्राहि शास्त्रं
षट्काध्यायाङ्घ्रिभेदैर्भिदुरतरतनुः सा त्रिभिः काण्डभेदैः ।
सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्या
विंशत्या लक्षणैः खल्वियमवयविनी वृत्तिकारोपदिष्टा ॥''

इति पूर्वोत्तरमीमांसयोरेकत्वं स्थापयामासुः ।

तदिदं मतं पोषयितुं पूर्वोत्तरमीमांसयोरेकवाक्यताप्रतिपत्तिफलकसङ्गतेः प्रदर्शनमपि तत्र तत्र ग्रन्थेषु कृतमस्ति । यन्निरूपणानन्तरं यन्निरूप्यते तयोः परस्परं विद्यमानस्सम्बन्धः सङ्गतिपदवाच्यः । एकवाक्यताप्रतिपत्तिरेव सङ्गतेः प्रयोजनं भवति । अत एवोक्तं पूर्वकाण्डे द्वितीयप्रथमे 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागः स्यात्' इति । सेयं सङ्गतिः पूर्वोत्तरमीमांसयोरपि वरीवर्ति । तत्र विद्यमानान् सङ्गतिविशेषान् सप्तधा न्यरूरुपन् श्रुतप्रकाशिकाचार्याः - यथा (१) पाठक्रमः (२) अर्थस्वभावः (३) कर्मब्रह्मणोरङ्गाङ्गिभावस्वारस्यं (४) कासुचिद् विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्तिः (५) कर्मब्रह्मविद्ययोः दृष्टान्तदार्ष्टान्तिकभावः (६) विद्याकर्मणोः उत्पाद्योत्पादकभावबलेन तच्छेषभूतविचारयोस्तत्क्रमभाक्त्वोपपत्तिः (७) उत्तरभागस्यपूर्वभागोक्तन्याय सापेक्षत्वम् इति । एतेषां निरूपणं प्रबन्धेऽस्मिन् यथामति कृतं वर्तत इति नात्र प्रस्तूयते ।

एवमत्र अधिकरणसारावलीकारोऽपि प्रयोगविधिबलात् किञ्चित निरूपयामास । प्रयोगविधिर्नाम प्रयोगप्राशुभावबोधको विधिः । तत्र पदार्थविशेषणत्वेन नियतं क्रममपि स विधत्ते । स च क्रम· विततिविशेषरूप. पौर्वापर्यरूपो वा । पौर्वापर्यरूपः क्रमस्तु पूर्वकालभवत्वापरकालभवत्वरूप-स्तत्तदङ्गभूतकर्मनिष्ठस्तत्तदङ्गविधिना बोध्यते । क्त्वा प्रत्यय प्रथमादिशब्दरूपा श्रुतिः प्रमाणमत्र । क्वचित् सा प्रत्यक्षरूपा, क्वचित् अर्थादि प्रमाणकल्पितेति पूर्वमीमांसा सरणिः । स च क्रमः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यभेदेन षड्विध ।

सोऽयं क्रमः पूर्वोत्तरमीमांसयोरेकशास्त्रत्वे प्रमाणं भवतीति ।

**''प्रावण्यं प्राक्त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि**
**व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।**
**मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात्पदार्थः**
**दृष्टान्तश्चोपमेयाद् यदि मधु सविधे यातु चाद्रिं किमर्थः ।।''**

इत्यत्र श्रीमद्वेदान्तदेशिकाचार्यः प्रादीदृशत् । अमुमेवाशयं सेश्वरमीमांसायामपि ''काण्डक्रमोऽपि . . . . . . पूर्वभावी''ति ग्रन्थेन प्राचीकशत् आचार्यः श्रीमद्वेदान्तदेशिकः ।

एवं मीमांसापादुकापरित्राणे व्याख्येयवेदभागयोः पूर्वोत्तरयोः येन क्रमेण अध्ययने प्रवर्तते माणवकः, तेनैव क्रमेण तद्व्याख्यानभूतमीमांसाशास्त्रयोरपि प्रवर्तत इति सिद्धमेकशास्त्रत्वं पूर्वोत्तरमीमांसयोरिति सङ्गतिः प्रादर्शि श्रीमत्कुमारवरदाचार्येण ।

एवमत्र उपजीव्योपजीवकभावरूपस्सङ्गतिविशेषोऽपि अत्र सूपपाद इति मीमांसापादुकायां

**''ग्राह्यं सर्वत्र मानं परभजनविधौ भेदतादात्म्यचर्चा**
**तत्रैवाङ्गप्रयुक्ती परिकरघटने मार्गभेदक्रमाप्तिः ।**
**कर्ता वैराग्यपाद प्रभृतिषु, विविधावस्थितिः स्थापनीयः**
**शेषं चाशेषमीदृक् विलगति बहुषु ब्रह्मकाण्डस्थलेषु ।।''** इत्यत्र न्यरूपि ।

एवमत्र उत्तरमीमांसाभागः पूर्वमीमांसाभागनिरूपितनिरुक्तैकवाक्यतावान् पूर्वभागप्रतिपाद्यार्थसङ्गतार्थप्रतिपादकत्वात् इत्यनुमानमपि प्रमाणं भवति । यत् यत्प्रतिपाद्यार्थसङ्गतार्थकं भवति तत् तेन सह एकवाक्यमिति सामान्यमुखी व्याप्तिराद्रियते ।

एवं 'सङ्गतिविशेषेणविशिष्टक्रम'मित्यस्य श्रीभाष्यवचनस्य तात्पर्य बहुग्रन्थाशय पुरस्सरं प्रबन्धेऽस्मिन् प्रदर्शितम् ।

**''अङ्गानि वेदाश्चत्वार: मीमांसान्यायविस्तर: ।**
**पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ।।''**

इत्यादि वचनानुरोधं विद्यास्थानानि चतुर्दशेति प्रतीयते । तत्र मीमांसेति एकवचनावगतस्य एकत्वस्य समादर: कार्य:, अन्यथा अन्यतरस्य मीमांसाशास्त्रस्य विद्यास्थानत्वं भज्येत । अतस्तदुपपत्तये पूर्वोत्तरयो: मीमांसाशास्त्रयोरेकत्वं समादर्तव्यं भवति । युक्तिरियम् अनितरग्रन्थसाधारणा मीमांसापादुकायां 'विद्यास्थानानि चत्वार्यगणिषत' इत्यत्र निर्दिष्टा ।

एवमत्र कर्तृभेद: शास्त्रैकत्वभङ्गप्रयोजक:, परस्पर विरुद्धार्थप्रतिपादकत्वेन एकशास्त्रताभङ्ग:, जैमिनि: देवतानिराकरणवादी इत्यादीनामाक्षेपाणां समुचितं समाधानमपि प्रबन्धेऽस्मिन् प्रदर्शितम् ।

एवम् ऐकशास्त्र्यवादे मीमांसापादुकायामन्यत्र च पोषिता: विशिष्टाद्वैतसिद्धान्ता: यथाशक्ति प्रबन्धेऽस्मिन् सविस्तरमुपपादिता: ।

तत: शास्त्रारम्भसूत्रं विचारार्थम् 'अथातो धर्मजिज्ञासा' इति प्रवर्तते । पूर्वोत्तरमीमांसयोरेकशास्त्रत्वसमर्थनम् अथशब्दस्य स्वारस्यादपीत्यपि ध्येयम् । 'अथातो धर्मजिज्ञासा' इति प्रथमं सूत्रमस्ति । वेदार्थनिर्णायक न्यायकलापसङ्ग्रह एव मीमांसाशास्त्रम् । न्यायो नाम अधिकरणम् । तत्स्वरूपविचारं प्रथमं सुनिपुणं स्तौति मीमांसापादुका । तत: प्रथमाधिकरणविचारं प्रवर्तयति ।

प्रथमाधिकरणविचार: भाट्टै: प्राभाकरैश्च स्वस्वमतानुरोधं प्रवर्तित: यस्तु परस्पर विरोधमावहति । जिज्ञासाधिकरणरचनार्थं 'स्वाध्यायोऽध्येतव्य:' इत्यध्ययनविधिस्वरूपमपि निर्णेतव्यं भवति । अत: प्रथमं भाट्टमतानुरोधमध्ययनविधिस्वरूप प्रदर्शितमत्र । तत: प्राभाकरमतमपि विचारितम् ।

तदुभयमतमपि सुविशदं गवेषणदृष्ट्या विचारितमत्र। यथा - भाट्टमतेन प्रकारद्वये अध्ययनविधेः नियमस्वरूपविचारः, अध्ययनस्य स्वविधिप्रयुक्तत्वम् प्राभाकरमतेन अध्ययनस्य अध्यापनविधिप्रयुक्तत्वम् तदर्थमुपनयनमध्यापनाङ्गमिति पक्षनिर्णयः, इत्यादयः विचाराः प्रस्तुता प्रबन्धेऽस्मिन् । ततः परं भाट्टमतानुसारस्य अधिकरणविचारस्य विशिष्टाद्वैतमतानुरोधं दूषणं विहितम् । ततः प्राभाकररचनाया अपि निरास प्रमाणपुरस्सरं प्रदर्शितः । ततः स्वमतानुरोध मीमांसापादुकाय जिज्ञासाधिकरणरचना प्रवर्तिता । तदर्थमध्ययनविधिविचारोऽपि कृतः । तः अध्ययनस्य फलं नार्थज्ञानं, न वा आचार्यकसिद्धिः, अपि त् अक्षरराशिग्रहणमात्रमिति प्रसाधितम् । एवं विचारोऽपि न वैधः, अपि त् रागतस्सम्भवतीति प्रमाणबलेन प्रदर्शितम् । ततः परं अध्ययनस्य संस्कारकर्मत्वनिरूपणं परपक्षनिरासमुखेन अकारि। स च संस्कारः भगवत्प्रीतिरूप इत्यपि प्रासाधि।

अतः परम् अथातश्शब्दयोरर्थवर्णनं कृत्वा धर्मपदार्थवर्णनमकारि। तत्र धर्मशब्दः सिद्धसाध्यरूपकर्मब्रह्मोभयमपि शक्त्यैव बोधयतीति निरूपितम् । लक्षणामुखेनापि धर्मशब्दस्य भगवद्वाचकत्वं सुसाधमिति प्रदर्शितम्। अथ शब्दः नित्यनैमित्तिककाम्यरूपाणां त्रयाणामपि कर्मणां स्ववाच्यत्वेन बोधयतीत्यपि निरूपितम्। ततः विषयफलयुत शास्त्रमिति प्रथमसूत्रं जैमिनिः प्रावर्तिष्टेति सुनिपुणं मीमांसापादुकायां निरूपितम् । ततः जिज्ञासाशब्दार्थविचारः कृतः मीमांसापादुकायाम्। एवं मीमांसापादुकायां भाट्टप्राभाकरादि प्रस्थानेऽप्यनिरूपिताः बहवः विषयाः कूलङ्कषं विचारिताः इति ग्रन्थोऽयं दार्शनिकक्षेत्रे विशिष्य सेश्वरमीमांसाप्रस्थाने प्रथमं पदमावहतीति चेदत्र नास्त्यतिशयोक्तिः ।

एवं प्रथमाधिकरणे स्वाध्यायाध्ययनानन्तरं धर्मविचार. कर्तव्य इति प्रतिज्ञा कृता। विचारणीयस्य धर्मस्य स्वरूपं लक्षणं च कीदृशमिति विचारयितं प्रवर्तते

द्वितीयमधिकरणम्। अत्रापि विषयशुद्ध्यर्थं प्रथमं भाट्टानुसारम् अधिकरणविच प्रवर्तितः। एव प्राभाकरमतरीत्यापि विचारः प्रस्तुतः। ततः मीमांसापादुका एतदधिकरणविचारः स्वमतानुरोधं कृतः। "चोदना नाम क्रियायाः प्रवर्त वचनमित्याहुः" इति शाबरं वचनम्। तच्च ईश्वराज्ञारूपमित्याचाय मीमांसापादुकाया निरूपयन्ति। तत्र 'श्रुतिः स्मृतिर्ममैवाज्ञा' इति विष्णुधर्मवचन (विष्णुधर्मः - 76/31), एवं 'यः शास्त्रविधिमुत्सृज्य' इति गीता (16-23) याः व्याख्यानभूतं "शास्त्रं वेदाः, विधिः अनुशासनम्" इ भगवद्रामानुजकृतभाष्यवचनमपि प्रमाणं भवति। चोदनाशब्दः पुरुषाभिप्रायमे बोधयतीति प्रतीमः। अत एव 'आचार्यचोदितः करोमीति हि दृश्यते' इ शाबरभाष्यवचनं साधुसङ्गच्छते। यद्येव युज्यते यत् लौकिकवाक्ये पुरुषाभिप्रा एव चोदनाभिधेय इति, तर्हि लोकवेदाविरोधेन वेदेऽपि स एवाभिप्राय चोदनापदाभिलप्य इति स्वीकर्तव्यम्। स चाभिप्रायः परमात्मनिष्ठ इति सिद्धं न स्समीहितम्। एतदेव मनसि निधाय श्रीरङ्गराजस्तवे श्रीपराशरभट्टपादाः

**"आज्ञा ते स निमित्तनित्यविधयः स्वर्गादिकाम्यद्विधिः**
**सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः।**
**सर्वीयस्य समस्तशासितुरहो श्रीरङ्गराजस्य ते**
**रक्षाकूतनिवेदिनी श्रुतिरपि त्वान्नित्यशास्तिस्ततः॥"**

(श्रीरङ्गराजस्तव -२-२४) इति नित्यनैमित्तिक काम्यादिस्थलेषु परमात्मनः अभिप्रायविशेषः कथं वर्तत इति प्रादीदृशन्। तथा चैवं सति ईश्वरमनङ्गीकृत्य अभिप्रायविशेषस्य शब्दनिष्ठत्वेन शाबरभाष्यकृतं वर्णनं युक्तिसहं नेति स्पष्टं प्रतीयते।

एवमस्मिन्नधिकरणे वेदार्थः कार्यरूपो भवति, तच्च कार्यं चोदनाशब्दगम्यम्, सूत्रघटकम् अर्थपदम् अनर्थानुबन्धिन श्येनयागादे-र्व्यवच्छेदपरमित्यादि प्राभाकरमतमप्युपवर्ण्य तस्य निरासोऽपि

मीमांसापादुकाकारेण अनितरसाधारणं व्यधायि। एवं सूत्रघटकधर्मपदेन बौद्धोक्त धर्मादिरग्रहण प्रकारोऽपि वर्णितोऽत्र । सूत्रेणानेन चोदनैव लक्षण प्रमाणमिति, चोदनालक्षणमेवेति समासद्वयेन प्रतिज्ञाद्वयलाभ. प्रदर्शित: । तत्राद्या प्रतिज्ञा प्रत्यक्षसूत्रे समर्थयिष्यते, द्वितीया तु औत्पत्तिक सूत्रादाविति विवेक: ।

तृतीयाधिकरणे 'तस्य निमित्तपरीष्टि.' इति सूत्रेण धर्मस्य प्रमाण परीक्षणं कार्यमिति प्रसाधितम्। तदर्थ पर्वोत्तरपक्षौ प्रस्तावितौ। तत्र सूत्रार्थवर्णनावसरे उपवर्ष: नञ: अध्याहारं कृत्वा धर्मस्य निमित्तपरीक्षणं न कार्यमिति प्रत्यपादयत् । तदिदमौपवर्षकथनं पूर्वपक्षानुसारमिति अन्वारुह्य वचनत्वेन मीमांसापादुकायां प्रदर्शितम्। ततः सूत्रे घटितानां प्रयोजनं प्रकटीकृतम्। तस्मिन्नेवावसरे निमित्तपदं शास्त्रयोनित्वादित्यत्र योनिशब्दवत् प्रमाणपरमिति प्रमाणपुरस्सरं प्रदर्शितम्।

चतुर्थेऽधिकरणे प्रत्यक्षादेर्धर्माप्रमाणत्वं प्रसाधितम् । तत्र प्रथमं भाट्टाभिमतम् अधिकरणवर्णनं प्रस्तुतम् । भाट्टाः खलु अधिकरणेऽस्मिन् प्रत्यक्षादीनामपि प्रामाण्याविशेषात् धर्मे तेषामपि प्रामाण्य सम्भवात् कथं चोदनैव प्रमाणं धर्मे भवतीति प्रतिज्ञा युक्तेति पूर्वपक्षं प्रस्तूय विद्यमानोपलम्भत्वात् प्रत्यक्षादि अलौकिकभूते धर्मे प्रमाणं न भवितुमर्हति इति सिद्धान्तं प्राणैषुः । परं तु मीमांसापादुकाकृता पूर्वोक्तसिद्धान्त एव अनेकाभिः नवीनाभिः युक्तिभिः प्रतिष्ठापितः। यथा पूर्वपक्षप्रसङ्गावसरे 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति भट्टकुमारिलवचनानुरोधं धर्मस्वरूपाणां द्रव्यक्रियागुणादीनां प्रत्यक्षवेद्यत्वं सुकरमेवेति धर्मे प्रत्यक्षाद्यपि प्रमाणं भवतीति काचन नवीना युक्ति: प्रतिपादिता। तस्य पूर्वपक्षस्य खण्डनावसरे मीमांसापादुकाकारैः द्रव्यक्रियागुणादीनां धृतिजनकतारूपेण धर्मत्वस्वीकारात् न कोऽपि दोष इत्यभिधायि। धृतिर्नाम प्रीतिः। सा च भगवन्निष्ठा। सैव चोदनापदाभिलप्या। सा तु अतीन्द्रियेति न पूर्वपक्षकथनं युक्तम्। एतच्च सिद्धसाध्योभयधर्मसमानमिति प्रत्येतव्यम्। ततः सूत्रघटकपदानां सार्थक्यं प्रदर्शितम । तत्र परुषपद निवेशस्य पयोजनवर्णनावसरे तेद्रेन्द्रियमन:

प्राणविज्ञानेभ्यः भिन्नः जीव इति प्रदर्शनार्थमेव पुरुषपदं प्रयुक्तमिति मीमांसापादुकायां प्रोक्तम्। तदिदं न कुत्रचित् मीमांसाग्रन्थेषु भाष्यादिषु अवलोक्यत इति आचार्याः विशिष्टं स्थानमावहन्ति मीमांसाशास्त्रे।

एवमेव आचार्यपादैः सूत्रस्यास्य सत्तत्पदयोः व्यत्यासं कृत्वा सूत्रार्थं वर्णयतः उपवर्षस्य मतं महता आदरेण समर्थितम्। परं तु तन्मतं भाट्टैः खण्डितम्। भाट्टकृतं खण्डनं न युक्तसहमिति प्रमाण पुरस्सरं प्रदर्श्य औपवर्षमतं स्थापितमत्र। अनेन सत्सम्प्रदाये वेदान्ताचार्याणां कियानादरः आसीदिति अभ्यूहितुं वयं शक्नुमः। न चैवं सति वृत्तिकारस्य उपवर्षाचार्यस्य अभिमतं प्रमाणषट्ककथनं किमर्थं विशिष्टाद्वैतिना नाद्रियत इति वाच्यम् , तत्र गोबलीवर्दन्यायेन समाधानं विहितम्। यथा गामानय बलीवर्दमानयेति प्रयोगमात्रेण न बलीवर्दस्य गोभिन्नत्वमिष्टं तथा पृथक्पाठमात्रेण अर्थात् प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः प्रमाणानि षडिति कथनमात्रेण न प्रमाणभेदो भवति।

एवमधिकरणेऽस्मिन् योगिप्रत्यक्षस्यापि धर्मं प्रति अनिमित्तत्वं स्थापितम्। आगमत्वाविशेषेण सुगताद्यागमस्य धर्मं प्रति निमित्तत्वं स्यादिति पूर्वपक्षमुत्थाप्य बौद्धधर्मस्य तदावेदकागमस्यापि अप्रामाण्यं प्रसङ्गात् अत्र निरूपितम्। अन्ते सूत्रेणानेन जगत्सत्यत्वमप्युपवर्णितमिति आचार्यैः प्रतिपादितम्। अधिकरणेनानेन चोदनैव धर्मे प्रमाणमिति चोदनासूत्रे प्रतिज्ञातस्य प्रतिष्ठापनं कृतम्।

औत्पत्तिकसूत्रेण पञ्चमेऽधिकरणे चोदना प्रमाणमेवेति चोदनासूत्रे कथितायाः द्वितीयप्रतिज्ञायास्समर्थनं कृतम्। तत्र प्रथमं भाट्टमतानुरोधमधिकरणार्थः प्रदर्शितः। ततः परं सेश्वरमीमांसाग्रन्थानुसारं वर्णनं कृतम्। ततः मीमांसापादुकारीत्या वर्णनमकारि। अयमत्र विशेषः - भाट्टमते शब्दः तदर्थः तयोस्सम्बन्धश्चेत्येतत् त्रयमपि नित्यम्। अस्माकं तु मते शब्दार्थयोर्न नित्यत्वमभिमतम्। अत एव तयोस्सम्बन्धः प्रत्याय्यप्रत्यायकभावरूपस्सम्बन्धः स्वाभाविक इत्यङ्गीक्रियते

विशिष्टाद्वैतमते। तदेव सूत्रघटकेन औत्पत्तिकपदेन ज्ञापितमिति ब्रुवन्ति ते। औत्पत्तिको नाम स्वाभाविकस्सम्बन्धः । स्वाभाविकत्वं चात्र आप्रलयावस्थायित्वमेव। ज्ञानगतं प्रमात्वं स्वतः उत्पद्यते ज्ञायते चेत्यत्र भाट्टप्राभाकरयोरस्माकं च न परस्परं भिन्नं मतं दृश्यते। अत एव सेश्वरमीमांसायां स्वतस्त्ववादः बहुप्रपञ्चितः यस्त्वत्रापि अस्माभिः प्रदर्शितः । दोषराहित्यमेव प्रामाण्यहेतुरिति ब्रूमः। सूत्रघटकानां पदानां प्रयोजनमभिहितमत्र। तत्र सूत्रघटकस्य उपदेशपदस्य अर्थः भगवदुपदेशः वेदः चोदनापरपर्याय इति प्रतिपादितम्। 'श्रुतिः स्मृतिर्ममैवाज्ञा' इत्यादिवचनमत्र प्रमाणं भवति। अत एव श्रुत्यादि विरुद्धजैनग्रन्थादरो न कार्य इति प्रसङ्गादस्मिन्नधिकरणे मीमांसापादुकायां निरूपितम्। तथा च चोदनाजनित प्रत्ययः श्रेयस्साधनार्थप्रकाशरूपः कारणदोषबाधकप्रत्ययविरहात् अनपोदितप्रामाण्यः अवतिष्ठत इति अधिकरणार्थस्सिद्धः।

अत्रैव प्रसङ्गात् चित्राक्षेपग्रन्थः शाबरभाष्ये तद्व्याख्याग्रन्थेषु च प्रवर्तितः। स तु मीमांसापादुकायामपि विचारितः। चित्रायागे कृते सति अव्यवहित क्षण एव फलं न दृश्यत इति चित्रावाक्यं न प्रमाणमिति पूर्वपक्षं प्रस्तूय फलसाधनतयैव चित्रायागस्यात्र बोध्यते न त्वानन्तर्यमपीति प्रमाणपुरस्सरं प्रदर्श्य चित्राचोदनायाः प्रामाण्यं प्रतिष्ठापितम्। तत्रैव चित्राफलस्य ऐहिकत्वं वा आमुष्मिकत्वं वेति विषयमुत्थाप्य चित्राफलस्य अनियमतामुपपादयन्ति मीमांसापादुकाकाराः।

इतः परमात्मवादः प्रस्तुतः। अत्र देहेन्द्रियादि विलक्षणः आत्मेति निरूपितम्।

ततः प्रामाण्यं नाम प्रमाणस्य भावः, प्रमाणं तु प्रमाकरणमेवेति प्रमात्वं नाम किमिति जिज्ञासायां प्रमात्वनिर्वचनं मीमांसापादुकायां प्रास्तावि। तत्र प्राभाकरमतस्य विमर्शोऽपि कृतः। प्राभाकरमताभिमतं प्रमात्वं निर्दुष्टमेवेति अस्माभिः प्रादर्शि। ततः परं ख्यातिवादः न्यायमतेन प्राभाकरमतेन विशिष्टाद्वैतमतेन

च विचारित: । एवं पञ्चमाधिकरणं विचारितम् ।

षष्ठेऽधिकरणे शब्दार्थयो: विद्यमानस्य वाच्यवाचकभावरूपस्य सम्बन्धस्य नित्यत्वं स्थाप्यते । एतत्तु पूर्वस्मिन् सूत्रे औत्पत्तिकपदेन केवलं सूचितं न निरूपितमिति न पौनरुक्त्यम् । एवं पदस्यापि अनादित्वरूपं नित्यत्वं स्थाप्यतेऽत्र । परं तु शाबरा: वर्णानां नित्यत्वस्वीकारेण वेदस्यप्रामाण्यं प्रतिष्ठापनाय एतस्मिन्नधिकरणे विद्यमानानां सूत्राणामर्थवर्णनमकार्षु: । तदिदं वर्णनित्यत्वकथनं न साधु इति सेश्वरमीमांसायां मीमांसापादुकायां च उपपादितम् । तदत्र समायोजितम् । अत्र संस्कृतभाषाया: महत्ववर्णनं स्फोटवादनिरास: इत्यादयोऽपि विषया: विवेचिता: । एवं प्रतिसूत्रं शाबरव्याख्यानमपि प्रदर्श्य तस्य विमर्शोऽपि यथाग्रन्थमत्र कृत: ।

सप्तमेऽधिकरणे वेदवाक्यानामर्थप्रत्यायकत्वं समर्थितम् । शाबरा: पुन: लौकिकवैदिकोभयसाधारणं सर्वमपिवाक्यं विषयीकृत्य वाक्यात् वाक्यार्थज्ञानं सम्भवति वा न वा ? अथवा वाक्यस्य वाक्यार्थप्रत्यायकत्वं सम्भवतीति निर्णयं एवास्य अधिकरणस्य मुख्यं कृत्यमिति वर्णयन्ति । तदिदं वर्णनं मीमांसापादुकाकृता निराकृतम् । यत: सामान्यत: शब्दप्रामाण्यस्थापनं तु न्यायदर्शनकृत्यमिति सामान्यवाक्यानां विचारस्यात्यन्तमत्रानपेक्षितत्वात् । अत: वेदवाक्यानामर्थप्रत्यायकत्वं सम्भवति वा न वेति संशयमुत्थाप्य वेदवाक्यानामर्थप्रत्यायकत्वं सम्भवतीति निर्णय एव कार्य इति विचारणीयमत्र । शाबर व्याख्यानप्रस्तावे प्रसङ्गात् अन्विताभिधानाभिहितान्वयवादयो: प्रस्तावोऽपि कृत· । मीमांसापादुकोत्थमन्विताभिधानवादस्य निर्दोषत्वमपि प्रदर्शितमत्र ।

अष्टमेऽधिकरणे वेदस्यापौरुषेयत्वं स्थापितम् । तत्र प्रथमं शाबरभाष्यारूढं वर्णनं कृतम् । तत: परं मीमासापादुकारीत्या अधिकरणार्थो विवेचित: । काठकादिशब्देन वेदस्य पौरुषेयत्वशङ्कायास्समाधानं काठकादिपद तु

प्रवचननिमित्तपरमिति कृतम्। अत्रैव अभिनवदेशिकानां श्रीमतां वीरराघवाचार्याणां काचन युक्तिरपि अस्माभिरस्मिन् ग्रन्थे समायोजिता। तथा हि - वेदस्य अनन्तत्वात् सर्वशाखाध्ययन परिमितायुषां पुरुषाणां दुश्शकमिति वेदव्यासोमहर्षिः परमकारुणिकस्सन् वेदस्य अनन्तशाखायाश्च लोपो मा भूदिति एकैकं महर्षिम् एकैकशाखाध्ययने नियोजयामास। त एव कठादयः कूटस्थाः। तदेव काठकादि नाम्ना कीर्त्यत इति। वेदस्य नित्यत्वं च समानरूपेण प्रतिकल्पमुच्चार्यमाणत्वम् अथवा पूर्वानुपूर्वी सापेक्षोच्चार्यमाणत्वम्। 'ब्रह्म स्वयम्भू अभ्यानर्षत्' इत्यादि श्रुतिवाक्यमेव तत्र प्रमाणम्। अन्ते सेयं द्वादशाध्यायी ब्रह्ममीमांसायाः परमोपजीव्येतिमीमांसापादुकाकृता न्यरूपि।

एवं प्रथमाध्यायस्य प्रथमपादार्थः मीमांसापादुकायां निरूपितः यश्चात्रास्माभिः यथामति विवेचितः।

मीमांसापादुकाग्रन्थः प्रथमाध्यायस्य प्रथमपादं यावदेव उपलब्ध इति अस्माभिरपि तावानेव भाग. विवेचितोऽत्र। ग्रन्थोऽयमत्यन्तं गम्भीरः अथ च श्लोकबद्धः, अत एव मादृशानां दुरूह इति तत्र अभिनवदेशिककृतः सत्पथसञ्चारः श्रीमत्कुमारवरदाचार्य कृत परित्राणग्रन्थश्च अस्माकम् अत्यन्तमुपकुरुतः विषयावगत्यै। अत एव प्रबन्धेऽस्मिन् विषयविवेचनावसरे स्वच्छन्दं कमपि नवीनं मार्गमवलम्ब्य लेखिनी व्यापारिता। परं तु मीमांसापादुकायाः पूर्वोक्त व्याख्याद्वयावलम्बनमेव परमं कृत्यमस्माकमस्ति।



# १. ऐकशास्त्र्यवादः

जैमिनिप्रवर्तितस्य मीमांसाशास्त्रस्य बादरायणप्रवर्तित मीमांसाशास्त्रस्य च समानशास्त्रत्वमभिप्रयन्ति विशिष्टाद्वैतिनः । तदिदमेकशास्त्रत्वसमर्थनं बहुप्रमाणपुरस्सरं तत्र तत्र ग्रन्थेषु निरूपितं वर्तते । तत्र तावत् पूर्वाचार्योक्तिं मनागपि अपरिवर्तयता श्रीमतां वेदान्तदेशिकानां मीमांसापादुकाख्ये ग्रन्थे पूर्वोत्तरमीमांसयोरेकशास्त्रत्वसमर्थनावसरे

**''मीमांसेत्येकमेतत् श्रुतिविषयनयस्तोमसङ्ग्राहि शास्त्रं**
**षट्काध्यायाङ्घ्रिभेदैर्भिदुरतरतवुः सा त्रिभिः काण्डभेदैः ।**
**सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्या**
**विंशत्यालक्षणैः खल्वियमवयविनी वृत्तिकारोपदिष्टा ॥''**

इति पद्यं वरीवर्ति । अस्याशयं यथासम्प्रदायं सम्प्रति निरूप्यते । तथापि - प्रतिपाद्यवस्तुनः भेदाभावात् शास्त्रैक्य सिद्धिरिति प्रथमो हेतुः । तथाहि - विषयैक्यात् शास्त्रैक्यमित्युक्तं भवति । मीमांसायाः पूर्वभागः वेदार्थं यथा विषयीकरोति तथैव उत्तरभागोऽपीति तु सर्वसम्प्रतिपन्नमेतत् । तथा च वेदार्थविचारे श्रुतिः प्रमाणपदवीमलङ्करोति । न्यायकलापस्तु तत्र विषयपदमधिरोहति । तन्न्यायकलापसङ्ग्राहकं यत् शास्त्रं भवति तत् पूर्वमीमांसा यथा भवति तथा उत्तर मीमांसापीति मीमांसाद्वयस्यापि विषयैक्यसम्भवस्सुसाध इत्युपपादयति **मीमांसेत्येकमेतत् श्रुतिविषयनयस्तोमसङ्ग्राहिशास्त्रमित्यन्तेन** । एतावता मीमासायाः पूर्वभागस्य उत्तरभागस्य च कर्मब्रह्मभेदेन विषयभेदात् न शास्त्रैकत्वसिद्धिरिति कथन दूरीकृतं भवति । वेदार्थनिर्णायका ये न्यायकलापाः तत्सङ्ग्राहकं शास्त्रं मीमांसेति कथनेन पूर्वोत्तरभागयोरेकत्वं [illegible]

सत्पथसञ्चारकृता मीमांसापदमत्र [1]श्रुत्यर्थनिर्णयार्थपक्षप्रतिपक्षसाधकन्यायद्वयादि-रूपाधिकरणसमुदायरूपत्वं मीमांसात्वमिति व्यवारि। निर्णयात्मको विचार एव मीमांसापदवाच्य इति शास्त्रविदां मतम्। [2]विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय'' इति गौतमीयं सूत्रमपि अमुमेवार्थं द्रढयति। न च, कर्मकाण्डदेवताकाण्डब्रह्मकाण्डभेदेन व्यवहारसत्त्वात् पूर्वोत्तर-मीमांसयोरेकप्रबन्धत्वं न युक्तमिति शङ्क्यम्। यथा पूर्वभागे प्रमाणकर्मशेषत्वप्रयुक्तिक्रमाधिकारसामान्यविशेषातिदेशऊहबाधतन्त्रप्रसङ्गादि भेदेन अध्याय भेदसत्त्वेपि न शास्त्रस्य भेदस्समीहितः, यथा वा पूर्वभागे उपदेशातिदेशभेदेन षट्कभेदस्वीकारेऽपि शास्त्रैक्यं न पराहतम्, तथैव अत्रापि काण्डभेदो न शास्त्रभेदे प्रमाणं भवितुमर्हतीति एतत्सर्व समग्राहि आचार्यपादैः ''[3]षट्काध्यायाङ्घ्रिभेदैर्भिदुरतरतनुः सा त्रिभिः काण्डभेदैः'' इति। अपि च त्रयाणां कर्म, देवता, ब्रह्मादि बोधपराणां काण्डानां परस्परं क्रमनियमिका सङ्गतिरपि समुचिता दरीदृश्यत इति द्योतयितुं प्रवर्तते मीमांसापादुकाकारः 'सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्ये''ति।

अत्रेत्थमभिधीयते - यन्निरूपणानन्तरं यन्निरूप्यते तयोः परस्परं वर्तमानस्सम्बन्धस्सङ्गतिशब्दवाच्यः। एकवाक्यताप्रतिपत्तिरेव सङ्गतेः प्रयोजनं भवति। सङ्गतिराहित्ये भिन्नवाक्यत्वमेव प्रतीयेतीति हि शास्त्रविदः। अत एव ''[4]अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागः स्यादि''ति द्वितीयप्रथमे पूर्वतन्त्रे जैमिनिस्सूत्रयामास। अत्रायं भावः - साकाङ्क्षत्वे सति समानार्थ (एकार्थ) बोधपरत्वमेव एकवाक्यत्वम्। इदमेव एकवाक्यत्वं सर्वत्र यथा अध्यायेषु द्वादशसु पूर्वतन्त्रे पश्यामः, तथैव उत्तरतन्त्रेऽपि स्वीकारे न कापि क्षतिः। यथा वा पूर्वमीमांसायां प्रथमाध्यायः द्वितीयाध्यायेन सह एकवाक्यतावान् प्रथमाध्याय-प्रतिपाद्यार्थसङ्गतार्थप्रतिपादकत्वात् इत्यनुमानमपि प्रथमाध्यायद्वितीयाध्याय-योरेकवाक्यताप्रतिपत्तौ प्रमाणं समीहितं, तथैव पूर्वोत्तरमीमांसयोरपीत्यवधेयम्। अत्रेत्थमनुमानमभीप्सितम् - 'उत्तरमीमासाभाग. पूर्वमीमांसाभागनिरूपित निरुक्तैकवाक्यतावान् पूर्वभागप्रतिपाद्यार्थसङ्गतार्थ प्रतिपादकत्वात्' इति। अत्र यत्

यत्प्रतिपाद्यार्थसङ्गतार्थकं भवति तत् तेन सह एकवाक्यमिति सामान्यव्याप्ति स्वीकारेण जिज्ञासाधिकरणेन सह एकवाक्यतापन्नं जन्माद्यधिकरणं दृष्टान्तो भवति। पूर्वोत्तरभागयो र्मीमांसयो: परस्परं साकाङ्क्षत्वं कथं स्यादिति चेद् - अत्र ब्रूम: - '[5]स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिना प्राप्तस्य अध्ययनस्य अर्थज्ञानप्रयोजनत्वात् अधीतसाङ्गसशिरस्कवेदेन प्रथमं कर्मविचारे प्रयत्नो विधीयते। तदानीम् ''[6]इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभि:'' इत्यादि श्रुतिवचनं मनसि निधाय कर्माराध्य: क इति आकाङ्क्षा उत्पद्यते। एवं ''[7]तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेने''त्यादि श्रुतिवचनमभिसन्धाय कर्म कस्य अङ्गं भवतीति आकाङ्क्षा उदेति। एतादृशस्य आकाङ्क्षाद्वयस्यापि विषयसिद्धिसम्पादनेन ब्रह्मकाण्डस्य निवर्तकत्वं सुतरामुपपद्यत इति सिद्धं पूर्वोत्तरमीमांसयोरैकशास्त्र्यम्।

## श्रुतप्रकाशिकाकारमतेन सङ्गतिविशेषप्रदर्शनम्

अत्राहु: श्रुतप्रकाशिकाकृत: - [8]सङ्गति विशेषास्सप्त पूर्वोत्तरमीमांसयोरेकप्रबन्धत्वसमर्थनाय विद्योतन्ते। पाठक्रमस्तत्र आद्यो वरीवर्ति। व्याख्यानभूतमीमांसाया: व्याख्येये वेदे प्रथमं कर्मनिरूपणमेव दृश्यते अन्ते तु उपनिषद्भाग इति पाठक्रमस्य सङ्गतित्वं सूपपादम्। तथाचाभिहितमन्यत्र सुदर्शनाचार्यै: ''कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमिति'' (श्रुतप्रकाशिका 1-1-1) इति।

अर्थस्वभावरूपो द्वितीयो भवति। तथा हि - अधीतवेदानां सर्वेषां न प्रथमं ब्रह्मविचारे प्रवृत्तिरुदेति अर्थस्वाभाव्यात्। स्वर्गादिफल एव प्रथम प्रावण्यसम्भवात्। अत: चेतनानां त्रिवर्गे प्रथमप्रावण्यसम्भवरूपोऽर्थस्वभावो द्वितीयस्सङ्गतिविशेष:।

कर्मब्रह्मणोरङ्गाङ्गिभावस्वारस्यं तृतीयो भवति। तथा हि - ''तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन''

[9]''यज्ञदानतप: कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञोदानं तपश्चैव पावनानि मनीषिणाम् ॥''
''यत: प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव: ॥''

इत्यादि श्रुतिस्मृतिवचनानुरोधं कर्मब्रह्मणोरङ्गाङ्गिभाव: अवश्यमभ्युपेतव्यो भवति। तथा च औपनिषदेषु अङ्गाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मण: पदार्थत्वेन सम्बन्ध: स्वीकर्तव्य इति तस्य सङ्गतित्वं निराबाधम् ।

कासुचिद् विद्यासु यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्ति: चतुर्थस्सङ्गतिविशेष: । अस्यायं भाव: - तैत्तिरीयके ''[10]तस्यैवं विदुषो यज्ञस्यात्मा यजमान: श्रद्धा पत्नी शरीरम् इध्ममुरो वेदि र्लोमानि बर्हि: शिखा हृदयं यूप: काम आज्यं मन्यु: पशु''रित्यादिना पुरुष विद्या प्रस्तुता। तत्र यज्ञतदुपकरणादीनां दृष्टि-विशेषणत्वेन वर्णनात् तत्राम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति ''[11]पुरुषविद्यायामपि चेतरेषामनाम्नानात्'' इत्यत्र निरूपणात् कर्मब्रह्मणोरङ्गाङ्गिभावस्य दुरपह्नवत्वात् पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं सुसाधं भवति ।

कर्मब्रह्मविद्ययो: दृष्टान्तदार्ष्टान्तिकभाव: पञ्चम: । तथा हि - ब्रह्ममीमांसायां दृष्टान्तरूपेण पूर्वमीमांसान्याया बहव उपादीयन्ते । अत एव बहुत्र सूत्रकृतैव उक्तशब्देन पूर्वतन्त्रन्यायास्तत्र तत्र समग्राहिषत । यथा - '[12]प्रदानवदेव तदुक्तम्' इत्यादि । एवं क्वचित् पूर्वतन्त्रसूत्रमपि स्मारितं यथा - ''[13]विधि र्वा धारणवत्'' इत्यत्र उत्तरतन्त्रे ''[14]विधिस्तु धारणेऽपूर्वत्वात्'' इति पूर्वतन्त्रसूत्रम् । एवं क्वचित् आदिशब्देनापि पूर्वतन्त्रार्थस्स्मारित: यथा ''[15]सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि''त्यत्र आदिशब्देन ''[16]एकं वा संयोगरूपचोदनाख्याविशेषात्'' इति शाखान्तराधिकरणनिरूपितास्संयोगरूपाख्यानां ग्रहणं समीहितम् । एवमन्यान्यपि वचनानि तत्र तत्र प्रदर्शितानि दृष्टान्तदार्ष्टान्तिकरूपाणि ग्रन्थबाहुल्यभिया नात्र प्रदर्श्यन्त इत्यलमतिचर्चया ।

विद्याकर्मणोरुत्पाद्योत्पादकभावात् तच्छेषभूतविचारयोस्तत्क्रम-भाक्त्वोपपत्ति: षष्ठ: । ''तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन

तपसा अनाशकेन'' इति श्रुतिवचनानुसारं विद्योत्पादकस्य कर्मणः प्रथमं विचारणीयत्वात् उत्पाद्यायाः विद्यायास्तु तदनन्तरमिति क्रमनियमोपपत्तेः । तथा सति उभयोरपि कर्मब्रह्मप्रतिपादकयोर्मीमांसाभागयोरेकप्रबन्धत्वं निर्व्यूढम् ।

व्याख्यानभूतमीमांसायां च उत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वं नाम सप्तमस्सङ्गतिविशेषः । अत्र वक्तव्यं सर्वं पञ्चमे प्रागेव प्रादीदृशामेत्यधिकं किञ्चिदत्र ततोऽपि प्रस्तोतुं न चेष्टते मनः । न च तथा सति पञ्चमसप्तमयोस्सङ्गति विशेषयोरेकार्थत्वे पौनरुक्त्यापत्तिरिति शङ्कयम्, यत्र दृष्टान्तदार्ष्टान्तिकभावः कण्ठतस्सूत्रारूढः तत्रैव सङ्गतिविशेषः परस्परं पूर्वोत्तरतन्त्रयोः पञ्चमे न्यरूपि । सप्तमे तु यत्र सूत्रारूढः नास्ति दृष्टान्तदार्ष्टान्तिकभावः, तथापि सूत्रभाष्यादिग्रन्थेषु यत्र पूर्वतन्त्रन्यायाः समग्राहिषत, तत्र सप्तमस्य सङ्गतिविशेषस्य प्रयोजनमिति न किञ्चिदनुपपन्नं नाम । एवं सप्तधा सङ्गतिविशेषान् निरूप्य पूर्वोत्तरतन्त्रयोरेकशास्त्रत्वमूरीचक्रुः श्रुतप्रकाशिकाचार्याः ।

## अधिकरणसारावलीकृन्मतेन सङ्गतिविशेषप्रदर्शनम्

अत्रेत्थमभिदधति वेदान्तदेशिकाचार्याः

''[17]**प्रावण्यं प्राक्त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि**
**व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौस्याच्च मुख्यक्रमेण ।**
**मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात्पदार्थः**
**दृष्टान्तश्चोपमेयाद् यदि मधु सविधे यातु चाद्रिं किमर्थः ।।** इति ।

अस्यायं भावः - अनादिकालादेव अभ्यस्ततया प्रथमप्रावण्यं प्रायस्सर्वेषामपि मानवानां त्रिवर्ग एव सम्भवतीत्यत्र न कोऽपि विप्रतिपद्यते । तथा च अर्थक्रमाख्यप्रमाणेन प्रथमं कर्मविचारः पश्चात् ब्रह्मविचार इत्युक्तं भवति । एवमुपासनाङ्गत्वेन कर्मणः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेने'त्यादौ प्रतीयमानत्वात् प्रथममङ्गस्य विचारस्तदनु प्रधानस्य विचार इति पूर्वतन्त्रसिद्धत्वात् कर्मब्रह्मविचारयोः पौर्वापर्यविचारकथनं सुसङ्गतं भवति ।

अत्रेदमाकूतम् - प्रयोगविधिः स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। स च क्रमः वितति विशेषः पौर्वापर्यरूपो वा। वितति र्नाम विस्तारः। तथा च विस्तारविशेषरूपः क्रमः सर्वाङ्गघटित समुदायनिष्ठः अङ्गवाक्यैकवाक्यतापन्न प्रधानविधिरूप प्रयोगविधिना बोध्यते। स च अर्थादिप्रमाणकल्पितो भवति। पौर्वापर्यरूपः क्रमस्तु पूर्वकालभवत्वापरकाल-भवत्वरूपस्तत्तदङ्गभूतकर्मनिष्ठस्तत्तदङ्गविधिना बोध्यते। क्त्वाप्रत्यय प्रथमादि शब्द रूपा श्रुतिः प्रमाणम्। क्वचित् सा प्रत्यक्षरूपा, क्वचित् अर्थादिप्रमाण कल्पितेति पूर्वमीमांसकानां राद्धान्तः। स च क्रमः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यभेदेन षड्विधः। तत्र प्रयोजनवशेनार्थनिर्णयो यत्र स आर्थः क्रमः। यथा - 'अग्निहोत्रं जुहोति', 'यवागूं पचति' इति च श्रूयते। तत्र प्रयोजनवशात् नियमः स्वीकृतः। होमपाकयोः विधेयत्वे समाने सति कस्य प्रथमानुष्ठानं भवतीति विशये "[18]अर्थाच्चेति" पञ्चम प्रथमे पूर्वतन्त्रे प्रयोजनवशात् पाकस्यैव प्राथम्यं विहितमिति प्रतीमः। होमद्रव्यं हि यवागूः। तदुत्पत्त्यर्थं श्रुत्या लिङ्गेन च पाकः विहितः। स पश्चात् क्रियमाणोऽनर्थकः अदृष्टार्थश्च भवति। अतः पक्त्वा होमः कार्य इति निर्णयः कृतस्तान्त्रिकैः। तथैव परस्परं कर्मब्रह्मणोरङ्गाङ्गिभावस्य प्रतीयमानत्वात् तत्र तत्र श्रुत्यादौ, अधीतसाङ्गसशिरस्कवेदेन प्रथमं कर्मविचारस्यैव कर्तव्यत्वापातात्, अन्यथा ब्रह्मविचारानन्तरं कर्मविचारस्य नैरर्थक्यप्रसङ्गात् प्रथमं कर्मविचारः कार्यस्ततो ब्रह्मविचार इति सिद्धं नस्समीहितम्।

एवं मुख्यक्रमेणापि कर्मब्रह्मविचारयोः पौर्वापर्यं वर्णनीयं भवति। यथा - "[19]सारस्वतो भवत एतद्वै दैव्यं मिथुनमि"ति श्रुतिः। अत्र स्त्रीपुंदेवत्यं भागद्वयं विहितम्। सारस्वतीयागः प्रथमं कार्यः, तदनु सरस्वानिति यागः। यथा प्रधानयोर्द्वयोरेवं क्रमः तद्वदेव तदङ्गानामपि निर्वापादीनां क्रम इति मुख्यक्रमेण प्रतीयते। तथैव व्याख्येयोः कर्मब्रह्मपरभागयोः (वेदस्य) यादृशः क्रमो दरीदृश्यते स एव क्रमो विचारावसरेऽपि ग्राह्य इति कर्म ब्रह्मविचारयोः पौर्वापर्यनियतिक्रमस्तु सुसम्पन्नः। विस्तरेण क्रमविचारस्तु पूर्वतन्त्रे पञ्चमप्रथमे द्रष्टव्य इत्यलमति-चर्चया।

अपि च वेदस्य प्रामाण्यसिद्धिमन्तरा विचारस्य साफल्यं न सिद्ध्यतीति प्रथमं प्रमाणाध्यायः निरूपणीयो भवति । एवमेव भेदाङ्गत्वादि निरूपणपराणामध्यायानामपि क्रमनिबद्धत्वमूह्यम् ।

अपि च "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इत्यत्र चोदनादिपदार्थस्यावगतिः "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति पूर्वतन्त्रसूत्रवाक्यजन्येति पूर्वमीमांसायाः उत्तरमीमांसायाश्च क्रमनियतिरवश्यमङ्गीकरणीया। एवं "प्रदानवदेव तदुक्तम्" "विधिर्वा धारणवत्" इत्यादि स्थलेषु दृष्टान्तभावप्रदर्शनेनापि सिद्धं पूर्वोत्तरमीमांसयोस्समानतन्त्रत्वम्। एवं कर्मजन्यफले यदा अमृतत्वज्ञानं भवति तर्हि प्रथमं कर्मविचार एव हि स जनः प्रयतेतेत्येवमादिभिः युक्तिविशेषैः पूर्वोत्तरतन्त्रयोरेकप्रबन्धत्वं प्रत्यपीपदन् वेदान्तदेशिकाचार्याः ।

एतेन [20]"काण्डक्रमोऽप्यध्यायादिक्रमवत् अर्थप्राप्तः । वेदप्रामाण्यमन्तरेण हि विचारः सर्वोऽपि न सेत्स्यतीति प्रमाणलक्षणेन प्रागेव भाव्यम् । अथ च कर्मोपक्रमतया प्रायो वेदानाम्, तदितिकर्तव्यताभागयोरपि सारस्वताङ्गन्यायेन मुख्यक्रमानुसारात्, अनाद्यभ्यस्तत्रिवर्गप्रथमप्रावण्यरूपार्थक्रमात्, अनन्तस्थिर-फलापातप्रतीत्यादेश्चोभयत्राविशेषात्, कर्ममात्रेण चामृतत्वसम्भावनायाम् 'अर्के चेन्मधु विन्देत' इति न्यायात्, पदार्थवाक्यार्थभाव दृष्टान्तदार्ष्टान्तिकभावादेश्च पौर्वापर्यनियामक प्रमाणविशेषात् कर्मविचारः पूर्वभावी ।" इति सेश्वरमीमांसाग्रन्थोऽपि व्याख्यातः ।

## कुमारवरदाचार्यमतेन सङ्गतिविशेषप्रदर्शनम्

अत्राह मीमांसापादुका परित्राणकारः - [21]अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयेत् इत्यत्र उपनयनस्य अध्ययनस्य च परस्परं प्रतीयमानः अङ्गाङ्गिभावः प्रायस्सर्वतीर्थङ्करैरपि अभ्युपगम्यते । उपनयनमध्यापनाङ्गमिति वदतां प्राभाकरणामपि उपनयनाध्ययनयोः अवश्यकर्तव्यतात्वे न कश्चित् मतिभेदो दृश्यते। तच्च अध्ययनं "स्वाध्यायोऽध्येतव्य" इति अक्षरराशिग्रहण फलपर्यन्तमेव विधत्त इति विशिष्टाद्वैतडिण्डिमः । एतत्तु स्वावसरे निपुणतरम् उपपादयिष्यते[22] ।

स्वाध्यायाध्ययनानन्तरं रागत: अरागतो वा मीमांसाश्रवणे अधीतवेद: प्रवर्तते। रागत: मीमांसाश्रवणे प्रवृत्तिरिति अस्मत्सिद्धान्त: । प्रवृत्तिस्तु वैधेति भाट्टप्राभाकरयो: मतमिति विवेक: । तथा च अधीतसाङ्गसशिरस्कवेद: येन क्रमेण व्याख्येयं वेदभागमधीते तेनैवक्रमेण तद्व्याख्यानभूतमीमांसायामपि प्रवर्तत इति सिद्धं सङ्गतिविशेषेण पूर्वोत्तरभागयोर्मीमांसयोरेकप्रबन्धत्वमिति । तथा चाहु: [23]''ऐकशास्त्र्यं च नियतपौर्वापर्यभागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यानरूपत्वात् इत्यर्थ: । अत्र व्याख्येयस्य पूर्वापरभावेनावस्थितभागद्वयरूपत्वं, तद्धेतुकं व्याख्यानस्य पौर्वापर्य विशेष विशिष्टभागद्वयरूपत्वं चे''ति श्रुतप्रकाशिकाकृत: । [24]''श्रुणु तावत् सङ्गतिमि'ति सङ्गतिं विवृण्वान: परित्राणकार: ''प्रावण्यं प्राक्त्रिवर्ग'' इति अधिकरणसारावल्युक्तप्रकारेण कर्मब्रह्मविचारयो: पौर्वापर्यनियमस्समादर्तव्य इति न्यरुरूपत् ।

एतत्सर्वं 'सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्ये''ति मीमांसापादुकाग्रन्थे अभिप्रेतम् ।

## ऐकशास्त्र्यवादस्सम्प्रदायसिद्ध इति निरूपणम्

नैतन्मतं स्वकपोलकल्पितं परं तु अविच्छिन्नपरम्परागतं सम्प्रदायसिद्धमिति सूचयितुकाम: 'विंशत्यालक्षणै: खल्वियम् अवयिविनी वृत्तिकारोपदिष्टे'ति मीमांसापादुकायामाह । वृत्तिकारस्तु [25]''संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरि''ति निरूपयामास । अत एव तेनैवान्यत्र [26]''वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषे''ति कर्मविचारस्य पूर्ववृत्तत्वं स्पष्टीकृतम् । एतदेव अनुसन्दधाना: भगवद्रामानुजपादा: वृत्तिग्रन्थं पूर्वोक्तं प्रदर्श्य [27]''अत: प्रतिपिपादयिषितार्थभेदेन षट्कभेदवत् अध्यायभेदवच्च पूर्वोत्तरमीमांसयो: भेद: । मीमांसाशास्त्रम् - [28]''अथातो धर्मजिज्ञासे''त्यारभ्य [29]''अनावृत्तिश्शब्दादनावृत्तिश्शब्दादि''त्येवमन्तं सङ्गति विशेषेण विशिष्टक्रममित्येवमन्तम् ऐकशास्त्र्यसाधनपरं ग्रन्थं प्रादीदृशन् । अत्र वृत्तिग्रन्थारूढस्य सहितमित्यस्य समानतन्त्रत्वेन सङ्गतम् । इत्यर्थ· । व्याख्येयस्य ऐक्येन व्याख्यानप्रबन्धयोरपि समानत्वे न किञ्चिदनुपपन्नं नाम । वेदस्तु पुरुषार्थपरो

दृश्यते । ब्रह्मपरोऽपि स इत्यपि वक्तुं शक्यते । अत एवोक्तं [30]''सर्वे वेदा यत्पदमामनन्ति'' [31]''वेदैश्च सर्वैरहमेववेद्य'' इत्यादिषु श्रुतिस्मृतिग्रन्थेषु । तथा च श्रुतिस्मृतिप्रमाणसिद्धमैकशास्त्र्यं पूर्वाचार्यैः स्वस्वग्रन्थेषु समादृतमित्येतत् न तिरोहितं विदुषाम् ।

## उपजीव्योपजीवकभावेन एकशास्त्रत्वसमर्थनप्रकारः

अत्रेत्थमवगन्तव्यम् - प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणावसरे या उपजीव्योपजीवकभावरूपा सङ्गति र्विवक्ष्यते सा अत्रापि विवक्षणीयेति सुधीभिर्विभावनीयम् । सङ्गतिर्नाम सम्बन्धः अनन्तराभिधानप्रयोजक-जिज्ञासाजनकज्ञानविषयत्वरूपः । यन्निरूपणाव्यवहितोत्तरनिरूपणप्रयोजिका या जिज्ञासा तज्जनकज्ञानविषयो यो धर्मः स तन्निरूपित सङ्गतिरिति तदर्थः । कार्ये ज्ञाते यथा कारणत्वस्य ज्ञानात् कारणज्ञानं मदिष्टसाधनमित्याकारक कारणताविषयकज्ञानात् किमस्य कारणमिति जिज्ञासा उदेति, तथैव कारणे ज्ञाते कार्यतायाः ज्ञानात् कार्यज्ञानं मदिष्टसाधनमित्याकारक कार्यताविषयकज्ञानात् किमस्य कार्यमिति जिज्ञासा उदेति । अतः कार्यकारणाभिधानानन्तरं तत्कारणकार्याभिधानप्रयोजकतादृशतादृशजिज्ञासाजनकज्ञानविषयत्वात् कारणत्वस्य कार्यत्वस्य च सङ्गतित्वं निष्पन्नम् । न च

[32]''**सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।**
**निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते ॥**''

इति वचनात् कार्यतायाः कारणताया वा सङ्गतित्वापरिगणनात् न तयोः सङ्गतित्वमुपपद्यत इति वाच्यम्, हेतुतेति पदेन अजहत्स्वार्थवृत्त्या तयोर्ग्रहणान्नकापि क्षतिः । ईदृश्याः सङ्गतेः प्रयोजनं तावत् एकवाक्यताप्रतिपत्तिरेवेति ध्येयम् । एकवाक्यत्वं च साकाङ्क्षत्वे सति एकार्थप्रतिपत्तिपरत्वम् । तच्चोक्तं जैमिनिना ''अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागः स्यात्'' इति । तदुत्थाप्याकाङ्क्षा-निवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतर रूपवत्त्वमेव तत्साकाङ्क्षत्वम् । एकवाक्यताप्रतिपत्तौ च सङ्गतिप्रदर्शनं लिङ्गज्ञानविधया कारणं भवति । यद्यत्सङ्गतिमत्प्रतिपादकं वाक्यं भवति तत्तत्प्रतिपादकग्रन्थेन एकवाक्यं भवतीति व्याप्तेः ।

प्रकृते पूर्वोत्तरमीमांसाशास्त्रयोरेवम् ऐकशास्त्र्य निरूपयामः । तथा हि - ऐकशास्त्र्यं नाम एकवाक्यतापर्यवसितम् एकप्रबन्धत्वम् । एक वाक्यतास्वरूपं तु प्रागेव प्रादीदृशाम । प्रकृते मीमांसापूर्वभागोत्थाप्यायाः कर्माराध्यः कः? इत्याकारिकायाः कर्माङ्गकं किम्? इत्याकारिकाया वा ब्रह्मविषयिण्याः तज्ज्ञानविषयिण्या वा आकाङ्क्षाया विषयसिद्धि सम्पादनेननिवर्तकत्वमुत्तरभागस्येति निरुक्ततत्साकाङ्क्षतानिर्वाहः कार्यः । एवं पूर्वोत्तरमीमांसाशास्त्रयोः कर्माराध्यत्वविशिष्ट ब्रह्मतात्पर्यकत्वरूपं कर्माङ्गकत्वविशिष्टब्रह्मज्ञान-तात्पर्यकत्वरूपं वा अर्थैक्यं निराबाधं प्रतिपद्यते । मीमांसोत्तरभागो मीमांसापूर्वभागनिरूपितनिरुक्तैकवाक्यतावान् पूर्वभागप्रतिपाद्यार्थ-सङ्गतार्थप्रतिपादकत्वात् इत्यनुमानेन ऐकशास्त्र्यं प्रसाध्यते । एव निःश्रेयसरूपैकफलप्रयोजकत्वरूपम् एकवाक्यत्वमपि सूपपादमेव । मोक्षस्य कर्मफलत्वं यद्यपि साक्षात् न सम्भवति, तथापि परम्परया तत्फलत्वमक्षतमेवेति न किञ्चिदनुपपन्नं नाम ।

अत एव एतादृशम् उपजीव्योपजीवकभावसङ्गतिविशेषं मनसि निधायैव मीमांसापादुकायामन्ते आचार्याः तत्प्रकारं सम्यक् निरूपयामासुः -

[33]"**ग्राह्यं सर्वत्रमानं परभजनविधौ भेदतादात्म्यचर्चा**
**तत्रैवाङ्गप्रयुक्ती परिकरघटने मार्गभेदक्रमाप्तिः ।**
**कर्ता वैराग्यपादप्रभृतिषु विविधावस्थितिः स्थापनीयः**
**शेषं चाशेषमीदृक् विलगति बहुषु ब्रह्मकाण्डस्थलेषु ।।**"

इति अस्यायमर्थः - जैमिनीयायाः द्वादशाध्यायाः अर्थाः ब्रह्ममीमांसायां बहुशः समाद्रियन्त इति पश्यामः । तथा हि - प्रमाणाध्याय निरूपितस्सर्वोऽपि अर्थः उत्तरमीमांसायां स्वीक्रियत एव । अत एव उत्तरमीमांसायां द्वितीयप्रथमे स्मृत्यधिकरणे पूर्वतन्त्रोदितरीत्यैव मन्वादिस्मृतीनां प्रामाण्यं कापिलादीनां तु अप्रमाण्यं च निरूपितम् । शङ्करभगवत्पादैरपि स्मृत्यधिकरणे [34]"विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्ये अन्यतरपरिग्रहे अन्यतर परित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणमनपेक्ष्या इतराः । तदुक्तं प्रमाणलक्षणे [35]"विरोधेत्वनपेक्षं स्यादसति

ह्यनुमानम्'' इति ।'' इति पूर्वतन्त्रोक्तमर्थमेव स्मारितः । एवमन्यत्रापि द्रष्टव्यम् । तदेवाहुः - **ग्राह्यं सर्वत्र मानमिति** । उत्तरमीमांसायाः तृतीयाध्यायस्य तृतीयपादः गुणोपसंहारपादत्वेन व्यवह्रियते । तत्र विद्यानां भेदाभेदचिन्ता कृता । सगुणब्रह्मोपासनस्यैव मोक्षजनकत्वमस्मदभिमतम् । तर्हि अनेकशास्त्रासु श्रूयमाणाः शाण्डिल्यदहरादि विद्याः किं भिन्नाः परस्परम् उत न ? यदि अभिन्नाः तर्हि विद्यैक्यत्वात् एकत्र श्रूयमाणागुणा. अन्यत्रापि उपसंह्रियन्ते, यदि भिन्नाः तर्हि एकत्र श्रूयमाणानां गुणानाम् अन्यत्र अनुपसंहार एव कार्य इति विद्यानां भेदाभेदचिन्ता प्रस्तुता तृतीयतृतीये ब्रह्ममीमांसायाम् । न च भेदाभेदयोः समानविषयत्वाविरहेण कथं गुणोपसंहारपाद इत्युच्यत इति वाच्यम्, वेद्यावच्छिन्न विद्यानियमकृत्वस्यैव पादार्थत्वस्वीकारात् । तथा चाचार्याः

[36]''**एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात्**
**भेदोऽभेदश्च नैको विषय इह भवेदन्यहानप्रसङ्गात् ।**
**तस्मादस्मिन् प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थचोद्ये**
**वेद्यावच्छिन्नविद्यानियमनकृदयमित्यैदमर्थ्यं समर्थ्यम् ।।''**

इत्याहुरधिकरणसारावल्यामित्यास्तां तावत् । तत्र भेदाभेदचिन्ताया ''सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्'' इत्यत्र उत्तरमीमासायां पूर्वमीमांसायाः ''एकं वा संयागरूपचोदनाख्याविशेषादि''ति सूत्रार्थः सुस्पष्टं स्वीकृतः । पूर्वमीमांसायाः द्वितीयाध्यायोक्तानां शब्दान्तरादीनां भेदकप्रमाणानामुपजीवन-मत्यन्तमावश्यकं भवति ब्रह्ममीमांसायाः । अन्यदन्यत्र स्वयमेव ऊह्यम् । एतदेव परभजनविधौ भेदतादात्म्यचर्चेति निर्दिशत्याचार्याः ।

एवं ब्रह्मकाण्डे तृतीयतृतीय पाद एव तत्र तत्र उपनिषत्सु प्रतिपाद्यमानेषु उपासनेषु अङ्गाङ्गिविचारोऽपि प्रास्तावि । अयं च विचारः पूर्वकाण्डस्य शेषाध्यायस्य (तृतीयाध्यायस्य) न्यायानेव समादृत्य प्रवर्तित इति तु प्रतीमः । अत एव आथर्वणे मुण्डके [37]''अथ परा यया तदक्षरमधिगम्यते यत्रदद्रेश्यम् अग्राह्यम् अगोत्रम् अवर्णम् अचक्षुश्श्रोत्रं तदपाणिपादम्'' इति, बृहदारण्यकेऽपि [38]''एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलम् अनणु अह्रस्वम् अदीर्घम् . . . . एतस्य वा अक्षरस्य

प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति च अक्षरविद्या प्रस्तुता। तत्र अक्षरशब्दनिर्दिष्ट ब्रह्मसम्बन्धित्वेन श्रुता: ब्रह्मण: असाधारणाकारेण ब्रह्मस्वरूपप्रतीत्यन्तर्भावेन च सर्वेष्वपि उपासनेषु सङ्ग्रहीतव्या इति अक्षरध्यधिकरणसिद्धम्। तत्र प्रथमकाण्डोक्त: [39]"गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसंयोग:" इति सूत्रारूढो न्यायसमसमादृत:। अत एव [40]"अक्षरधियां त्ववरोध: सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्" इति बादरायणर्षिणा स्पष्टम् उदटङ्कि। एवं तत्र तत्र प्रवर्तित: अङ्गविचारोऽपि ज्ञेय:। पूर्वकाण्डस्य तृतीयतुरीययो: मिलित्वा एका पेटिकेति वक्तुं शक्यते। अङ्गाङ्गित्वरूपसाधारणधर्मव्याप्यस्य प्रयोज्यप्रयोजकभावस्यात्र निरूपणात्। अङ्गिप्रयोजकं भवति, अङ्गं तु प्रयोज्यम्। प्रयोजकत्वं नाम अनुष्ठापकत्वम्। एतच्च चतुर्थाध्याये पूर्वकाण्डे विचारितम्। ब्रह्ममीमांसायां अङ्ग्यार्थं प्रधानार्थमेव अङ्गानुष्ठानं यत्र विहितं तत्रायं प्रयुक्तिविचार: कृत इति ज्ञेय:। एतदेवाह मीमांसापादुकाकार: **तत्रैव अङ्गप्रयुक्तमिति**। एवं पञ्चमाध्यायार्थ: (पूर्वकाण्डस्य) उत्तरमीमांसायामपि समादृत:। यथा - गतिचिन्तनप्रकरणे [41]"य एवमेतद् विदु: ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासान् उदङ्ङादित्य एति मासेभ्य: देवलोकं देवलोकात् आदित्यमादित्याद् वैद्युतं वैद्युतात् पुरुष: अमानवस्य एत्य ब्रह्मलोकान् गमयति" इति विदुष: उत्क्रान्तस्य नाडीविशेषेण पूर्वत्वं कतमस्य परत्वमिति पौर्वापर्यविचार: क्रमनिबद्ध: पूर्वकाण्डोत्थ: ब्रह्ममीमांसायामर्चिराद्याधिकरणे [42]निरूपित:। तदुक्तं 'परिकरघटने मार्गभेदक्रमाप्ति:' इति।

एवं ब्रह्ममीमांसायाम् इष्टादिकारिण: के ? तेषां मार्ग: क: ? एवम् अनिष्टादिकारिण: के? तेषां मार्ग: क: ? इत्यादि अधिकारिविवेचनपरं निरूपणं तृतीयप्रथमे प्रवर्तितम्। एतत्तु पूर्वकाण्डस्य षष्ठाध्यायस्य प्रतिपाद्यानुरोधमिति ज्ञेयम्। तदुक्तं 'कर्ता वैराग्यपादप्रभृतिषु विविधावस्थिति: स्थापनीय' इति।

एवं यत्र एकस्मात् कर्मण: अन्यस्मिन् कर्मणि अनुष्ठानरीति: आनीयते यथा प्रकृतिवत् विकृति: कर्तव्येति स अतिदेशशब्दवाच्य:। पूर्वमीमांसायां सप्तमाष्टमाध्यायद्वये अतिदेशपेटिकाभूते अयमेव विचार: सामान्यविशेषभेदेन

प्रसारितः । अयमुत्तरमीमांसायां तृतीयचतुर्थे अन्तिमाधिकरणे [43]"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" इत्यत्र सुस्पष्टं विचारितः। एवमन्यत्रापि विचारितोऽतिदेशन्यायः ।

पूर्वमीमांसायाः नवमाध्याये ऊहः प्रस्तुतः । ऊहो नाम प्रकृतौ दृष्टस्य विकृतौ अतिदिष्टस्य अन्यथाभावः । तथा च सेश्वरमीमांसा [44]"ऊहश्च दृश्यमानो मन्त्राणामर्थविवक्षां साधयति । प्रकृतौ उद्दिष्टानां मन्त्राणां विकृतौ तत्तदुचितः प्रकृतिप्रत्ययाद्यूहो दृश्यते" इति अक्षिविद्यायां तस्यैतस्य तदेवरूपं, यदमुष्य रूपमिति आदित्यविद्योपास्यगतरूपातिदेशः स्वीकृतः । तत्र मन्त्रजपादिकाले आदित्यमण्डलस्थाने अक्षिस्थानमूहनीयं भवति । विचारोऽयं ब्रह्मकाण्डे प्रवर्तितः पूर्वकाण्डानुसारम् ।

एवं प्रकृतितो विकृतौ अतिदिष्टेषु पदार्थेषु केषाञ्चित् अननुष्ठानम् अग्रहणं वा बाधशब्दार्थः दशमाध्यायविषयः पूर्वकाण्डस्य । एवं ब्रह्मकाण्डोऽपि विचारोऽय द्युलोके स्थित्वा उपासकानामर्चिरादिमार्गे अग्न्यादिचिन्तनबाधनिरूपणपुरस्सरं तदन्तरप्रतिपत्त्यधिकरणे[45] सुनिपुणं कृतः ।

एवं तन्त्राध्यायार्थः प्रसङ्गाध्यायार्थश्च उत्तरमीमांसायां तत्र तत्र उपजीव्यते । तन्त्र नाम अनेकोद्देशेन सकृदनुष्ठानम् । प्रसङ्गो नाम तदननुष्ठानेऽपि तदपेक्षितोपकारहेतुतेति । एतदुभयमपि तृतीयाध्यायस्य चतुर्थपादे ब्रह्ममीमांसायां समादृतम् । यथा उपासनार्थानुष्ठितकर्मभिरेव नित्यकर्मणां तन्त्रप्रसङ्गसिद्धिः निरूपिता ।

एतत् सर्वं मनसि निधाय आचार्याः प्राहुः मीमांसापादुकायाम् - "शेषं चाशेषमीदृक् विलगति बहुषु ब्रह्मकाण्डस्थलेषु" इति । पूर्वमीमांसोदिता न्यायाः ब्रह्ममीमांसायां बहुत्र प्रादर्शिषत । तथापि स्थालीपुलकन्यायेन किञ्चिदेव प्रस्तोतुं प्रयतितमस्माभिः विस्तरभयादत्र । अत्रत्यः सत्पथसञ्चारग्रन्थः अत्यन्तं दृष्टिपथमावहतीत्यास्तां तावत् ।

एवमुपजीव्योपजीवकभावसङ्गत्यापि पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं प्रतिष्ठापितं भवति ।

## विद्यास्थानैक्येन एकशास्त्रत्वसमर्थनप्रकारः

अपि च मीमांसाख्यविद्यास्थानस्य एकत्वात् पूर्वोत्तरमीमांसा-शास्त्रयोरप्येकत्वमुपपद्यते। तथा हि - विद्यास्थानानि चतुर्दशेति तत्र तत्र ग्रन्थेषु समुट्टङ्कितानि सन्ति। तथा चोक्तम् --

**''अङ्गानि वेदाश्चत्वारः मीमांसान्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्याह्येताचतुर्दश॥''** इति।

एवं विभीषणः रामाय सीतां प्रत्यर्पयितुं, रावणं प्रत्येवमुपदिदेश --

**''विद्याश्चतुर्दश चतुर्षु निजाननेषु**
**सम्बाधदुः स्थितवतीरवलोक्य वेधाः।**
**तेभ्योऽपराणि नियतं दश ते मुखानि**
**स्वस्य प्रणन्तुरकरोत् स कथं जडोऽसि?''**

इति। भङ्ग्यन्तरेण विद्यास्थानानां चतुर्दशत्वं प्रादर्शि महर्षिणा वाल्मीकिना। एवं श्रीहर्षोऽपि।

[46]**''अधीति बोधाचरणप्रचारणैः**
**दशाश्चतस्रः प्रणयन्नुपाधिभिः।**
**चतुर्दशत्वं कृतवान् कुतः स्वयं**
**न वेद्मि विद्यासु चतुर्दशस्वयम्॥''**

इति नैषधमहाकाव्ये विद्यास्थानानि चतुर्दशेति प्राचीकशत्। किं बहुना? वेदेऽपि एतेषां विद्यास्थानानां निर्देशः सुस्पष्टं कृतो दृश्यते। यथा - [47]''तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदः अथर्ववेदः शीक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति'' इति मुण्डकोपनिषदि श्रूयते। एवं सुबालोपनिषदि [48]''तस्यैतस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेदः सामवेदः शिक्षा कल्पः व्याकरणं निरुक्तं छन्दोविचितं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानानि उपव्याख्यानानि'' इति पठ्यते। एव छन्दोगाः आमनन्ति [49]''स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं भगवोऽध्येमि . . . . . . . सर्वदेवजनविद्यां भगवोऽध्येमि इति'' इति। एव सति विद्यासंस्थानानां चतुर्दशत्वे न हि कश्चन विप्रतिपद्येत।

तथा च पूर्वोक्त श्रुतिस्मृतिकाव्येषु निरुपपदमीमांसाशब्दस्यैव श्रवणात् पूर्वोत्तरमीमांसयोरेकविद्यास्थानत्वमभिमतमिति प्रतीमः । अन्यथा अन्यतरस्य मीमांसाशास्त्रस्य विद्यास्थानत्वं हीयते । अपि च पूजितवेदार्थविचारस्यैव मीमांसाशब्दवाच्यत्वात् तच्च पूर्वोत्तरमीमांसयोरुभयत्रापि सुसङ्गतं प्रतीयत इति युक्तमुत्पश्यामः पूर्वोत्तरतन्त्रयोरेकप्रबन्धत्वम् । अत एव विद्यास्थान परिगणनावसरे श्रुतस्य मीमांसाशब्दवृत्त्येकवचनावगतैकत्वस्यापि उपपत्तिर्योयुज्यते ।

अत्रैवं शङ्कते कश्चित् - विद्यास्थानैक्यं न मीमांसायाः पूर्वोत्तरभागयोरभेदसाधकं भवति । तथा हि - वेदत्वसाम्येनापि न हि कश्चित् ऋग्यजुस्सामाथर्वरूपाणां वेदानामेकत्वं प्रत्येति । एवमुपबृंहणत्वसाम्येन धर्मशास्त्रपुराणयोरेकत्वं न कोऽपि मनुते । तथा सति मीमांसात्वरूपधर्म (पूजितवेदार्थविचाररूप) साम्येन कथं पूर्वोत्तरमीमांसाशास्त्रयोरेकता सम्भवति इति - अत्रैवं समाधिः - महर्षीणामाप्तानां च व्यवहारानुगुणमेव लक्षणं व्यवहारनियामकत्वेन वयं निरूपयामः, न तु लक्षणानुगुणं व्यवहारमन्यथायितुं प्रभवामः । तथा च ''अष्टादशपुराणानां कर्ता सत्यवती सुत'' इत्यत्र पुराणानां ''वेदैश्च सर्वैरहमेव वेद्यः'' इत्यत्र वेदानां च भेदव्यवहारो हि अनादिसिद्धो दृश्यते । न हीदृशो भेदव्यवहारः मीमांसाशब्दाभिलप्यः कुत्रापि प्राचीनेषु प्रमाणिकेषु ग्रन्थेषु समुपलभ्यते । अतः मीमांसेति आप्त व्यवहारसत्त्वात् पूर्वोत्तरमीमांसयोरेकत्वं निराबाधम् । एतदेव आचार्याः प्रादीदृशन् सनिपुणं

**[50]''विद्यास्थानानि चत्वार्यगणिषत पृथक् वेदरूपत्वसाम्ये**
**द्वेचाप्यन्ये विभक्ते ह्युपपदघटितं बृंहणत्वं दधाने ।**
**मीमांसाशास्त्रसाम्येऽप्यत इह घटते भिन्नविद्यापदत्वं**
**मैवं मन्वादिभिस्तत्पृथगनुपठनाभावतस्तत्प्रहाणात् ।।''**

इति मीमांसापादुकायाम् ।

अत्रेदमाकूतम् - मीमांसाशब्दनिष्ठैकवचनावगतस्य एकत्वस्य समादरेण विद्यास्थानैक्यं यदि न हीष्यते, तर्हि विद्यास्थानाना चतुर्दशत्वगणनाभङ्गः । यदि चतुर्दशत्व एव विद्याया आग्रहस्तथापि ऐकशास्त्र्ये दुरभिनिवेशः, तर्हि

पूर्वोत्तरमीमांसयोश्शास्त्रयोरन्यतरस्य विद्यास्थानत्वं भज्येत । अत एव समधिगत श्रुतिस्मृतिपुराणाः मीमांसाशब्देन विद्यास्थानैकत्वं समाधिगत्य पूर्वोत्तरमीमांसाशास्त्रयोरेकप्रबन्धत्वं निरणैषुरित्यलं विस्तरेण ।

ननु विद्यास्थानेषु चतुर्दशसु निरुपपदमीमांसा एव श्रुतेति धर्मार्थकाममोक्षाख्येषु पुरुषार्थेषु प्राथम्यं भजतः धर्मस्यैव विचारार्थं प्रवर्तते हि लोकः । अपि च पूर्वमीमांसा विचारेणैव कृतार्थतामपि स्वस्य मनुते मानववर्गः । न च तथापि पूर्वमीमांसाविचारानन्तरं मोक्षरूपं फलं लभित्सुः ब्रह्मविचारे प्रवर्तेतेति शङ्कनीयम्, जैमिनेः ब्रह्मणि तात्पर्यविरहात् न कर्मविचारानन्तरं ब्रह्मविचारे प्रवृत्तिरुपपद्यते । अत एव कुमारिलादीनां ग्रन्थेषु परमात्मसद्भावनिराकरणं महता प्रबन्धेन दरीदृश्यते । तथा च तत्रैव महति आदरे सति ब्रह्ममीमांसामधिगन्तुं को वा प्रयतेतेति न पूर्वोत्तरयोः मीमांसाभागयोः एकप्रबन्धत्वं सम्भवति । अपि च [51]'नान्यः पन्था अयनाय विद्यते' [52]'नास्त्यकृतः कृतेन' [53]'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' [54]'नान्यैर्देवैस्तपसा कर्मणा वा । हित्वाऽविद्यां धियैवेयात् तद्विष्णोः परमं पदम्' [55]'यदि वा इतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादि श्रुतिभ्यः सम्यग्ज्ञानेनैव ब्रह्मसाक्षात्काररूपफलस्य अविनश्यतः प्राप्तिः अवगम्यते । अत एव भगवत्पादैश्शङ्कराचार्यैः [56]'धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते'रिति अभाषि । तथा च ब्रह्मविचारार्थं कर्मविचारस्य अनपेक्षितत्वात् ब्रह्मविचारमात्रं केचन कर्तुं प्रयतेरन्निति न युक्तं कर्मविचारशास्त्रस्य ब्रह्मविचारशास्त्रस्य च समानप्रबन्धत्वमिति चेद् अत्र ब्रूमः - न ह्यत्र अधिकारिणोऽभावात् ऐकशास्त्र्यमुपेक्षणीयमिति युक्तं शङ्कयम् । 'ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन' इत्यादि श्रुतिप्रमाणपुरस्सरमुपासनायां कर्मणस्सापेक्षत्वं कीदृशं ग्राह्यमिति प्रागेवास्माभिः सविस्तरमेतत् उपापादि । तथा च एतादृशस्य सिद्धान्तस्य महत्त्वं यथावत् प्रतिपन्नाः भक्तिवादिनः रामानुजीयाः अधीतसाङ्गसशिरस्कवेदाः सदाचार्यसम्पन्नाः प्राज्ञाः अधिकारिणाः च दुर्दर्शा इति अधिकारिलाभेन न कापि क्षतिस्सम्भवेत् । वेदार्थस्य कमप्येकं भागं गृहीत्वा आत्मानं कृतार्थतां मनुते कर्मप्रधानवादी मीमांसकः भाट्टादिः एवं वेदान्तभागं गृहीत्वा सार्थक्यमवलोकयति शाङ्करो मृषावादीति एतौ द्वावपि

राहुकबन्धमीमांसकत्वेन प्रथमानौ भवत इति आचार्यैस्तत्र तत्र निरदेशि । तथा चाधिकरणसारावलिग्रन्थः -

[57]''**मीमांसायाः कबन्धं कतिचन जगृहुः राहुकल्पं शिरोऽन्ये**
**किंतैरन्तर्विरोधप्रमुषितमतिभि र्बाह्यकल्पैर्भ्रमद्भिः ।**
**स्वाध्यायाध्यायकार्त्स्न्ये स्वविधिपरविधिप्रेरणा तावदास्तां**
**कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां न कुर्युः ॥''**

तथा च कृत्स्नस्यापि वेदभागस्य समानविधया प्रामाण्यं सेवता भगवद्रामानुजीयानां मते कमपि विशेषं पश्यता केन वा अधिकारिणा उभयत्रापि (कर्मब्रह्मविचारद्वयेऽपि) प्रवृत्तिः न क्रियेत? एतदेव [58]'स्वमतगुणतिरस्कारक-प्रत्यनीकमि'ति रामानुजसिद्धान्तं विशिनष्टि श्रीमद्वेदान्तदेशिकाचार्यः । अत्रत्यः परित्राणग्रन्थोऽवश्यमनुसन्धेयः -

[59]''अधीतवेदाः सत्त्वोत्तराः सदाचार्यकुलपारम्पर्येण प्रसूताः प्राज्ञाः संग्रहीष्यन्ति । ते च बहवः प्रत्यग्विद्याधुरीणत्वेन प्रथिताः, तेन अस्मत्सम्प्रदायानुवृत्तिः अधुना वा आयत्यां वा वर्तिष्यत इति न सकटं किञ्चित् । स्वमतगुणतिरस्कारकप्रत्यनीकमिति । स्वमतं श्रीमद्रामानुजसिद्धान्तः । तद्गुणतिरस्कारकौ राहुकबन्धमीमांसकौ, तत्प्रत्यनीकमस्मदुक्तम् इत्यर्थः'' इति । अतः प्रामाणिकस्य अधिकारिणस्सत्त्वादेव श्रीमद्रामानुजमतं नोपेक्षणीयमिति सिद्धम् । तदेवाह -

''**काले कौमारिलादिष्वधिकबहुमतौ कत्स्वदिष्टं ग्रहीता**
**कस्मै रोचेत पूर्वश्रुतहृतमनसे क्लृप्तिरन्येति चेन्न ।**
**स्वीकुर्वन्त्यस्मदुक्तं स्वमतगुणतिरस्कारकप्रत्यनीकं**
**प्रत्यग्विद्याधुरीण प्रथित बहुमहावंशजाता महान्तः ॥''** (मी.पा.7)

इति । श्लोकेऽस्मिन् अन्तिमचरणेन वृत्तिकारप्रभृतयः प्रबोधिताः । अतः पूर्वोत्तरमीमांसयोरेकशास्त्रत्ववादो निश्चल इति प्रतिपिपन्महे ।

### ग्रन्थसमादरे प्राच्यनव्यविकल्पः अप्रयोजक इति कथनम्

अथैवं मनुषे - कुमारिलशङ्करप्रभृतीनामाचार्याणां ग्रन्थेः बहुजनसमादरभावनायाः निरन्तरं सत्त्वात् आधुनिकं भावत्कं कल्पन ऐकशास्त्र्यसमर्थनरूपं कथं वा समादर्तुं योग्यम् इति - अत्र ब्रूमः - न हि ग्रन्थसमादरे प्राच्यनव्यादि विकल्पः प्रयोजको भवति, तथा सति आधुनिकमपि किञ्चित्कालानन्तरं प्राचीनतां भजेत। तथा चोक्तं यादवाभ्युदये [60]'तदात्वे नूतनं सर्वमायत्यां च पुरातनम्' इति। अपि तु श्रुतिप्रमाणोपेतं यथार्थं वचनं ग्राह्यं भवति नेतरत्। तदुक्तं - [61]'प्रत्येतव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा'। इति। तथा च अस्मन्मतसमादरे न कोऽपि विरोधो दृश्यते।

### कृतभेदेन ऐकशास्त्र्यभङ्गप्रस्तावः - तन्निरासश्च

ननु पूर्वमीमांसाशास्त्रप्रणेता जैमिनिः बादरायणस्य शिष्यः। ब्रह्ममीमांसाशास्त्रप्रणेता तु बादरायणभगवान्। तथा च कर्तृभेदेन कथमेकशास्त्रत्वसम्भवो युक्तः? ब्रह्ममीमांसाशास्त्रं न कर्ममीमांसाशास्त्र-निरूपितैकग्रन्थतावत् तत्कर्तृभिन्नकर्तृकत्वादित्यनुमानमपि अत्र सङ्गच्छत इति चेत् न - कर्तृभेदो न प्रयोजकः ऐकशास्त्र्यपेक्षा। तथा हि - यत्र यत्कर्तृभिन्नकर्तृकत्वं तत्र तदेकग्रन्थत्वाभाव इति सामान्यव्याप्तिस्वीकारे कादम्बर्यादौ व्यभिचारः। तत्र भिन्नकर्तृकत्व सम्भवेऽपि भिन्नग्रन्थत्वाभावोपलब्धेरदर्शनात्। यदि कर्ममीमांसाशास्त्रप्रणेतृभिन्नप्रणेतृकत्वं यत्र तत्र तच्छास्त्र (कर्ममीमांसा) निरूपितैकग्रन्थत्वाभाव इति विशेषव्याप्तिस्वीकारे चाप्रयोजकत्वम्। कादम्बर्यादाविव तत्कर्तृभिन्न कर्तृकत्वेऽपि तदेकग्रन्थत्वसम्भवात्। अतो न कर्तृभेदः एकशास्त्रत्वविघटको भवितुमर्हति।

### विरुद्धार्थप्रतिपादकत्वेन एकप्रबन्धताभङ्गः - तन्निरासश्च

ननु कर्तृभेदे सत्यपि कादम्बर्यादौ परस्परं विरुद्धार्थस्य अनुपलभ्यमानत्वात् समानप्रबन्धत्वमुपपद्यत एव। परं तु जैमिनि बादरायणयोः ग्रन्थयोः परस्परं विरुद्धार्थप्रतिपादकत्वात् कथं युज्येत ऐकशास्त्र्यं पूर्वोत्तरमीमांसयोः? तथा च ब्रह्ममीमांसा न कर्ममीमांसानिरूपितैकग्रन्थतावती तत्तात्पर्यविषयार्थविरुद्धार्थ-

प्रतिपादकत्वात् इति अनुमानमत्र विवक्षितम्। परस्परं विरुद्धार्थप्रतिपादकत्वं कथं दृश्यत इति स्थालीपुलकन्यायेन किञ्चिदत्र वयं पश्याम: - [62]''आम्नायस्य क्रियार्थत्वात् आनर्थक्यम् अतदर्थानाम्'' इत्यस्मिन् सूत्रे कार्यपराणामेव वाक्यानां वेदे स्वतन्त्रप्रामाण्यं स्वीकृतं, न तु सिद्धपराणां वाक्यानामिति कण्ठरवेण प्रोक्तम्। एतत्तु मतं सिद्धवस्तुन: ब्रह्मण: प्राधान्य वहता उत्तरमीमांसाशास्त्रेण सह अत्यन्तं विरुद्धचते। अपि च देवताधिकरणे बहुश: देवता निराकरणं कृतम्। एवम् क्वचित् ब्रह्ममीमांसायामेव निराकर्तव्यत्वेन जैमिनिमतं समुल्लिखितम् - यथा - फलाधिकरणे [63]'धर्मं जैमिनि: अत एव' इत्यत्र कर्मण एव फलप्रादतृत्वसम्भव: न ब्रह्मण इति जैमिनेराशय इति प्रकटीकृत्य [64]'फलमत उपपत्ते'रित्यत्र एतत् परास्तम्। एवमन्यान्यपि द्रष्टव्यानि विरोधप्रतिपादकानि वाक्यानीति कथमेतयोश्शास्त्रयोरेकप्रबन्धत्वं सम्भवति? इति चेत् - अत्रैवं प्रति विधीयते - 'न हिंस्यात् सर्वाभूतानि' 'अग्नीषोमीयं पशुमालभेत' 'पदे जुहोति', 'आहवनीये जुहोति' इत्यादिषु स्थलेषु यथा उत्सर्गापवादन्यायेन विरोधपरिहार: कृतस्तथैवात्रापि भाव्यम्। सिद्धपराणां वाक्यानां क्रियाशेषत्वमिति सामान्य न्याय:। सिद्धपर-विशेषवाक्यानां तु न तथेति स्वीकारे न किञ्चिदनुपपद्यते। तथा चोक्तं श्रीमत्सुदर्शनभट्टारकै: [65]''सामान्येन सिद्धपरवाक्यानां क्रियाविशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किं विधिशेषत्वं न वेति विचार्य स्वयं पुरुषार्थविरहिणामेव सिद्धपरवाक्यानां क्रियाशेषत्वं, स्वयं पुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानां न तच्छेषत्वमिति हि निर्णेतुं युक्तमि'ति। तथा च न परस्पर विरुद्धार्थप्रतिपादकतासम्भव:। यदपि जैमिनिमतनिरसनपरतया ब्रह्मसूत्रे कथनं तदपि अन्वारुह्यकथनमात्रमिति युक्तमुत्पश्याम:।

## देवतानिराकरणे जैमिनेरनभिमतत्वप्रदर्शनम्

यदुक्तं देवतायास्सत्त्वं पूर्वमीमांसायां निराकारीति तदपेशलम्। न च तथाविधं देवतानिराकरणपरं सूत्रं क्वचिद् दृष्टचरम्। न हि जैमिनि: सहृदयं क्वचिद् देवतां निराकरोति। यत्र देवतानिराकरणं भाष्यवार्तिकादौ उपलभ्यते, तदन्याभिप्रायकँमित्येव वक्तव्यम्। अन्यथा तेषां ग्रन्थवाक्यानां

परस्परव्याघातप्रसङ्गः । यथा - बहुशः देवतां खण्डयता कुमारिलेन [66]'विशुद्धज्ञानदेहाय . . . . नमस्सोमार्धधारिणे' । इति देवतास्तुति र्निरर्थिका भवेत् । अपि च स्तोत्रं नाम यत् कर्म 'पञ्चभिः स्तुवीत' इत्यादिषु विधीयमानं गुणिनिष्ठगुणाभिधानं भवति। तथा गुणिरूपायाः देवतायाः तद्गुणानां तन्निष्ठधर्माणां च सत्त्वमवश्यमभ्युपगम्यं भवति। अन्यथा स्तोत्रस्य स्तोत्रत्वं दुर्घटं स्यात्। अत एव परमास्तिकाग्रेसरेण **खण्डदेवाचार्येण**

[67]"**विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।**
**प्रीतिः फलप्रदानं च देवतानां च विद्यते ।।**" इति

विग्रहादिपञ्चकं देवतायाः महता प्रबन्धेन दूषयित्वा [68]'ममत्वेवं वदतो वाणी दुष्यतीति हरिस्मरणमेव शरणमिति' पापभीरुणा देवतायास्सत्त्वमेव निरटङ्कीति न तिरोहितमेतत् तीर्थङ्कराणाम् ।

अपि च देवतानिराकरणमिव यत्र दृश्यते तत्र 'न हि निन्दा निन्दितुं प्रवर्तते, अपि तु निन्दितात् इतरत् प्रशंसितुम्' इति न्यायेन अनधिगतवेदान्तानां कर्मणः प्राधान्यं प्रदर्शयितुमेव तथोक्तमिति युक्तम् ।

## जैमिनिसमादृतवेदान्तसिद्धान्तप्रदर्शनम्

अत एव ब्रह्मस्वरूपतद्गुण तदुपासनादि प्रतिपादनावसरे तत्र तत्र ब्रह्ममीमांसायां जैमिनिमहर्षिं संवादयति भगवान् बादरायणः । तथा हि - [69]'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति' इत्यत्र वैश्वानरविद्याया अङ्गभूतायाः प्राणाहुतेरग्निहोत्र (समान)त्वं [70]'स य इदम् अविद्वान् अग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत्स्यात् अथ च एतदेवं विद्वान् अग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुत भवति तद्यथा इषीकतूलम् अग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मनः प्रदूयन्त' इति श्रुतिप्रमाणप्रदर्शन पुरस्सरं सम्पादयति भगवान् जैमिनिः ।

एवं जगद्वाचित्वाधिकरणे औपनिषदं सिद्धान्तं पोषयितुकामः भगवन् बादरायणः जैमिनि सम्मतिमपि स्वसिद्धान्ते प्रदर्शयति [71]'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यनाभ्यामपि चैवमेके' इति । [72]'यो वै बालके एतेषां पुरुषाणां कर्ता.

यस्य वा एतत्कर्म स वै वेदितव्य' इति कौषीतकी श्रुतिः । तत्र प्राणादिव्यतिरिक्तं जीवं कैश्चित् लिङ्गविशेषै. प्रतिबोध्य पुनः जीवातिरिक्त ब्रह्मप्रतिबोधनपरस्य प्रश्नस्य व्याख्यानस्य च श्रवणेन जीवातिरिक्तपरमात्मबोधनार्थं तथा निर्देशः कृतः श्रुताविति जैमिनेराशयः । तथा च जीवस्वरूपापेक्षया विलक्षणस्य परमात्मनस्सद्भावं प्रतिपादयता जैमिनिना कथं ब्रह्मस्वरूपं प्रतिक्षिप्तं भवेत् ?

[73]एवं 'परं जैमिनिः मुख्यत्वात्' इत्यत्र हिरण्यगर्भव्यतिरिक्तं परमात्मानम् अर्चिरादिकम् आतिवादिकगणं तद्गणस्य परमात्मोपासकनेतृत्वं वैकुण्ठादिलोकसद्भावं च जैमिनिः प्रत्यपीपदत् । एवं सति जैमिनिः देवतां निराकरोतीति मतम् अत्यन्तमुपहास्यं भवति ।

अपि च [74]'ब्राह्मेण जैमिनिः उपन्यासादिभ्यः' इत्यत्र परं ज्योतिरूपसन्नस्य जीवस्य मोक्षदशायां ब्रह्मसम्बन्धित्वेन श्रुतैः अपहतपाप्मत्वादि गुणैस्सह आविर्भावः जैमिनि समादृतः पक्ष इति बादरायणस्सूचयामास । तथा सति ब्रह्मजीवयोर्भेदः, गुणसद्भावः, स्वरूपाविर्भावो मोक्षदशायामित्येत्सर्वं सूचित भवति इति देवतानिराकरणवादी जैमिनिरिति कथनं गगनकुसुमप्रायमिति पश्याम. ।

एवं [75]'भावं जैमिनिर्विकल्पामननात्' इत्यत्र मुक्तस्य कर्मकृत शरीर सद्भाव प्रतिक्षिप्ता जैमिनिना अकर्मकृतशरीरसद्भावः अङ्गीकृत· । एतच्च न औपनिषदमतस्य अननुकूलमिति वैदान्ताविरोधेन जैमिनिः स्वमतं प्रतिष्ठापयामास ।

एवं [76]'साक्षादप्यविरोधं जैमिनिः' इत्यत्र अग्निशब्दस्य साक्षादेव परमात्मपरत्वं जैमिनिना स्वीकृतम् । तच्च व्यासस्यापि सम्मतमेव । परं तु जैमिनि· अग्रनयनव्युत्पत्त्या परमात्मापरत्वं मनुते, व्यासस्तु अग्निशरीरकत्वेन परमात्मपरत्वमित्येतावानेन भेदः । परब्रह्मस्वरूपानङ्गीकारे कथं जैमिनिः एवं सूचयेत् ?

अपि च [77]'मध्वादिष्वसम्भवादनाधिकारं जैमिनिः' इत्यत्र वस्वादि देवतानां ब्रह्मविद्यायामधिकार: न तु मधुविद्यायां वस्वादिफलविशिष्टायामिति ब्रुवाणो जैमिनिः ब्रह्मस्वरूपतद्विद्यावस्वादिदेवता: कथं प्रतिक्षिपेत् ?

नन्वेवं सति भगवान् बादरायण एव क्वचित् जैमिनि नाम निर्देश पुरस्सरं

वेदान्तविरुद्धं तन्मतं सूचयामासेति कथमेतद् युक्तं जैमिनिपक्षस्य परिग्रहणम्। यथा - [78]शेषत्वात् पुरुषार्थवादः यथान्येष्विति जैमिनिः' इति वेदान्तसूत्रम्। अस्यायं भावः - तत्त्वमस्यादि वाक्य सामानाधिकरण्यबलेन वेदान्तेषु उपास्यत्वेन प्रतिपादितस्य जीवभावावगमात् परविद्यासु कर्मीभूतो जीव एव। न तु परमात्मा। तथा च ब्रह्मविदाप्नोति परमित्यादि तु फलश्रवणम् अर्थवादमात्रं न तु फलविधिरिति विद्यापि क्रतुकर्मभूता आत्मसंस्कारद्वारेण क्रत्वर्थभूतैव च। न तु पुरुषार्थभूता। अतः विद्याङ्गकात् कर्मणः एव पुरुषार्थावाप्तिरिति जैमिनिमतम्। तथा च एवं वेदान्तविरुद्धं प्रतिपादयता जैमिनिमतेन कथं वेदान्तस्य एक वाक्यत्वं संघटत इति गत पूर्वोत्तरमीमांसाशास्त्रयोरेकत्वप्रतिपादनमिति चेद् - ब्रूमः। वेदान्तविरुद्धस्थले प्रतिपादितं जैमिनिमतं तु अन्वारुह्य वचनमिति न किञ्चिदनुपपन्नं नाम। अत एवाचार्यैरेवं निरटङ्कि।

''पादेरत्रैवमेकादशभिरपि परं ब्रह्मवेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैः गगनलिपिनिभैः क्षोभ्यते ब्रह्मविद्या।
सत्यं तत्तादृगल्प श्रुतमतिकलहत्रासितच्चास्त्रडिम्भ
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति।।''

इति विस्तरस्तु चिन्तामणौ अभिनवदेशिकव्याख्याने च द्रष्टव्य इत्यलमक्षरक्षरणेन।

किं च महाभारते हयशिर उपाख्यादिषु जैमिनेः भगवतः बादरायणस्य शिष्यत्वेन कीर्तनात् गुरूपदेशकाले जैमिनिना कृतानि चोद्यानि शिष्यवात्सल्यातिशयात् तद्बुद्धिप्रचिख्यापयिषया तदुक्तत्वेन उपन्यासः कृत इति न किञ्चिदनुपपद्यते।

एतादृशमेव कर्तृभेदशङ्कया ऐकशास्त्र्यभङ्गासम्भवं मन्वानाः श्रीमद्वेदान्तदेशिकचरणाः

[80]''शिष्याचार्यौ विरुद्धं न तु मतमधुना साधयन्तौ प्रसिद्धौ
स्वाभीष्टाच्छास्त्रमन्यत् सुरसचिवमुखैः कल्पितं किं न विद्मः।
तस्माद् ब्रह्मज्ञजैमिन्युपरचितमिदं त्याज्यमेतन्निरीशं मैवं
व्याघातहानौ मुनिवचसिमुधा बाह्यवत् दृष्टिदौस्थ्यम्।।''

इति **मीमांसापादुकायां** व्यलिखन् । अपि च देवतानिराकरणविषये पूर्वमीमांसाचार्यस्य जैमिनेः मनागपि वैमत्यं नास्तीति ऐकशास्त्र्यमनङ्गीकुर्वतां शाङ्कराणामपि सम्मतिरस्तीति भामतीकल्पतरुपरिमलादिदर्शनेन निश्चिनुमः ।

## एकव्याख्येयव्याख्यानत्वं निर्दुष्टमिति प्रतिपादनम्

ननु एकव्याख्येयव्याख्यानत्वेन रूपेण पूर्वोत्तरमीमांसाशास्त्रयोरेकत्व-समर्थनं दुर्घटम्, वेदभाष्यादावपि तस्य सत्त्वेन व्यभिचार इति चेन्न - व्याख्यानघटकप्रतिज्ञाविषयनिरूपणपरत्वमेव एकव्याख्येयव्याख्यानत्वं भवति । तथा हि - अथातो धर्मजिज्ञासेति पूर्वमीमांसायाः प्रतिज्ञासूत्रघटकस्य धर्मशब्दस्य वेदबोधितश्रेयस्साधनताकत्वावच्छिन्ने शक्तिरिष्यते । तथा च यजेतेत्यत्र विधिप्रत्यय बोध्यस्य श्रेयस्साधनताकत्वस्य यागादौ विद्यमानत्वात् । यथा यागादौ विधिबोधितश्रेयस्साधनताकत्वमक्षुण्णं तथा उपासीतेत्यत्र उपासनेऽपि तदव्याहतमिति उपासनस्य धर्मशब्दार्थत्वे न कोऽपि दोषः । तथा च उपासनस्यापि सामान्यप्रतिज्ञाविषयत्वात् तद्धटक प्रतिज्ञाविषयनिरूपणपरत्वं वेदान्तभागस्यापि अप्रतिहतमिति एकव्याख्यानव्याख्येयत्वमीदृशं वेदभाष्यादौ न सङ्घाघटीति न केश्चिदपहीयते ।



## पादटिप्पणी

. सत्पथसञ्चारः - पृ.246
. न्यायदर्शनम् - 1-1-41
. मी.पा. 5
. मीमासादर्शनम् - 2-1-46
शतपथब्राह्मणम् - 11-5-7
तै.उ 2-1-10
बृ.उ 4-4-22
श्रु.प्र 1-1-1
भगवद्गीता - 18-5, 4
तै उ - 2-64
11. ब्र.सू. - 3 - 3 -24
12. ब्र.सू. 3-3-42
13. ब्र.सू. 3-4-20
14. पू.मी. 3-4-15
15. ब्र.सू. 3-3-1
16. पू.मी. 2-4-9
17. अ.सा. - 7
18. पू.मी. 5-1-2
19 तै.स. 2-4-6-7.
20 से.मी - प 7

21. मी.पा. परित्राणम्-पृ 245
22. अध्ययनविधिविचार पृ 162
23. श्रु प्र. 1-1-1
24. मी.पा परित्राणम्. पृ. 245
25. श्रीभाष्यम् 1-1-1
26. श्रीभाष्यम् 1-1-1
27. श्रीभाष्यम् 1-1-1
28. पूर्वमीमासा 1-1-1
29. ब्र.सू. 4-4-22
30. कठोपनिषद् - 2-15
31. भगवद्गीता 15-15
32. अनुमिति गादाधरी
33. मी.पा - श्लो.171
34. ब्रह्मसूत्रशाकर भाष्यम् - 2-1-1
35. पू.मी. 1-3-2
36. अधिकरणसारावली श्लो.323
37. मु.उ. 1-5
38. बृ.उ. 3-8-8
39. पू.मी. 3-3-9
40. ब्र.सू. 3-3-33
41. छा.उ. 4-15-5
42. ब्र.मी 4-3-1
43. ब्र.सू 3-4-51
44. से.मी 1-2-52
45. ब्र.मी. 3-1-1
46. नैषधम् 1-4
47. मु.उ 1-1-5
48. सुबालोपनिषद् - 2-1
49. छा.उ 7-1-2
50 मी.पा. 6
51. पु.सू. 7
52. मु.उ. 1-2-2
53. तै.उ. 2-10-24
54. मु उ. 3-1-8
55. जाबालोपनिषद् - 4
56. शाकरभाष्यम् 1-1-1
57. अ.सा. 10
58 मी.पा. 7
59. मी.पा. परित्राणम् - पृ.250
60. यादवाभ्युदय·
61. मी.पा. 8
62. पू.मी. 1-2-1
63. ब्र.सू. 3-2-39
64. ब्र.सू. 3-2-37
65. श्रु.प्र. 1-1-1
66 श्लोकवार्तिकम् - 1
67. भा.दी. 9-1-5
68. भा.दी. 9-1-5
69 ब्र.सू. 1-2-32
70 छा.उ. 5-24-1
71 ब्र.सू. 1-4-18
72. कौ.उ. 4-26
73. ब्र.सू. 4-3-11
74. ब्र.सू. 4-4-5
75. ब्र.सू. 4-4-11
76. ब्र.सू. 1-2-29
77 ब्र.सू 1-3-30
78. ब्र सू. 3-4-2
79. अ.सा 396
80. मी.पा. 9

★★★

# २. जिज्ञासाधिकरणविचारः

## अथातो धर्मजिज्ञासा 1-1-1

एवं महता प्रबन्धेन पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं न्यरूपि। तथा सति विंशतिलक्षण्याः मीमांसायाः सङ्ग्राहकस्य सूत्रस्य प्रतिज्ञारूपस्य वर्णनं कीदृशमभिमतं विशिष्टाद्वैतमत इति सम्प्रति अवशिष्टं भवति। तदत्र निरूपयामः।

अत्र अथातो धर्मजिज्ञासेति विंशति लक्षण्याः प्रथमं सूत्रम्। इदमेव सम्पूर्णस्यापि शास्त्रस्य अर्थं प्रतिजानाति। न केवलमिदं प्रतिज्ञारूपमात्रं, परं तु उपोद्घातरूपमपि भवतीति न तिरोहितमेतत् शास्त्रविदाम्। उपोद्घातो हि प्रकृतोपपादिका सङ्गतिः। तदुक्तं [1]'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुः बुधे''ति। अस्यायां भावः - प्रकृत सिद्ध्यर्थां-प्रकृतोपपादकविषयिणीम्। किमस्योपपादकमित्याकारिकां चिन्तां जिज्ञासाम् उपोद्घातम् उपोद्घातसङ्गतिनिर्वाहिकां विदुरित्यर्थः। अथवा कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायेन चिन्तापदं चिन्तनीयपरम्। प्रकृतसिद्ध्युपपादकतया चिन्तनीयत्वमित्यर्थः। तथा च प्रकृतसिद्ध्युपपादकत्वमुपोद्घातत्वमिति अर्थद्वयेनापि सम्भवति। तत्र उपपादकत्वं क्वचित् घटकत्वरूपम्। यथा अनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणम् तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरित्यत्र अज्ञातव्याप्तिकस्य सामान्यतो व्याप्तिपदवाच्यत्वेन का व्याप्तिरितिरूपायां जिज्ञासायां व्याप्तिनिरूपणं घटकत्वेन विद्यते। एवं क्वचित् उपपादकत्वं ज्ञापकत्वरूपमपि विद्यते। ज्ञापकत्वं च तद्विषयकज्ञानजनक ज्ञानविषयत्वम्। यथा अनुमिति प्रामाण्यविषयकज्ञानजनकं यद् व्याप्तिज्ञानं तद्विषयत्वं व्याप्ताविति। एवं क्वचित् उपस्थापकत्वरूपमपि

उपपादकत्वम्, यथा अत्र । तथा हि - विंशतिलक्षण्याः मीमांसायाः प्रतिपाद्य धर्मः । तथा च

[2]"**विषयो विशयश्चैव विचारो निर्णयस्तथा ।**
**प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ।।**" इति

" **विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।**
**प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ।।**"

इति च तत्र तत्र अधिकरणस्वरूपं निगद्यते । एतादृशाङ्गपञ्चकविशिष्टन्यायेनैव विषयवाक्यस्य याथार्थ्यं विधार्य तत्रापतितान् पूर्वपक्षान् निरस्य स्वपक्षं स्थापयति सिद्धान्तीति सर्वविदितमेतत् । तदाहुः -

[3]"**निष्पन्नापातबुद्धे र्विषयविशयानाभ्यूहनिर्धारणार्थान्**
**न्यायः पञ्चाधिकुर्वन् अधिकरणमिति व्याहरन्त्यार्थवृद्धाः ।**
**तस्मादेकैकशः प्रत्याधिकरणमिदं पञ्चकं प्रेक्षमाणः**
**शुद्धाङ्गन्यायदृष्टिः श्रुतिगण विषयभ्रान्तिभेदं प्रमार्ष्टि ।।**" इति ।

## विषयादीनां न्यायकार्यनिरूपणम्

विषयो नाम यथावदर्थप्रकाशरहितं वाक्यम् । यः स्वतः विशेषरूपेण विचारे अकृते सति निश्चयात्मकं यथार्थरूपं ज्ञानं स्वविषयकं बध्नाति स विषयः । निश्चयान्या बुद्धिः विशयो भवति । संशये सति पक्षप्रतिपक्षयोः प्रमाणपूर्वकं यत्र परिशील्यते स एव विचार इत्युच्यते । विचारो नाम अभ्यूहः । विचारे कृते सति अबाधितं ज्ञानं जायमानमेव निर्णय इत्युच्यते । स च तर्कादिप्रमाणजनितः । यत्कृते एतद्वाक्यार्थान्वेषणं विहितं तत् फलशब्दवाच्यं भवति । एवं सति यथार्थभूतस्य तत्त्वस्य परिज्ञानात् अप्राकशभूतस्य विषयस्यापि विषयत्वावस्था दूरीकृता भवतीति ज्ञेयम् । तदिदमाहुः

[4]"**स्वेन ख्यातिं विवृण्वन् विषय इह मतिस्संशयो निश्चयान्या**
**तेनाभ्यूहो विचारः प्रमितिरभिदुरा निर्णयस्तर्कमानैः ।**
**तत्साध्यं कर्तुरिष्टं फलमनितरजं तानि पञ्चाधिकुर्वन्**
**न्यायो बाधं विपक्षे प्रथयति विविधं स्वाङ्गदोषो न दृष्टे ।।**" इति ।

धर्मप्रतिपिपादयिषुस्सूत्रकारः प्रथमसूत्रे धर्मविषयसूत्रारभ्यत्वमेव समर्थयति। तत्र तदुपस्थापकं पदम् 'अत' इति विद्यते। साङ्गवेदाध्ययनानन्तरं धर्मविचारः कार्यः। तत्र हेतुतामुपस्थापयति अतश्शब्दः। एतेन **अथात** इति समुदितयोः पदयोरानन्तर्यमर्थ इति भवदासकथनं, तथा **अथातो धर्मं व्याख्यापस्याम** इति विद्यमानस्यैव प्रकथनमात्रमिति काणादकथनं चापास्तम्। इदं तु मीमांसाख्यं शास्त्रं न्यायनिबन्धनपरम्। अतस्सर्वोऽपि सौत्रशब्दः न्यायपरत्वावलम्बनेन वर्णनीय इति अतश्शब्दः हेतुतोपस्थापक इत्येव सुवचम्। तदाहुः मीमांसापादुकाकृतः -

[5]"**चिन्तारभ्यत्व सूत्रे किमपि हि तदुपस्थापकं ख्यापनीयं**
**तेनातश्शब्द उक्तो न खलु स विफलः पूर्वसम्पिण्डितो वा।**
**नासावार्षोपदेशो नयपदमनुसन्धित्सतां सूत्रसृष्टेः**
**तस्मात् चिन्तार्थचिन्तास्पदमधिकरणं स्यादुपोद्घात एषः॥**" इति।

अतस्सिद्धं धर्मविचार सिद्ध्यर्थतदारभ्यत्वविचारविषयकत्वात् उपोद्घातरूपं प्रथममधिकरणं प्रवृत्तमिति।

## अधिकरणस्वरूपविचारः

ननु किमिदमधिकरणं नाम ? किं वा तस्य स्वरूपम्? इति चेद्-अत्र ब्रूम - अधिकरणं नाम न्यायः। आपातप्रतीतवाक्यार्थविषयत्वे सति न्यायत्वम् इति अधिकरणस्य लक्षणं भवितुमर्हति। मीमांसाशास्त्रमधिगन्तुं साङ्गवेदाध्ययनानन्तरमेव प्रवर्तत इति तन्त्रविदां सम्प्रदायः। तथा च साङ्गवेदाध्ययनानन्तरं यस्य पुरुषस्य यत्र आपातप्रतीतिः संशयात्मिका भवति तत्र तस्य पुरुषस्य संशय निवर्तनक्षमा बुद्धिरपेक्षते। सैव न्यायशब्देन उच्यते। स एव न्यायः अधिकरणापरपर्याय इत्यपि ज्ञेयम्। तत्र (न्याये) विषयः, संशयः, विचारः, निर्णयः, तत्सम्पाद्यं फलमिति पञ्च अङ्गानि वर्तन्ते।

## अधिकरणस्य दशाङ्गपक्षप्रदर्शनम्

अत्र केचित् अधिकरणस्य दश अङ्गानि निरूपयन्ति। तदुक्तं मीमांसापादुकापरित्राणे -

6"सङ्गतिर्विषयश्चैव संशयोत्थानकारणम् ।
संशयस्य प्रकारश्च तदर्था च विचारणा ।।
तस्यां फलफलित्वं च न्यायौ द्वौ पक्षयो र्द्वयोः ।
निर्णयस्तत्फलं चेति बोध्यान्यधिकृतौ दश ।।" इति ।

दशाङ्गपक्षोऽपि न्यायविदां सम्प्रदाय एवेति सुनिपुणं प्रदर्शयति मीमांसापादुकाकारः -

7"आहुश्चान्ये दशाङ्गान्यधिकरणगणे वेद्यमाद्यं तथाऽर्थे
संशीतिं तन्निदानं विविधमपि तथा सङ्गतेश्च प्रकारम् ।
तादर्थ्यार्थं विचारं फलफलिभवनं पक्षयो र्न्याययुग्मं
निर्णीतिं तत्फलं चाप्ययमपि निपुणन्यायवित्सम्प्रदायः ।।"

इति । अस्यायं भावः - अधिकरणस्य प्रथममङ्गं विषयः । द्वितीयं संशयः । तृतीयं संशयोत्थित हेतुः । चतुर्थं पूर्वाधिकरणेन सह अस्य अधिकरणस्य सङ्गतिः । पञ्चमं तत्संशय निराकरणार्थस्तदनुबन्धि विचारः । षष्ठं तादृशविचाराणां फलफलिभावः । सप्तमं पूर्वपक्षसाधकन्यायाभासः । अष्टमं सिद्धान्तपक्षन्यायः । नवमं निर्णयः । दशमं तत्प्रयोजनम् । एतादृशोऽपि दशाङ्गक्रमः श्रुतप्रकाशिकायां शास्त्रदीपिकायाम् अधिकरणसारावलि व्याख्याने चिन्तामणौ च समादृतो वर्तते । तथा च दशाङ्गकं वा पञ्चाङ्गकं वा अधिकरणं न्यायापरपर्यायं भवतीति प्रतीमः । अत एव अधिकरणमाला, न्यायमाला इत्यादिग्रन्थ व्यवहारो न्यायग्रथितेषु ग्रन्थेषु दरीदृश्यते । एवं क्वचित् षडङ्गपक्षोऽपि अधिकरणस्य श्रूयते - यथा -

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं सङ्गतिश्च शास्त्रेऽधिकरणं स्मृतम् ।।"

इत्यलमतिविस्तरेण ।

## भाट्टमतेन जिज्ञासाधिकरणविचारः

एवमधिकरण शब्दार्थो निरूपितः । सम्प्रति क्रमप्राप्त प्रथमाधिकरणरचना क्रियते । यद्यपि सेश्वरमीमासायां मीमांसापादुकायां च प्रथमाधिकरणरचना

स्वमतेनैव प्रथमं कृता तथापि स्वमतं बहुग्रन्थगर्भितत्वात् अबाधितत्वाच्चोत्तरत्र निरूपयिष्यते, तथा पूर्वमीमांसायां भाट्टप्राभाकररूपप्रस्थानद्वयेऽपि प्रथमाधिकरणरचना कीदृशी समादृतेति स्पष्टप्रतिपत्त्यर्थमादौ प्रदर्श्यतेऽत्र अध्ययनविधिविचारः।

तत्रापि प्रथमं भाट्टसम्मतामधिकरणरचनां कुर्मः। तथाहि जैमिनि मुनि प्रवर्तितस्य मीमांसाशास्त्रस्य श्रोतृप्रवृत्तिसिद्धचर्थं प्रथमसूत्रम् 'अथातो धर्मजिज्ञासे'ति विषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धिचतुष्टय घटकं प्रवृत्तमिति

[४]"**अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम्।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्॥**"

भट्टकुमारिलवचनानुरोधं प्रतीमः।

अधिकरणस्यास्य विषयः - 'स्वाध्यायोऽध्येतव्य' इति विधिवाक्यम्। प्रकृताधिकरण घटकीभूत संशय विशेष्यत्वं हि विषयत्वं भवति। तथा चात्र संशयप्रकारस्त्वेवं भवति - यथा किमयं विधिः स्वर्गाद्यर्थ स्वाध्यायाध्ययनं विधत्ते? अतश्च अध्ययनं यावत् गुरुकुले अवस्थाय 'अधीत्य स्नायादि'ति स्मृतिबलात् अध्ययनसमनन्तरं किं गुरुकुलात् समावर्तितव्यम्? अथवा अक्षरराशि-ग्रहणपरम्परोपजायमानवाक्यार्थज्ञानार्थम् अध्ययनं विधत्ते? ततश्च तस्य विचारं विना असम्भवात् अध्ययनविधिनैव अर्थात् विचारो विहित इति गुरुकुल एव स्थित्वा वेदवाक्यार्थरूपमीमांसाऽपि परिसमाप्य अनन्तरं गुरुकुलात् समावर्तितव्यम्? इति। न चात्र स्वर्गाद्यर्थमध्ययनमिति पक्षप्रदर्शनमेवासाधु स्वर्गस्यानुल्लेखात् इति वाच्यम्। विश्वजिदादिवत् तदुपपत्तेः। तथा हि - विश्वजिता यजेतेत्यत्र विध्यवरुद्धायां यागभावनायां प्रत्ययावततातायां पुरुषार्थरूप-भाव्याकाङ्क्षिण्यां सत्यामश्रुतमपि फलं कल्पनीयम्। कल्प्यमानमपि सर्वापेक्षित्वेन स्वर्ग एव स्यादिति 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इत्यत्र निर्णीतम्।

## भाट्टमतेन पूर्वपक्षप्रस्तावः

अत्रायं पूर्वपक्षप्रकारः - 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वध्यायाध्ययनं न किमपि दृष्टरूपं प्रयोजनमुद्दिश्य प्रवृत्तम्। तथा हि - दृष्टार्थत्वे अध्ययनस्य सिद्धे

सति विधे अपूर्वविधित्वं वा युक्तं कल्पयितुम् । अध्ययनसत्त्वे अर्थज्ञानसत्त्व अध्ययनाभावे अर्थज्ञानाभाव इत्यन्वय व्यतिरेकमात्रेण, विमतं वेदाध्ययन अर्थज्ञानहेतु· अध्ययनत्वात् भारताद्यध्ययनवत् इत्यनुमानेन चाध्ययन अर्थज्ञानार्थत्वावगते विधेरानर्थक्यात् अध्ययनविधिर्नापूर्वविधिः ।

एवमध्ययनविधेरनारभ्याधीतत्वात् क्रत्वपूर्वे नियमः कर्तुं न शक्यं क्रत्वनङ्गत्वात् । अतो नायं नियमविधिः ।

एवं नायं परिसंख्याविधिरपि । परिसंख्यायाः इतरनिवृत्तिफलकत्वात् । चेतरनिवृत्तिरत्र श्रौती 'अत्र ह्येवावपन्ति' इतिवत् न कल्पयितुं युक्ता । ना पञ्चपञ्चनखाभक्ष्या इतिवत् लाक्षणिकी वा । अतोऽध्ययनस्य दृष्टार्थत्वं परित्यज अदृष्टार्थत्वं स्वीकर्तव्यम् ।

## अध्ययनविधौ आर्थवादिकफलकल्पनाप्रदर्शनम्

एवं सति अदृष्टरूप फलाकाङ्क्षायामार्थवादिकं फलकल्पनमेव रात्रिसत्रव युक्तमिति स्वीकुर्मः । तथा हि - [9]'प्रतितिष्ठन्ति हवा एते य एता रात्रीरुपयन्ति इत्यत्र रात्रिसत्रे प्रतिष्ठापदश्रवणात् आर्थवादिकमेव फलं कल्पितम् । त स्वर्गकामादिसमं कामशब्दान्तफलबोधकपदाश्रवणेन भावनायाः भाव्याकाङ्क्ष नोपशाम्यति । अर्थवादे प्रतिष्ठाख्य पुरुषाभिलषितवस्तुनिर्देशेन भावनाय भाव्याकाङ्क्षा तेन पूर्यते, नातः स्वर्गादिकल्पनम् । तथा चोक्तं पूर्वतन्त्रे [10]'फलमात्रेयं निर्देशात् अश्रुतौ ह्यनुमानं स्यात्' इति । तथा च रात्रिसत्रयागस्य यथा प्रतिष्ठाख्य फलमार्थवादिकं कल्पितं तद्वदत्रापि (अध्ययनविधौ) कल्पनीयम् । कथमिति चेत - अत्र ब्रूम. । [11]'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति' इति [12]'यदृचोऽधीते पयस कूल्या अस्य . . . . . . . . . . आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेन अन्नाद्येन च तर्पयन्ति' इति च श्रुतौ अध्ययनेन तत्तत्क्रतुफलावाप्तिः आयुराद्यैश्वर्यप्राप्तिश्चाभिहिता दृश्यते । एवं

> [13]'**यस्तु सम्यक् द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ।**
> **आहैव स नखाग्रेभ्यः परमं तप्यते तपः ॥"**

इति मनुस्मृतौ तपः फलप्राप्तिरपि विहिता। तथा चैतादृशम् आर्थवादिकं फलमनादृत्य किमर्थं लोकतः प्राप्तमर्थज्ञानरूपं दृष्टफलान्वेषणम्?

## आर्थवादिकफलकल्पनया अयुक्तत्वप्रदर्शनम्

अयमत्र परमार्थः - ग्रहणधारणजपयज्ञादिरूपेण अध्ययनं त्रिविधं भवति। तत्र पूर्वोक्तानि आर्थवादिकानि फलानि ब्रह्मयज्ञप्रकरणे पठितानीति तानि फलानि धारणाध्ययनविषयाणीति ज्ञेयम्। आद्यं त्वध्ययनं ग्रहणरूपमत्र विचारस्य विषयो भवति। तत्र आर्थवादिकी फलश्रुतिः कथमपि सङ्गाघटीति। अत एवोक्तं न्यायरत्नमालायाम् -

[14]"**आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः।**
**धारणे जपयज्ञे च फलश्रुतिरियं यतः॥**" इति।

अतः विश्वजिन्न्यायेनात्र स्वर्गस्यैव फलत्वकल्पनात् अध्ययनमदृष्टार्थमिति सिद्ध्यति। तथा च अर्थज्ञानसंस्पर्शमन्तरा केवलोच्चारणेनैवाध्ययनविध्यर्थानुष्ठान-सिद्धेः तत्समनन्तरम् 'अधीत्य स्नायात्' इति स्मृतिप्रमितस्य स्नानरूपस्य समावर्तनस्य प्राप्तत्वात्, पश्चादापाततः प्रतीतानां वेदार्थानां निर्णयाय तद्धेतुभूते विचारे स्वयमधीतवेदः पुरुषः प्रवर्ततां ? मा वा? तस्मात् स्मार्तस्य स्नानस्य उत्कर्षोऽध्ययनविधिना नाक्षिप्यते। एवं च विचाररूपस्य मीमांसाशास्त्रस्य वैधत्वं न सिद्ध्यतीति मीमांसाशास्त्रं नारम्भणीयमिति फलति इति भाट्टाभिमतः पूर्वपक्षसारः।

## अध्ययनविधिनिरूपणे भाट्टमतेन सिद्धान्तकथनम्।

अत्रायं सिद्धान्तवर्णनप्रकारः - अप्रतीतं हि वस्तु किञ्चित् प्रकल्प्यमानं न फलत्वेन स्वीकर्तुं युक्तम्। तथा च अत्यन्तमप्रतिपन्नं स्वर्गादिफलं कल्पयित्वा अध्ययनस्य तत्साधनत्वकल्पनं तावत् अत्यन्तं गौरवग्रस्तं भवति। दृष्टरूपफलार्थज्ञाने सम्भवति सति अदृष्टफलकल्पनाया अन्याय्यत्वात्। 'दृष्टे सम्भवति अदृष्ट कल्पनाया अन्याय्यत्वादि'ति हि न्यायविदः। न्यायस्यास्य मूलं कल्पनालाघवमेव।

न चैवं सति अध्ययनस्य अर्थज्ञानफलकत्वे पूर्वोक्तरीत्या लोकत एव अवगतत्वात् विधिविषयत्वानुपपत्तिरिति वाच्यम्, नियमविधिमत्र स्वीकुर्म इति न किञ्चिदपहीयते। तदुक्तं [15]'विधेश्च नियमार्थत्वात् नानर्थक्यं प्रसज्यते' - इति।

## अध्ययनविधेर्नियमपरत्वे प्रकारद्वयोपपादनम् (पार्थसारथिमिश्रमतरीत्या)

पार्थसारथिमिश्रा: विधेर्नियमपरत्वे प्रकारद्वयमुपापीपदन्। तत्र आद्य: प्रकार:- अवघातो यथा क्रत्वपूर्वे नियमित:, न तथा अध्ययनं नियम्यते क्रत्वपूर्वे। अनारभ्याधीतत्वात् अध्ययनस्य। तथा हि - 'व्रीहीनवहन्ति' इत्यत्र वितुषीभावसाधनत्वेन अवघात: श्रूयते। तस्य लोकत एव प्राप्तत्वेऽपि अवघातविष्पन्नैरेव तण्डुलै: कृतेन पुरोडाशेन कृते दर्शपूर्णमासयागे अपूर्वं सिद्ध्यति, न तु नखविदलनादिनिष्पन्नैरपि तण्डुलैरिति नियमप्रकारस्समादृत:। अवहननविधेर्दर्शपूर्णमासविधिप्रकरेण पठितत्वात् तत् युज्यते। अनारभ्याधीते अध्ययनविधौ न तथा वक्तुं युक्तम्। अतोऽत्र अधिकारिनियम: प्रदर्श्यते। अग्निहोत्राद्यनुष्ठानयोग्यतारूपाधिकारे अध्ययनं नियम्यते। यागे द्विजातीनामेवाधिकारो नान्यस्येति नियमप्रकारस्सिद्ध्यति। अत: स्वाध्यायाध्ययनविधेस्तादृशाधिकारनियम एव प्रयोजनमिति फलति।

## अधिकारनियमस्वरूप विवेचनम्

इदमत्र तत्त्वम्। हस्तपादादिना सर्वेषां समानत्वेऽपि अग्निहोत्रादिवैदिकानुष्ठानकर्मसु अधीतवेदा एव अधिकृता नान्ये। वेदाध्ययनेऽपि वर्णत्रयबहिर्भूतास्त्वनधिकृतास्सन्ति। शूद्रादे: अध्ययनप्रतिषेधश्रवणेन तदधीनो यागाद्यधिकारोऽपि नैव तस्य सम्भवेत्। अन्यथा विशेषाभावेन शूद्रस्यापि यागे अधिकार: सम्भवेत्। सति चाध्ययनविधौ अधीतवेदानामेव द्विजातीनां यागेऽधिकारो वक्तव्य:। वेदाध्ययन चोपनीतैरेव कर्तव्यम्। उपनयनं च 'वसन्ते ब्राह्मणमुपनयीत', 'ग्रीष्मे राजन्यम्' 'शरदि वैश्यम्' इत्यादिवचनै: द्विजातीनामेव विहितमिति न शूद्रस्य अधिकारगन्ध:। अध्ययनविधेरसत्त्वे न कोऽपि अध्ययनं कुर्यादिति

अधीतवेदालाभेन अग्निहोत्रादिविधायकानि वाक्यानि निरर्थकानि भवेयुः। विद्या विना यागस्वरूपापरिज्ञानात् तदनुष्ठानं दुष्करं स्यात्। एवं सति अग्निहोत्रादि कर्मविधायकं शास्त्रं वेदाध्ययनमाक्षिपेत्। आक्षिप्ते च वेदाध्ययने सर्वेषामपि वर्णाना तदनुपातियागाद्यधिकारप्रसक्तिः स्यात्। सति चाध्ययनविधौ उपनीताना-मेवाध्ययनेऽधिकारः, अधीतवेदानामेव च कर्मस्वधिकार इत्यापतति। तच्चोपनयन द्विजातीनामेवेति कर्मसु द्विजातीनामेवाधिकारो न शूद्रस्येति फलति।

"वसन्ते ब्राह्मणमुपनयीत" "ग्रीष्मे राजन्यं" "शरदि वैश्यम्" इत्यादौ ब्राह्मणत्वावच्छिन्ने क्षत्रियत्वावच्छिन्ने वैश्यत्वावच्छिन्ने च ब्राह्मणादिशब्दोत्तरद्वितीयादिनिर्देशात् उपनयनसंस्कार्यत्वं प्रतीयते। [16]"सस्कारो हि नाम कार्यान्तरयोग्यताकरणमि"ति भगवद्रामानुजकृत श्रीभाष्यवचनानुरोध संस्कृतस्योत्तरत्रोपयोगावश्यभावित्वं स्वीकर्तव्यम्। तथा च उपनयनविधौ आचार्येण आहूतस्य शिष्यस्य मया किं कर्तव्यमिति जिज्ञासावत् उपनयनेन संस्कृतास्त्रैवर्णिकाः किमस्माभिः कर्तव्यमिति स्वकर्तव्यतां अपेक्षन्ते। स्वाध्यायाध्ययनविधौ तु कर्ता अनिर्दिष्ट इति तत्र कर्त्रपेक्षा विद्यते। तथा चोपनीतानां त्रैवर्णिकानां स्वकर्तव्यत्वापेक्षा अध्ययनस्य स्वकर्त्रपेक्षा चास्ति। उपनयनवाक्यै-स्सह अध्ययनवाक्यस्य सन्निधिरप्यस्ति। उपनीतानामध्ययनयोग्यतापि वर्तते। तथा च आकाङ्क्षासविधियोग्यतानां सत्त्वात् नष्टाश्वदग्धरथन्यायेन अध्ययनोपनीतयो. कर्मत्वेन कर्तृत्वेन च परस्परं प्रकरण स्थानाभ्यामन्वयो जायते। अत उपनीतेर्द्विजातिभिरेवाध्ययनं कर्तव्यम्। तदनन्तरमधीतवेदै. तदर्थज्ञानं सम्पादनीयम्। तदनन्तरमध्ययनसिद्धार्थज्ञानवतैव कर्मानुष्ठेयमिति नियम. फलति। अन एवोपनयनाध्ययनक्रतुविधीना साफल्यमपि सिद्धम्। तथा चोक्तं भाट्टचिन्तामणिकृता गागाभट्टेन [17]"अध्ययनविधिः कर्तृसापेक्षः कार्यपेक्षान् उपनीतानेव कर्तॄन् गृह्णातीति अध्ययनविधिप्रयुक्ताध्ययनजन्यार्थज्ञानं त्रैवर्णिकानामेव सिद्ध्यति" इति।

## क्रत्वनुष्ठाने शूद्रस्याप्यधिकारप्रसक्तिः - तत्परिहारश्च।

ननु 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वपरम्परागत स्वशाखाध्ययनमेव विवक्षितमिति तु निर्विवादम्। यत्र बह्वङ्गविधायकशाखान्तरोत्पन्नं कर्म श्रूयते तत्र

शाखान्तरगताङ्गमन्त्रोपसंहारार्थं तद्गतवाक्यार्थग्रहणमपि क्रतुविधिना आक्षेपत: ग्राह्यमिति मीमासामर्यादा। एवं सति यथा शाखान्तरवाक्यार्थग्रहणाक्षेप: त्रैवर्णिकानां सम्मत:, तथैव शूद्रस्यापि विद्या आक्षिप्यताम् इति चेद् - अत्र ब्रूम:। शूद्रस्याध्ययनं क्रतुविधिभि: नैव आक्षिप्यते, गौरवात्। अतस्तस्य अर्थज्ञानं तदधीन: क्रत्वधिकारश्च नैव सम्भवत:। द्विजातीनामेव शाखान्तरोक्ताङ्गोपसंहारार्थं तदध्ययनं क्रतुविधिभिराक्षिप्यत सति तु अस्माकं समीहितमेव। न तथा शूद्रस्यापि क्रतुविधिभिरेव विद्याक्षेपो भवितुमर्हति, वैषम्यात्। 'उपनीय तु य: शिष्यम्' इत्यादिवचनैरध्ययनस्य उपनयनपूर्वकत्वं प्रसिद्धम्। उपनयनं च त्रैवर्णिकानामेव विहितमिति सप्रमाणं प्रागेवादिष्म। तथा च त्रैवर्णिकविषये शाखान्तराध्ययनम् आक्षिपतां क्रतुविधीनां लाघवं वर्तते। शूद्रविषये तु अध्ययनमाक्षिपद्भि: क्रतुविधिभिस्तदङ्गभूतमुपनयनमपि आक्षेप्तव्यम् आपति। न हि शूद्रस्य उपनयनं विहितं दृश्यते। अत: क्रतुविधीनामाक्षेपे गौरवं वर्तते। एवं गुरुभूतमाक्षेपं विनैव लब्धात्मान: क्रतुविधयो नैव शूद्रस्य अध्ययनमाक्षिपेयु:। तस्मात् तस्य क्रत्वाधिकारो न कथञ्चित् जाघटीति।

अथैवं मनुषे - क्रत्वनुष्ठानस्य अर्थज्ञानमेव अपेक्षितं, न वा उपनयनम्, नापि अध्ययनम्। तथा च तच्चार्थज्ञानं यथा त्रैवर्णिकै: उपनयनपूर्वकाध्ययनेन सम्पाद्यते, तथैव शूद्रैरपि लिखितपाठाद्युपायान्तरेण क्रत्वनुष्ठानोपयोग्यर्थज्ञानं सम्पाद्य क्रतुषु अधिकार: प्राप्यतामिति इति - तन्न विचारसहम् - क्रत्वनुष्ठानापेक्षितमर्थज्ञानमध्ययनेनैव सम्पादनीयमिति नियमस्वीकारात्। अत एव त्रैवर्णिकेष्वपि येऽनधीतवेदास्तेषां क्रतुष्वधिकारो दूरीकृत:। अन्यथा अध्ययनविधेरानर्थक्यापत्तिप्रसङ्ग:। तस्मात् कथञ्चिदपि शूद्रस्याधिकारो न क्रतुषु सम्भवति। एतेन स्वाध्यायोऽध्येतव्य इत्यध्ययनविधे. क्रत्वधिकारनियमार्थत्वं निर्व्यूढम्। एतत्पक्षे नियम एव वाक्यार्थ इति ज्ञेयम्। एतत्सर्वं

[18]"**सत्यमध्ययनं नाङ्गं तत्कृतात्वङ्गमर्थधी:।**
**तद्वत: क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम्॥**"

इति कारिकया पार्थसारथिमिश्रपादस्समग्रहीत्। अत्र अध्ययनेनैव अर्थज्ञानं

सम्पादयेत् - अध्ययनेनैव क्रत्वपेक्षितज्ञानं सम्पादनीयमिति नियमस्वरूपं भवति। एतदेव न्यायमालाकृता माधवाचार्येण [19] "दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियमकम्" इति व्यवारि। एवं महता प्रबन्धेन नियमविधौ प्रथमः प्रकार. प्रदर्शितः।

## अध्ययनविधेः फलतोनियमविधित्वरूपः द्वितीयः प्रकारः

द्वितीयः प्रकारस्त्वित्थं प्रवर्तते तद्यथा - स्वाध्यायोऽध्येतव्य इत्यध्ययनमर्थज्ञानार्थमिति शास्त्रमर्यादा। न चाध्ययनमर्थज्ञानार्थमिति लोकत एव प्राप्तमिति विधिस्तत्र अनर्थक इति शङ्का कार्या, विधेर्नियमार्थत्वात्। यदि वाक्यार्थ एव नियमः स्यात् तर्हि तस्य स्वरूपम् अध्ययनेनैव अर्थज्ञानं सम्पादयेदिति स्यात्। न त्वेवं सम्भवति। अध्ययनं विनापि तत्सम्भवात्। तस्मादध्ययनेन अर्थज्ञानं सम्पादयेदिति अप्राप्तविधिरेव स्वीक्रियते। न चैवं सति अध्ययनस्य अर्थज्ञानहेतुत्वं लोकत एव सिद्धमिति अप्राप्तत्वं विधेर्नसम्भवतीति वाच्यम्, उपनीताना त्रैवर्णिकानां कर्मानुष्ठानौपायिकज्ञानसम्पादनार्थं तज्जननसमर्थलिखितपाठहितैषि-वचनादिना नोपायपरिग्रहः कर्तव्यः। स च तद्गत (उपायगत)सामर्थ्य परामर्श्य कर्तव्यतया विलम्बितो भवति। अध्ययनं तु प्रत्यक्ष श्रुति विहिततया ततः पूर्वमेव उपनीतान् त्रैवर्णिकान् अधिकृत्य प्रवर्तते। श्रुतिलिङ्ग विरोधे श्रुतेरेव शीघ्रं प्रवृते·।

न चैवं सति अध्ययनस्यापूर्वविधित्वमस्तु नियमविधिफलकत्वं मास्तु इति वाच्यम्, असत्यध्ययनविधौ क्रतुविधय स्वानुष्ठानज्ञानसाधनत्वेन नानोपायानाक्षिपेयु , सति तु तस्मिन् अध्ययनसिद्धज्ञानवतोऽधिकारिण· प्राप्तत्वात् नोपायान्तरमाक्षिपेयु। अतोऽध्ययनसम्पादितमेव अर्थज्ञानमुपजीव्यत इति फलतो नियमयुक्तिर्दष्टव्या। अस्य च द्रढीकरणं भाष्ये [20]'अवैद्यत्वादभाव. कर्मणि स्यात्' इत्यत्र वर्तते। एवं च क्रतुविधीनामर्थज्ञानाक्षेपकत्व नास्ति। अर्थज्ञानस्य तु उपायान्तरेणापि प्राप्तत्वात् अध्ययनेनैव तत् सम्पादनीयमिति विधिरयं बोधयति। अर्थज्ञानहेतुत्वेन अध्ययनस्य लोकत एवावगतत्वात् ज्ञातविषये प्रवर्तमानोऽयं विधिरवघातादिविधिवत् नियमविधित्वमापद्यते। अध्ययनेनैवार्थज्ञान सम्पादयेदिति नियमप्रकारस्समस्ति।

## नियमप्रकारद्वयस्यापि ऐकरस्यप्रदर्शनम्

एवं चाध्ययननियमस्साक्षात् सम्भवति, अधिकारनियमस तदनुविधायीति ग्रन्थद्वयस्याप्यैककण्ठ्यं सम्भवति। अध्ययननिय स्वाध्यायोऽध्येतव्य इत्यध्ययनविधे साक्षात्फलभूतः। त्रैवर्णिकानामेव धिकारोऽध्ययने न शूद्रादेरित्यधिकारनियमस्तु तदनुविधायीति ग्रन्थद्वयस्या सामञ्जस्यं भवतीति ज्ञेयम्।

तस्मादर्थज्ञानार्थत्वादध्ययनस्य तस्य च विचारमन्तरेण असम्भवात् तदनन धर्मजिज्ञासा कर्तव्येति सिद्धम्। इति भाट्टमतसारः।

## अध्ययनविधिविचारे प्राभाकरमतवर्णनम्

अयमत्र प्राभाकराणां सरणिः - स्वाध्यायोऽध्येतव्य इत्यत्र स्वाध्यायाध्यय न स्वविधिप्रयुक्तम्, तत्र नियोज्याश्रवणात्। नियोज्यं विना तस्य विधित्वानुपपत्ते अस्यायं भावः - लिङादयः स्थायिरूपं कार्यमेव व्युत्पत्तिबलादभिदधति। त कार्यत्वेन प्रतीयते। तस्य च कार्यत्वे स्वतोऽनुष्ठातुमशक्यतया विषयानुष्ठाने सम्भवतीति तदनुष्ठाता कर्ता आक्षिप्यते। कर्तृत्वं चाधिकारं विना न सम्भवति। हि मदीयमिदं कर्मेति जानाति स एव तदनुतिष्ठति। स चाधिकारो नियोज्यत्वमन्तरेण सम्भवति। यो हि नियोगं ममेदं कार्यमिति जानाति, स एतत्सा कर्म मदीयकार्यसाधनतया मदर्थमित्यध्यवस्यति। न च तत् विशेषणं वि भवितुमर्हतीतितद्विशेषणत्वेन पशुपुत्रादिनानासुखसाधनानि बोध्यन्ते अश्रुतनियोज्यस्थले तु सुखसामान्यलक्षणः सर्वापेक्षितस्स्वर्गो नियोज्यविशेषणत परिकल्प्यते। यद्यपि श्रुतिनियोज्यस्थले नियोगस्य नियोग्याकाङ्क्षा कर्त्रधिक प्रणालिकयैव भवति, तथापि तत्र नियोज्यस्य साक्षाच्छ्रुतत्वात् प्रथमं तेनैवान्वय सोऽपि नियोज्यत्वसिद्धये अधिकारिकर्तृभ्यामित्याकाङ्क्षाक्रममनादृत्यैव। विश्वजि यजेतेत्यश्रुतनियोज्यकस्थले तु त्रयाणामपि अश्रुतत्वाविशेषात् आकाङ्क्षाक्रमेण कर्त्रधिकारि नियोज्यान्वय इति प्राभाकरसरणिः। अतः फलमे नियोज्यविशेषणमिति पर्यवस्यति। तथा च नियोगः स्वकार्यतानिर्वाहार्थं स्वविषयानुष्ठानसिद्धये स्वनियोज्यस्य फलं साधयति, स्वामिवत्। यथा स्वा

स्वसंविधानार्थमेव गर्भदासस्योपकरोति, तथा नियोगोऽपि । तदुक्तं प्रकरणपञ्चिकायाम्

[21]"**आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।**
**कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ।।**" इति ।

अपि च यतो नियोज्यान्वयः कर्त्रधिकारि प्रणालिकया नियोगानुष्ठानसिद्ध्यर्थ एव, अतो यत्रान्यतोऽनुष्ठान लाभस्तत्र न नियोज्यकल्पन, यथा स्वाध्यायाध्ययनविधौ । स हि अध्यापनविधिप्रयुक्तस्वविषयानुष्ठानो न नियोज्यमपेक्षते । अध्यापनविधिश्च अध्ययनमन्तरेण अध्यापनासम्भवात् अध्ययनमपि प्रयुंक्ते । एवमध्ययनस्य अध्यापनविधिप्रयुक्तत्वं स्वीकार्यम् ।

एवमध्यापनविधिप्रयुक्तत्वमध्ययनस्य स्वीकृत्य किमस्य आचार्यत्वसिद्धिरेव प्रयोजनम् ? उत अन्तरङ्गत्वादर्थज्ञान वेति संशयो वर्णितः ।

## प्राभाकरमतेन पूर्वपक्षवर्णनम्

तत्र पूर्वपक्षः - 'स्वाध्यायोऽध्येतव्य' इत्यत्र विधे प्रयाजनापेक्षायां पुरुषान्तरगतमाचार्यकमेव बहिरङ्गमपि फलत्वेन अन्वेति । अन्तरङ्गं माणवकनिष्ठमर्थज्ञानं तु न बलीयः इति जघन्यं भवति । अन्तरङ्गस्य प्राबल्यं तु तुल्यकालप्राप्तिविषयम् । विधे. प्रयोजनाकाङ्क्षायां भिन्नकालप्राप्तयोः प्रयोजनयोः प्रथमभाविनैव प्रयोजनेन अध्यापनविधिना आचार्यकरूपफलेन अध्ययनविधेर्निराकाङ्क्षत्वात् पश्चाद्भावी अर्थज्ञानं माणवकनिष्ठमन्तरङ्गमपि न क्षोदक्षमं भवति । तदुक्तं शालिकनाथपादैः शास्त्रमुखपञ्चिकायां [22]'तुल्यायां हि प्राप्तौ अन्तरङ्गता बलीयसी । न चानयोरधिकारयोः तुल्या प्राप्ति । प्रथमोपनिपातित्वात् प्रयोजक विध्यधिकारस्य उत्तरकालभावित्वाच्च अर्थावबोध निबन्धनस्याधिकारस्य' इति । तस्मादध्ययनस्य अध्यापननिष्पत्त्यर्थत्वात् स्वाध्यायस्य च तच्छेषत्वात्, प्रतीयमानोऽपि स्वार्थो न तात्पर्यविषयः । अतोऽध्ययनस्य आचार्यत्वसिद्ध्यर्थत्वेन अन्यपरत्वेन अर्थज्ञानपर्यन्तत्वाभावावगतेः, स्वाध्यायस्यार्थपरत्वनिश्चयाभावे स्वाध्यायाध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावात् तदर्थनिश्चयहेतुरूपमीमांसाशास्त्रमनारम्भमीयमिति आपति ।

## प्राभाकरमतरहस्य प्रदर्शनम्

## अध्ययनविधेः स्वविषयाननुष्ठापकत्वकथनम्

अत्र किंचिद् विषयशुद्ध्यर्थं लेखनीं व्यापारयामः। स्वाध्यायाध्ययनविधि निर्नियोज्यत्वात् प्रयाजादिविधिवत् अप्रयोजको भवति। तथा हि - सर्वत्र विधिस्थ ममेदं कार्यमिति कार्यं यः प्रत्येति स नियोज्यो भवति। ततश्च मत्कार्यसाधनत्व मदनुष्ठेयमिदं कर्मेति कर्मणि मदर्थताज्ञानवान् अधिकारी। ततश्च कर्मनिर्वर्तकर कर्तेति तिस्रोऽवस्थाः क्रमभाविन्यो भवन्ति। तत्र यो विधिस्सनियोज्यकस्स ए तस्य कर्मण्यधिकारम् उपजनय्य तत्कर्मानुष्ठानं प्रयुङ्क्ते, यथा - 'दर्शपूर्णमासाभ्य स्वर्गकामो यजेत' इत्यत्र स्वर्गकामनियोज्यको दर्शपूर्णमासविधिः। यत्र हि नियोज एव अश्रुतः, स त्वप्रयोजकः, यथा 'समिधो यजती'त्यादिः प्रयाजादिविधिः एवमध्ययन विधिरपि निर्नियोज्यस्सन् स्वविषयाननुष्ठापको भवति।

अत्रेदमवधेयम् - यजेत, जुहुयात् द्द्यात् इत्यादिषु लिङादिभिः प्रतीयमान कार्यं स्वरूपेण ज्ञातुमशक्यमिति धात्वर्थावच्छिन्नमेव तत् लिङा बोध्यते यथा यागकार्यं, होमकार्यं, दानकार्यमिति। तथा च कार्यप्रतीतिकाले योऽवच्छेदको धात्वर्थः स एव विषयः। स एव तत्कार्यनिर्वृत्तिकाले करणं भवतीति प्राभाकर-समयः। (प्राभाकरमतप्रक्रिया।)

न च [23]'अमावास्यायामपराह्णे पिण्डपितृज्ञेन चरन्ति' इत्यत्र निर्नियोज्यत्वेऽपि स्वर्गकामः नियोज्यत्वेन यथा कल्पितः, तथा स्वाध्यायाध्ययनविधावपि नियोज्यपदाश्रवणेऽपि नियोज्यकल्पनं स्वीकृत्य तस्यैव स्वविषयप्रयोजकत्वं स्यादिति वाच्यम्, विधि र्हि स्वप्रतीतये स्वसिद्धये च यथा नियमेन विषयं करणं वा साक्षात् अपेक्षते न तथा नियोज्यम्। निर्णियोज्यानामपि विधेस्सत्वात् यथा प्रयाजादिविधिः। अपि तु स्वस्य प्रवर्तकत्वसिद्ध्यर्थं स्वविषयानुष्ठानाय तत्कर्त्रधिकारिपरम्परया नियोज्यमपेक्षते। अत्र तु अध्ययननियोगानुष्ठानस्य अध्यापनविधिनैव सिद्धत्वात् न नियोज्यापेक्षा युक्ता, प्रयाजादि विधिवत्। प्रयाजादिनियोगा हि दर्शपूर्णमासनियोगानुष्ठापितस्वविषया इति न नियोज्यापेक्षिण।



## अध्यापनविधेरध्ययनप्रयोजकत्वोपपादनम्

अध्ययनं ह्यध्यापनविधिप्रयुक्तमिति प्रागवोचाम। तदित्थं निर्णेतव्यं भवति-

[24]"**उपमीय तु यश्शिष्यं वेदमध्यापयेद् द्विजः ।**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥**"

स्मृतिबलात् उपनीयाध्यापनादाचार्यकत्वं सिद्ध्यति। तच्च अध्यापनमध्ययनं विना दुर्घटमिति अध्ययनमाक्षिपति अध्यापनविधिरिति अध्ययनं प्रति साक्षात्प्रयोजकत्वमध्यापनविधेस्सम्भवतीति प्रतीमः । अथवा अध्यापनविधेः स्वाङ्गभूतोपनयनप्रयुक्तिद्वाराप्यध्ययनप्रयोजकत्वं सुसम्पादम् । यथा - 'उपनीय तु यश्शिष्यम्' इत्यत्र उपनीय शिष्यमध्यापयेदिति वाक्यार्थः । तत्र उपनीयेति क्त्वाप्रत्ययबलात् उपनयनस्य अध्यापनसमानकर्तृकत्वं प्रतीयत इत्युपनयनम् अध्यापनाङ्गं भवति। उपनयनं चोपनेयासत्तिप्रयोजकमिति तद्द्वारेणैव तस्याङ्गत्वं भवति। उपनेयस्य आसत्तिरध्यापनोपयोगिनीति उपनेयस्य कर्मापेक्षायामुपनयनं प्रक्रम्य 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनं विधीयमानमुपनेयस्य कर्मेत्यवगम्यते। तथा चाध्ययनमध्यापनयोगीति सिद्धम् । अतः उपनयनमध्यापनाङ्गमित्य-ध्यापनविधिः स्वाङ्गभूतमुपनयनं प्रयुञ्जानः स्वसिद्ध्यर्थमध्ययनमपि प्रयुङ्क्ते। एवं च वैधमेव अध्ययनं कुर्वन् माणवकोऽध्यापनस्योपकरोतीति प्रतीत्या तद्विषयमेव अध्यापनमाचार्यकसाधनमिति तद्द्वारेण सर्वस्याप्यध्ययनाङ्गस्य तदुपकारित्वात् अध्ययनार्थस्य व्रतादेस्तत एवानुष्ठानसिद्धिः । अतः आचार्यकरण नियोग सेद्धिप्रयोजनत्वादध्ययनस्य अविवक्षितस्वार्थत्वमापतति। अविवक्षितश्चार्थो न नेर्णेतव्यः, अनपेक्षितत्वात् । अकर्तव्ये च निर्णये तत्फलकं मीमांसाशास्त्रं ारम्भणीयमिति पर्यवस्यति।

एतावता अध्ययनस्य अध्यापनानङ्गत्वं स्वीकृत्य शालिकनाथाभिप्रेतं र्वपक्षवर्णनमस्माभिरकारि।

## विवरणमतेन अध्ययनस्य अध्यापनाङ्गत्वनिरूपणम्

अत्र विवरणकारस्त्वाह - अध्ययनमध्यापनस्य अङ्गमेव भवति। तथा हि - ोद्देशप्रवृत्तकृतिसाध्यत्वमेव अङ्गत्वं भवति । तादृश (स्वोद्देशप्रवृत्त)

कृतिसाध्यत्वमेव अध्यापनस्य अध्ययन प्रयोक्तृत्वम् । कृतिसाध्यत्वेन कृत्युपकारकत्वमेव तदङ्गत्वमित्यङ्गत्वेन, प्रयोजनान्तरमध्ययनस्य नास्ति, प्रयाजादिवत् । तथा चाचार्यकनिष्पत्त्यर्थत्वेन स्वाध्यायाध्ययनस्य अर्थपरत्वाभावात् अविवक्षितार्थत्वमापतितम् । तथा सति अर्थनिर्णयहेतुभूतं मीमांसाशास्त्र-मनारम्भणीयमिति विवरणाभिमतं पूर्वपक्षवर्णनम् ।

## प्राभाकरमतेन सिद्धान्तवर्णनम्

अत्राहुः अध्ययनमध्यापनविधिप्रयुक्तमित्यत्र न नो विद्वेषः । न च तथा पूर्वपक्षाविशेषः स्यादिति शङ्कचम्, आचार्यकार्थज्ञानरूपफलभेदात् पूर्वपक्षसिद्धान्तयोरपि भेदोपपत्ति । अध्ययनस्य प्रयोजनमाचार्यकमिति पूर्व पक्षः । उत्तरस्तु अर्थज्ञानमेवेति विवेकः । माणवकनिष्ठमर्थज्ञानमेव अध्ययनस्य फलत्वेन स्वीकार्यम्, अन्तरङ्गत्वात् । आचार्यकं तु बहिरङ्गमिति न तत् कल्पयितुं युक्तं फलत्वेन तत्र । यद्यपि अध्यापनविध्यधिकारस्य प्राथम्यं तथापि परप्रयुक्तचा स्वाध्यायाध्ययनसिद्धौ निराकाङ्क्षस्यापि अध्ययनविधेर्न तदर्थाध्यापन नियोगनिर्वृत्तिः प्रयोजनं भवेत् । किं तु कर्तृगामित्वात् अन्तरङ्गत्वात् अर्थज्ञानमेव प्रयोजनत्वेन स्वीक्रियते । विधेरन्तरङ्गत्वात् कर्तृगत फलपर्यवसानमेवयुक्तमाश्र-यितुम् । तदुक्तं शास्त्रमुखे प्रकरणपञ्चिकायां [25]''यत्कर्तृकं हि यत्कर्म तस्यैव तत्रैश्वर्यमिति युक्तम्, अन्तरङ्गत्वात्'' इति ।

न च प्रयोजनापेक्षमध्ययन प्राथमिकत्वेन अध्यापन विध्यवगतमाचार्यकमेव स्वीकरोति, स्वीकृते तु तस्मिन् आकाङ्क्षाविरहात् अन्तरङ्गमपि प्रयोजनं परित्यज्यत इति वाच्यम्, अध्ययनस्य प्रयोजनापेक्षायां हि प्राथमिकत्वात् आचार्यकं प्रयोजकमङ्गीक्रियेत, न त्वेतदस्ति । अनुष्ठानस्य अन्यथासिद्धेः । अनुष्ठानार्थमेव प्रयोजनापेक्षा सम्भवति । प्रथमाचार्यकम् अध्ययनविधिप्रयोजनत्वेन न हि कल्प्यते, अनाकाङ्क्षितत्वात् । यद्यकल्पिते तस्मिन् अनुष्ठानमध्ययनस्य दुस्साधं ततस्तत् कल्प्येत, न च तथा दृश्यते । अकल्पितेऽपि अध्ययनानुष्ठानस्य परप्रयुक्त्या निरूपितत्वात् । अनुष्ठिते तु तस्मिन् पश्चात् प्रयोजनापेक्षा । न चानुष्ठानस्य अन्यतः प्राप्तेरनाकाङ्क्षितत्वेन अर्थज्ञानमपि कथं प्रयोजनं स्यादिति वाच्यम्, अनुष्ठानार्थं

प्रथममनाकाङ्क्षितत्वेऽपि पश्चात् अर्थज्ञानदर्शनेन प्रयोजनापेक्षायामुत्थापितायां तस्यैव प्रयोजनता स्वीकरणीया। किं चास्माकं सर्वस्यापि स्वतन्त्रविधेरधिकारि-पुरुषपर्यवसानमभिमतम्। तथा च अध्येतृपुरुषस्य माणवकस्य प्रयोजनापेक्षायां सत्याम् अध्ययनविधिरन्तरङ्गत्वादर्थज्ञानं प्रयोजनत्वेन स्वीकरोति। तथा चाध्यापनविधिप्रयुक्त्यैव अध्ययनानुष्टानस्य सिद्धत्वात् अध्यापनविध्यधिकारस्य प्राथम्यं न दोषमावहति। तदुक्तं [26]"यत्र खलु अधिकारपर्यवसानकल्पनामन्तरेण प्रागनुष्ठानं न लभ्यते, तत्रानुष्ठानात् प्रागनवगतोऽधिकारस्तदनुप्रवेशात् साध्यः। इह तु अध्यापन विधिप्रयुक्त्यैव अधिकारपर्यवसानकल्पनामन्तरेण अनुष्ठानं लब्धमिति प्राथम्यमकिंचित्करम्" इति।

अपि चाध्ययनविधेः परप्रयुक्त्यैव अनुष्ठानसिद्धेः नियोज्यो नास्ति, अधिकारी तु विद्यते। यदर्थं हि यत्कर्म स तत्राधिकारी। तथा च [27]'अधिकारसम्भवेत्तु सा (फलकल्पना) अधिकारनिबन्धनैव' इति षष्ठाद्यबृहतीवचनानुरोधम् अन्तरङ्गं शिष्यगतमर्थज्ञानमेव प्रयोजनत्वेनैष्टव्यम्। स चायम् अधिकारोऽध्ययनात् प्रागनवगतः पश्चादवगम्यते। अङ्गाध्ययनसंस्कृतात् स्वाध्यायादर्थावगमदर्शनात्। यत एवमाह मनुः -

**[28]"श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि।**
**युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्॥"**

**"अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।**
**वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्॥"** इति,

अथ एव तादृशवचनेन निगमनिरुक्तव्याकरणादिभिरङ्गैस्सह अध्ययनं कार्यमिति प्रतीयते। साङ्गवेदाध्ययनानन्तरं विदितपदपदार्थो माणवको मन्यते, मदुपयोगिकर्मावबोधकत्वेन मदर्थमिदम् अध्ययनमिति। अयं वेदाध्ययनमीमांसा श्रवणयोर्मध्येऽधिकारः। इममेवाधिकारमालोच्य उपनयात् प्राक् आचार्याभावे पित्रादयः अर्थदानादिना अध्यापकान् आनमय्य पुत्रादीन् उपनाययन्ति। पित्राद्यभावे तु प्रबुद्धाः स्वयमेवात्मानमुपनाययन्ति। न च अध्ययनविधेरपेक्षितमध्ययनमेव न तूपनयनमिति वाच्यम्, उपनयनमन्तरेणाध्ययनासम्भवात्, अनुपनीतस्याध्ययन-

निषेधाच्च। तदुक्तं -

[29]''**नाभिव्याहारयेद् ब्रह्म स्वधा निनयमादृते।**
**स शूद्रेण समस्तावत् यावद् वेदान्न जायते।।**'' इति।

न च [30]''नियोगार्थनिर्वृत्तेः किमन्यत् प्रयोजनं सर्वविधीनामि''ति बृहतीवचनानुसारमध्ययनस्य नित्याधिकारित्वात् विधिसिद्धिरेव प्रयोजनं नार्थज्ञानादीति वाच्यम्, विधिसिद्धेः प्रयोजनत्वेऽपि अर्थज्ञानस्यापि प्रयोजनत्वस्वीकारे न कोऽपि दोषः स्यात्। न च प्रयोजनद्वयमेकत्र विरुद्धमिति शङ्कनीयम्, शब्दतः प्रतिपन्नायाः विधिसिद्धेः वस्तुस्वभावलब्धस्य च अर्थाज्ज्ञातस्य अर्थज्ञानस्य प्रयोजनत्वे विरोधाभावात्। तदन्यतरपरित्यागे च प्रमाणाभावात् उभयमपि प्रयोजनमिति कथयामः। तत्र अर्थज्ञानरूपं फलं न विचारमन्तरेण सम्पादयितुं शक्यत इत्यध्ययनविधिरेव तत्सिद्ध्यर्थं विचारम् आक्षिपति। तथा च विचारात्मकं मीमांसाशास्त्रमारम्भणीयमिति फलितम्।

अयं सिद्धान्तपक्षः अध्यापनविधिः स्मृत्यनुमित इति कृत्वा प्रदर्शितः।

## विवरणमतेन सिद्धान्तनिरूपणम्

विवरणकृतस्त्वेवमाहुः - अध्ययनविधिस्तु श्रौतः, 'तमध्यापयीत' इति प्रत्यक्षवेदवाक्यश्रवणात्। अत एव भवनाथः [31]''श्रौतो वा आचार्यकरणविधिः'' इति विवरणपक्षम् उपस्थापयति। यदि श्रौतत्वात् अध्यापनविधेस्तधिकारप्रयोजनत्वमेव स्वाध्यायाध्ययनविधेः स्यात्, तदा अध्यापनविधेरपि स्वाध्यायान्तर्गतत्वात् अविवक्षितार्थत्वं भवेदिति अध्ययनस्याध्यापनविधिप्रयुक्तत्वं दुस्सम्पादम्। 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वाध्यायशब्देन अनाद्यात्मीयवंशपरिगृहीतवेदशाखा कथ्यते। साक्षात् श्रुतिस्तु अध्यापनविधिः नूनं केषाञ्चित् शाखिनां स्वशाखान्तर्गतो भवेदिति तस्यापि अविवक्षितार्थत्वात् न प्रयोजकत्वमवकल्पत इति पश्चाद् भाव्यर्थज्ञान प्रयोजनत्वमेव अध्ययनविधेर्युक्तमिति।

ननु स्वाध्यायोऽध्येतव्य इत्यध्ययनविधितः नियोगसिद्धेरवगमात् तन्निष्पत्त्यर्थत्वेन अर्थपरत्वाभावादेव अन्यपरत्वात् अध्यापननिष्पत्तिपरत्वात् अर्थ परत्वं दुर्वचमिति चेद् - अत्र ब्रूमः -- न हि केवलमध्ययनस्य नियोगनिष्पत्तिरेव

प्रयोजनम् इतीष्यते । यदात्वर्थावबोधोऽपि प्रयोजनत्वेन स्वीक्रियते, तदा अर्थपरत्वमप्यस्तीति नाविवक्षितार्थता । कथं तर्हि एकस्मिन् वाक्ये प्रयोजनद्वयं स्वीक्रियते? ब्रूमः - तत्र शाब्दं प्रयोजनं नियोगनिष्पत्तिः, आर्थं तु अर्थावबोधनमिति न विरोधः । अर्थपरत्वे च अर्थनिर्णयार्थं मीमांसाशास्त्रारम्भः । ततोऽध्ययनस्य माणवकार्थत्वात् वेदस्य अर्थतात्पर्येऽध्ययनविधेः अर्थज्ञानपर्यन्तत्वे च तन्निर्णायकमीमांसाशास्त्रम् आरम्भणीयमिति ''अथातो धर्मजिज्ञासे''ति सूत्रयति भगवान् जैमिनिः ।

## अध्यापनविधिसिद्धिप्रकारः

इदमत्रावधेयम् । यद्यपि 'य एवं विद्वान् पौर्णमासीं यजते' इत्यत्र यच्छब्दघटितत्वेन पौर्णमासीयागादीनां यथा अविधेयत्वं समीहितं तथैव उपनीय तु यश्शिष्यमित्यत्रापि भाव्यमिति अध्यापनस्य द्रव्यार्जनपरत्वेन प्राप्तत्वान्नाध्यापनविधिसिद्धिरिति युक्तं कथयितुं, तथापि 'उपनीयाध्यापयेदि'ति मात्रमत्र विधिभागत्वेन स्वीकृतम् अन्यत्तु अनुवादरूपमिति न कश्चिद्दोषः । तदुच्यते प्राभाकरविजये[32] 'विधियोग्येन वाक्यांशेन विध्यनुमानात् । इतरस्य च विधिसिद्धानुवादात् । यच्छब्दयोगोऽनुवाद भाग एव न विधिभागे' इति । तथा च अध्यापनविधौ सिद्धौ सत्यां तस्य चाचार्यफलपर्यवसायित्वात् पूर्वोक्तरीत्या अध्ययनप्रयोजकत्वं सुसम्पादमिति ब्रूमः । एतेन -

[33]''**नाध्यापनमिदं वाक्यं विधातुं क्षमते यतः ।**
**द्रव्यार्जनार्थं प्राप्तत्वात् यच्छब्देन च सङ्गतेः ।।**''

इति न्यायरत्नमालाकृतं दूषणमपि परास्तम् ।

अपि च आचार्यलक्षणमात्रमत्र ('उपनीय तु यश्शिष्यम्' इति स्मृतौ) बोधितं नाध्यापनमपीति नाशङ्कनीयम् । अविधेयस्य लक्षणत्वकथनेन श्रुतेरुन्मत्ततापत्तेः । अत एव अध्यापनस्य आचार्यकस्य चेत्युभयस्यापि विधेयत्वस्वीकारेणापि न किंचिदनुपपन्नमिति प्राभाकरा निरूपयन्ति । पुरुषतन्त्रे वाक्ये वाक्यभेदस्य दुष्टत्वं नास्तीति प्रतीतेः । किमस्ति प्रमाणमत्रेति चेद् - ब्रूमः - चोदनालक्षणसूत्रभाष्यमेव तदिति । यथा - [34]''नन्वशक्तमिदं सूत्रमिमौ अर्थौ अभिवदितुं, चोदना लक्षणो

धर्मः नेन्द्रियादिलक्षणः, अर्थश्च धर्मो नानर्थः इति। एकं हीदं वाक्यं, तदेवं सति भिद्येत। उच्यते - यत्र वाक्यादर्थोऽवगम्यते, तत्रैवम्। तत्तु वैदिकेषु न सूत्रेषु इति।'' इति।

एतेन [35]'अतो वचो भङ्ग्या विहितानेकनियमकोपनयनयुक्ताध्यापने कृत आचार्य इत्युक्तम्' इति नयविवेककृतं वचनमपि व्याख्यातम्।

## प्रकारान्तरेण अध्यापनविधिसमर्थनम्

अथवा आचार्याय दक्षिणाप्रदानपरश्रुत्यपि अध्यापनविधिं समर्थयन्ति गुरवः। तथा हि - 'आचार्याय वरो देयः' इति दक्षिणादानश्रुति र्विद्यते। इदं च वरदानं माणवककर्तृकं तथा अध्यापनक्रिया समापनोत्तरकालीनं च भवति। अध्यापनक्रियायास्समाप्तौ सत्यां कथं दानकाले अध्यापनशब्दः प्रयुज्यते ? अतस्तत्र अलौकिकार्थत्वं दानविधेरेष्टव्यं भवति। न चाचार्यस्य लौकिकः कश्चन धर्मोऽदृश्यत इति अतीतस्यैव सम्प्रति लक्ष्यत्वेन स्वीकारो युक्त इति न युक्तमाश्रयितुम्। अतः आचार्यः न लौकिक इति सिद्धम्। तथा च दानविधेरलौकिकार्थत्वं सम्भवति। एवं च वरदानादि विधिगताचार्यपदार्थान्वाख्यानार्थं तदपेक्षित विधितात्पर्यकस्मृत्यनुमेयत्वम् आचार्य विधेस्सम्भवति। 'यूपं तक्षति' 'यूपभ्यनक्ति' इत्यादौ विहिततक्षणाभ्यञ्जनादिक्रियातिवृत्तावपि यूपस्य यथा अलौकिकार्थता स्वीकृता तथात्रापीति भाव्यम्।

## विवरणमतेन अध्यापनविधिसमर्थनम्

अत्र विवरणकृतः - आचार्यकरणविधिरयं न स्मार्तः (स्मृत्यनुमितः) अपि तु श्रौतः। तथा हि - 'उपनयीत' 'तमध्यापयीत' इति श्रुतिः। अत्र उपनयनमाचार्यकरणफलकमिति[36] 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृति विगणनव्ययेषु निय' इति आत्मनेपदविधायकसूत्रेणाप्यवगम्यते। तथा सति 'तमध्यापयीत' इति विधिस्तु उपनेयासत्तिद्वारा माणवककृतमध्ययनं प्रयुञ्जानस्सन् अध्यापनं विदधाति। 'तमिति' समानवाक्यताप्रदर्शनेन अध्यापनमात्रं न विधेयं भवति। न च एतया अन्नाद्यकामं याजयेदित्यत्र प्रयोज्यव्यापारस्यैव विधेयत्वं यथा

स्वीकृतं तद्वदत्रापि माणवकनिष्ठाध्ययनस्यैव विधेयता स्यादिति वाच्यम्, अध्यापयेदित्यत्र प्रयोगस्वारस्यादेवं वर्णितत्वात्। अध्यापयेदित्यत्र प्रकृत्यर्थः अध्ययनम्। तच्च प्रयोज्यस्य माणवकस्य व्यापारभूतं भवति। तत् अध्यापनं प्रति उपकारकं भवति। तथा च मिलिताभ्यां प्रकृति प्रत्ययाभ्यामध्यापनविधिप्रयुक्तत्वमेव अध्ययनस्य स्वीकर्तव्यमिति प्रतिपादितं भवति। अपि च अध्ययनविधौ नियोज्यपदाश्रवणात् अध्ययनं न स्वविधिप्रयुक्तमिति प्रागवोचाम। अतः एतया अन्नाद्यकामं याजयेदितिवत् अत्र स्वविधिप्रयुक्ति र्दुरुपपादा, दृष्टान्त वैषम्यादिति सिद्धम्। एतदेव मनसि निधाय सम्माननेति सूत्रं भट्टोजिदीक्षितैः [37]'उपनयन-पूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियत' इति व्याख्यातम्।

## उपनयनमध्यापनाङ्गमित्यत्र व्याकरणसम्मतिप्रदर्शनम्

एवं च 'उपनयीत' 'तमध्यापयीत' इत्यत्र आत्मनेपदश्रुत्या समानवाक्यता समर्थनाय उपनयाध्यापनयोः परस्परम् अङ्गाङ्गिभावस्सिद्ध्यति। सम्माननेति सूत्रव्याख्यानावसरे काशिकाकृतापि एतदेव मतम् [38]'आचार्यकरणमाचार्यक्रिया; माणवकमीदृशेन विधिना आत्मनस्समीपं प्रापयति यथा असौ उपनेता स्वयमाचार्यस्सम्पद्यते; माणवकमुपनयते - आत्मानम् आचार्यीकुर्वन् माणवकमात्मनस्समीपं प्रापयतीत्यर्थः'। इति ग्रन्थेन परिपोषितम्। न च 'वेदमध्यापयेद् द्विजः' इत्यत्र परस्मैपदश्रवणेन अध्यापन नाचार्यक फलकमित्यापतति, अन्यथा [39]'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनुशासनेन आत्मनेपदापत्तेरिति वाच्यम्, [40]'बुधयुधनशजनेङ् प्रुद्रुस्तुभ्योणेः' इति सूत्रेणात्र परस्मैपदविधानोपपत्तेः। क्रियाफलस्य कर्त्रभिप्रायविषयत्व एव तत्र परस्मैपदविधानात्। अत एव ण्यन्तादिङः परस्मैपदे 'अध्यापयति' इत्युदाहार्षीत् काशिकाकारः। अतस्सिद्धम् उपनयनस्याध्यापनाङ्गत्वे व्याकरणानुशासनमपि प्रमाणमिति।

## क्त्वा श्रुत्या उपनयनस्य अध्यापनाङ्गत्वसमर्थनम्

अपि च क्त्वा श्रुत्यापि उपनयनाध्यापनयोः परस्परम् अङ्गाङ्गिभावः प्रतीयते। 'उपनीयत' 'अध्यापयीत' इति हि श्रुतः। [illegible]

दृश्यते। तच्च प्रयोगैक्ये सति सम्भवति, अन्यथा नेत्यपि निष्प्रत्यूहम्। प्रयोगै
सम्यपि अङ्गाङ्गिभावे परस्परं वैपरीत्यं स्यादिति न शङ्कनीयम्। प्रथमावगत
आचार्य निष्ठत्वेन च अध्यापनं प्रधानम्। एवं शिष्यगतत्वेन अनन्तर भावित
जघन्यत्वेन चोपनयनं गुणभूतमिति सिद्धमुपनयनाध्यापनयोः परस्परमङ्गाङ्गिभ
क्त्वा श्रुत्येति। 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्रापि क्त्वाश्रुत
परस्परशेषशेषिभावकथनं श्रूयते मीमांसाग्रन्थेषु।

## तच्छब्द् श्रुत्या उपनयनस्य अध्यापनाङ्गत्वसमर्थनम्

एवं तच्छब्दश्रुत्यापि उपनयनाध्यपनयोः परस्परमङ्गाङ्गिभावः प्रतीयत
वक्तुं प्रयतामः। तथा हि - 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' 'वाजि
वाजिनम्' इत्यत्र 'सा' इति तच्छब्देन दध्यानयनसंस्कृतं पयः परामृश्यते।
दध्यानयनसंस्कृतस्य पयसस्यहोच्चारण रूपवाक्यब
वैश्वदेवयागसम्बन्धलाभात् पयस्संस्कारस्य दध्यानयनस्य वैश्वदेवयागाङ्ग
स्वीक्रियते। तद्वदेव 'उपनयीत' 'तमध्यापयीत' इति तच्छब्देन परामृष्ट
उपनीतस्य अध्यापनसम्बन्धबोधनात् उपनयनस्य अध्यापनाङ्गत्वं सुसम्पादमि
प्रतीमः।

तथा चोपनयनस्याध्यापनाङ्गत्वात् तच्चोपनेयासत्तिद्वारा सम्भवात्
चाध्ययनस्योपकारकत्वात् माणवकनिष्ठमध्ययनं अध्यापनविधि
प्रयुक्तमित्यापतितम्। एवं चाध्ययनस्य माणवकार्थत्वात् वेदस्यार्थतात्पर्येऽध्यय
विधेरर्थज्ञानपर्यन्तत्वे च तन्निर्णायकपरं मीमांसाशास्त्रम् आरम्भणीयमिति सिद्धमि
गुरुमतसार।

एतावता पूर्वमीमांसायां भाट्टमतानुसार प्राभाकरमतानुरोधं च
जिज्ञासाधिकरणरचना अस्माभि प्रादर्शि। सम्प्रति मतद्वयस्य प्रथमधिकरणरच
न समीचीनेति विशिष्टाद्वैतग्रन्थानुसार किंचिदत्र प्रस्तूयते।

## भाट्टमताभिमताया अधिकरणरचनाया दूषणम्

सम्प्रति यथाक्रमं भाट्टाभिमतामधिकरणरचनां प्रतिक्षिपामः। तेषामभिम
पूर्वोत्तरपक्षवर्णनं प्रागेवास्मभिः सविस्तरमुपापादि। तत् न सङ्गच्छते। तथा हि

पूर्वपक्ष विश्वजिन्न्यायदृष्टान्तेन अध्ययनस्य स्वर्गार्थत्वप्रतिपादनपरः । स च विचारानर्हतां भजते । कुत इति चेद् - ब्रूमः - अध्ययनं तावत् अक्षरराशिग्रहण-प्रजोजनकमित्यत्र भाट्टाभिमत पूर्वोत्तरपक्षिणोरुभयोरपि समाना प्रवृत्ति र्वर्तते । परं तु स्वाध्यायलाभात्मकं दृष्टं प्रयोजनं परित्यज्य विधेस्तत्राप्रवर्तनात् विश्वाजिन्न्यायेन स्वर्गकल्पनं पूर्वपक्षसम्मतम् । उत्तरपक्षे तु स्वाध्यायलाभे विधेस्तात्पर्यविरहेण लोकतः प्राप्तत्वात्, अर्थ ज्ञानमेव फलमिति । तथा च उभयत्राभिमतं स्वाध्यायप्राप्तिरूपं फलं परित्यज्य अदृष्टस्वर्गादिकल्पनमत्यन्तम् अनुचितम् । अपि च विश्वाजिन्न्यायो न सार्वत्रिकः । अत एव रात्रिसत्रन्यायावतारस्थले तस्य प्रवृत्ति र्न मता ।

अपि च नित्येषु कर्मसु तन्न्यायस्यावतारोऽपि न घटत इति स च न्यायो न सार्वत्रिकः । अतः प्रथमभावित्वात् स्वाध्यायलाभस्यैव अर्थात् अक्षरराशिग्रहण-मात्रस्य फलत्वेन एष्टव्यत्वात् विश्वजिन्न्यायेन स्वर्गादिकल्पनं पूर्वपक्षिणां दुंस्साधमिति प्रतीमः ।

एवमुत्तरपक्षवर्णनमपि भाट्टानां न साधु । प्रयोजनवदर्थज्ञान साधनीभूतस्वाध्यायोद्देशेन अध्ययनस्य विधानं हि तदभिमतम् । स्वाध्यायोऽध्येतव्य इत्यत्र स्वरसतः स्वाध्यायस्यैव कर्मता श्रवणात्, तव्य प्रत्ययविधानात् । न च स्वाध्यायस्य स्वयमपुरुषार्थत्वात् [41]'कर्तुरीप्सिततमं कर्मे' ति स्वयंपुरुषार्थस्यैव कर्मत्वविधानादिति वाच्यम्, अर्थज्ञानमपि स्वयमपुरुषार्थमिति समानयोगक्षेमः । न चैवं सति विनिगमनाविरहः, स्वाध्यायस्य प्राप्तेः प्रथमभावित्वात् अर्थज्ञानस्य तदनन्तरवर्तित्वात् प्रथमभाविनः स्वाध्यायलाभस्यैव समादरः फलत्वेन कल्पीनीयः । न चार्थज्ञानं क्रत्वनुष्ठानोपयोगित्वात् परम्परया स्वयं पुरुषार्थं भवतीति वाच्यम्, स्वाध्याय लाभोऽपि अर्थज्ञानद्वारा परम्परया स्वयम्पुरुषार्थं भवतीति समानमेतत् । एतदेव मनसि निधाय प्रयोजनवदर्थज्ञानसाधनीभूतस्वाध्यायमध्ययनेन भावयेदित्यर्थकं [42]'ततश्चाध्ययनेन अक्षरग्रहणद्वारा स्वाध्यायं प्राप्नुयादित्यर्थः' । इति ग्रन्थं कौस्तुभे खण्डदेवः प्रोवाच । तथा चार्थज्ञानफलकमध्ययनमिति भाट्टसिद्धान्तवर्णनं न युक्तम् । यदि अर्थज्ञानार्थमध्ययनं स्यात् तदा तच्च निर्णयरूपं विचारमन्तरेण न सम्भवतीति

तन्निर्णायकं मीमांसाशास्त्रमारम्भणीयमिति विचारोऽपि वैध इति सम्भवति। परं पूर्वोक्तरीत्या अर्थज्ञानस्य अध्ययनफलत्वस्य निरस्तत्वात् वक्ष्यमाणप्रकारेण स्वाध्यायग्रहणस्यैव तथात्वस्वीकारात् विचारो वैधो न सम्भवति। न च यदि विचार न वैधः, तर्हि अधीत्य स्नायादिति वेदाध्ययनसमनन्तरं स्नानकालबाधो न स्यात् यदि च स्नानकालाबाधः, तर्हि मीमांसा विचारावसरालाभात् मीमांसशास्त्रारम्भ एव व्यर्थतां भजेतेति वाच्यम्, अवैधत्वेऽपि विचारस्य अवसरस्तु सम्भवत्येव यथा गुरुदक्षिणार्थं द्रव्यार्जनस्य कृते विलम्बं सहत इति दोषः। अथवा स्नानकालबाधासम्भवेऽपि गृहस्थस्सन् विचारे प्रवर्तताम्। न चात्र गृहस्यस्य कुटुम्बिन बहुषु कर्मसु व्यापृततस्य अवसरो न लप्स्यत इति वाच्यम्, तथाविधस्य गुरो र्यथा श्रावयितुमवसरप्राप्ति र्दृश्यते, तद्वदेव श्रोतुः कथं न स्यादित्यलमधिकचर्चया। एतत्सर्वं मीमांसापादुकायां कवितार्किकसिंहैः -

[43]**''प्राञ्चं स्वाध्यायलाभं स्वयमिह तु फलं स्वान्यसिद्धं विहाय**
**व्यर्था कौमारिलानामनियतगतिमद्विश्वजिन्यायशङ्का।**
**चिन्तावैधत्वभङ्गे त्ववसरविहतिः स्नानशिष्टयेति मन्दं**
**स्यात् कालः श्रावयित्राद्यवसरवदिति स्थापितं पूर्वमेव॥''** इति समग्राहि।

अत्रेयमाशङ्का - अध्ययनस्य फलं तावत् अक्षरराशिग्रहणमात्रमिति हि सिद्धान्तमतम् (विशिष्टाद्वैतमतम्)। तर्हि अर्थज्ञानार्थत्वाभावे कथं वेदः आपातप्रतीतिमुत्पादयेत्? येन च तन्निर्णयार्थं विचारस्यावसरः प्राप्नुयाद्? न च शिक्षाव्याकरणाद्यङ्गाध्यनेन आपातप्रतीति सम्भव इति वाच्यम्, अङ्गाध्ययनस्यापि अक्षरराशिग्रहणमात्र फलकत्वात्। अङ्गिग्रहवत् अङ्गग्रहोऽपि निरर्थक इति 'अन्धेनैव नीयमाना यथा अन्धा.' इतिवदुपहासितं भवति। अतः आपातबुद्धिविरहे सति कथं तन्निर्णयाय विचारप्रसक्तिरिति -

अत्रैवं प्रतिविधीयते - सस्कृतभाषायां आबाल्यात् कृतभूरिपरिश्रमेषु नैतदसम्भवदुक्तिकम्। वैदिकानामार्याणां संस्कृतमेव स्वभाषेति ते सर्वे बाल्यात् प्रभृति व्यवहारार्थं संस्कृतमेव स्वीकुर्वन्ति। तथा सति साङ्गेषु वेदेषु शब्द·

आपातप्रतीतिमुत्पादयत्येव।

अत्र केचिदेवं समादधिरे - अङ्गानां हि अङ्गत्वं तु अङ्गिनामुपकार प्रयुक्तम्। अङ्गेन कश्चनोपकारः न कृतश्चेत् अङ्गिनं प्रति, तदा अङ्गस्य अङ्गत्वमेव दुर्घटम्। तथा च शिक्षादीनां षण्णामङ्गत्वं वेदस्य किंचिदुपकारप्रयुक्तमेवेति स्वीकुर्मः। कस्तावदत्र उपकार इति चेद् - ब्रूमः। शिक्षादीनां वेदस्य चाङ्गाङ्गिभाव. कीदृश इति -

[44]"**शिक्षां वर्णस्वरादेः सुपदविभजनं तन्निरुक्तं विचित्रां**
**छन्दोवर्गव्यवस्थां समयनियमनं साध्वनुष्ठानक्लृप्तिम्।**
**स्मृत्याद्यैर्भागयुग्मप्रथनमथ नयस्थापनं च श्रयन्ती**
**मीमांसा वेदवाक्येष्वपनयदमनी वृत्तिमर्थ्यां व्यनक्ति॥"**

इति मीमांसापादुकायां स्पष्टम्। तत्र तत्र अङ्गाध्ययने अर्थज्ञानम् अवश्यापेक्षितमिति प्रतीम.। तथा च सार्थकाङ्गाध्ययनेन वेदाध्ययने कृते सति अक्षरराशिग्रहणमात्र-मध्ययनस्य (स्वाध्यायाध्ययनस्य) फलत्वेऽपि सार्थाङ्गाध्ययनवशात् आपातप्रतीतिस्सम्भवत्येव। आपातबुद्धौ सत्यां वेदे तन्निर्णयाय मीमांसाख्यं विचारशास्त्रमारम्भणीयमिति सिद्धं नः समीहितम्। तदुक्तं श्रीमद्वेकटनाथार्यै -

[45]"**अव्युत्पन्नस्य शब्दः कथमिव जनयेत् कांचिदापातबुद्धिं**
**स्वाङ्गैश्चेत् तत्र चैवं ग्रह इह तु स किं साङ्ग इत्यल्पमेतत्।**
**साङ्गेष्वापातबोधं स हि सह जनयेत् संस्कृतप्रायदेशे**
**दृष्टश्चाङ्गोपकारस्तदनुगुणमतस्तद्ग्रहं केचिदूचुः॥"** इति।

## साङ्गाध्ययने विचारक्रमस्यानपेक्षेति वर्णनम्

एवं साङ्गाध्ययनस्य वेदाध्ययने निरूपिते सति अङ्गानामध्ययनमवश्यकर्तव्यतामेतीति लभ्यते। यदि सर्वाण्यपि अङ्गानि अध्येतव्यानि, तर्हि तेषु कस्याध्ययनं प्रथमं कार्यम्? कस्य अनन्तरभावित्वम्? इत्येवं पौर्वापर्यविचारक्रमः वर्णनीयो भवति। परं तु यत् सुलभं तत् प्रथमम, अथवा यस्य गुरुरूपं लभ्यते तत् प्रथमम् इति सौकर्यतारतम्येन विचारक्रमो योजनीय. स्वेच्छयेति आचार्याः।

[46]"तत्साम्ये त्वर्थचिन्ताक्रमनियतिगतिर्नेक्ष्यतेऽङ्गाङ्गवर्गे
दौष्कर्यं यौगपद्ये तत इह कथमारम्भ इत्यप्यचिन्त्यम्।
सौकर्ये तारतम्यात् स्वयमुपनिपतच्छ्रावकादिक्रमाद्वा
स्वेच्छावैचित्र्यतो वा क्रम इति सकलारम्भसम्पूर्तिसिद्धेः॥"

इत्यभ्यधुः।

तथा चाङ्गानां परस्परं विचारार्थं कश्चन क्रमो नापेक्षित इति सिद्ध्यति। तथा च अध्ययनस्य फलं स्वाध्यायलाभो न त्वर्थज्ञानम् इति; मीमांसा विचारस्तु रागतः प्राप्तो न तु वैध इति चास्मन्मतं सूचितं भवति।

एवं भाट्टाभिमता अध्ययनविधिविचारस्य पूर्वोत्तरपक्षवर्णनप्रक्रिया सुनिपुणं दूषिता।

## प्राभाकराभिमतपूर्वोत्तरपक्ष निराकरणम्

सम्प्रति प्राभाकराभिमतायाः प्रक्रियायाः दूषणं सुविशदम् उपपादयिष्यते।

प्राभाकरा अपि भाट्टवत् स्वाध्यायस्य अर्थपरत्वाभावं पूर्वपक्षकथने वर्णयन्ति। परं तु वर्णनप्रकारस्तु भिद्यते भाट्टमतादित्यन्यदेतत्। स्वाध्यायाध्ययन विधेराचार्यकार्थत्वेन स्वाध्यायस्य अर्थपरत्वाभावेन तदर्थनिर्णायकमीमांसाशास्त्रं नारम्भणीयमिति प्राभाकराभिमतः पूर्वपक्षः। स तु न युज्यते। यद्यध्ययन-मविवक्षितार्थकं तर्हि अध्ययनार्थं को वा प्रवर्तेत ? आचार्यनिष्ठमाचार्यकरूपं फलं सम्पादयितुं किमर्थं तदन्यः माणवकः बहुपरिश्रमसाध्ये अध्ययनरूपे कर्मणि प्रयतते? अपि च उपनयनविधिः अध्ययनविधिः अध्यापनविधिरिति सर्वोऽपि विधिः स्वाध्यायान्तर्गत इति स्वाध्यायस्य अर्थपरत्वाभावे तदन्तः-पात्यध्ययनविधेराचार्यकार्थत्ववर्णनं गगनकुसुमायितम्। एवमध्ययनविधेरध्यापन-विधिप्रयुक्तत्वं स्वीकृत्य तत्र आचार्यकं फलम् आचार्यनिष्ठं बहिरङ्गं परं तु अर्थज्ञानं तु माणवकसमवेतमिति तदर्थं मीमांसाविचारः कार्य इति तदभिमतं सिद्धान्तवर्णनमपि न घटते। यद्यपि सर्वोऽपि विधिः नियोगार्थकः, तथापि अपूर्वापरपर्यायः नियोगः अध्ययनविधौ अर्थविचारमूलक इति तेषामाशयः। अर्थज्ञानस्य फलत्वनिरूपणापेक्षया प्रथमसंनिपातित्वेन अक्षरराशिग्रहणमेव

फलत्वेन ग्राह्यमिति प्राभाकराभिमतः सिद्धान्तोऽपि न युक्तः। अर्थज्ञानस्य निराकरणप्रकारः (फलत्वेन) पूर्वमस्माभिः प्रादर्शीति पुनर्नात्र प्रतिपाद्यते। अतः स्वोक्ति बाधादिदूषितत्वात् प्राभाकरमतं न समीचीनम्।

एतदेव मनसि निधाय मीमांसापादुकायां श्लोकद्वयं प्रोक्तं - यथा -

[47]**"स्वीकृत्यानर्थतां तद्विरहमपि विधेरान्यपर्येतराभ्यां**
**पक्षौ पूर्वापरौ ये परिजगृहुरिह ये स्वोक्तिबाधादयः स्युः।**
**व्युत्पत्त्यादिस्वभावात् स्वत उपजनितापातधीतः प्रवृत्तौ**
**मीमांसाक्षेपतत्स्वीकरणकथनयो र्न क्वचित् व्याहतिः स्यात्॥"**

इति

[48]**"स्वाध्यायस्यार्थवत्वात् श्रवणमभिदधेऽधीतवेदस्य भाष्ये**
**तत् खल्वापातबोधप्रजनन शकनव्यक्तिसिद्ध्यैव भाव्यम्।**
**नैरर्थक्यं तु शङ्कास्पदमिह न भवेत् सद्भिरध्यापितानां**
**नो चेत् शुश्रूषणादिप्रयतनकथनं दुस्सहं कः सहेत॥"**

इति च। एतेन [49]'स्वाध्यायस्यार्थपरत्वेन अधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत' इति श्रीभाष्यवचनमपि व्याख्यातम्।

## अध्ययनस्य अध्यापनविधिप्रयुक्तत्वासम्भवनिरूपणम्

अपि च अध्ययनं त्वध्यापनविधिप्रयुक्तमिति यदुक्तं, तत् दुर्निरूपमिति विविच्यते। तथाहि - सर्वत्र विधेरान्यपरत्वं तु दुस्साध्यम्। न च प्रयाजादिविधीनां दर्शपूर्णमासार्थत्वं सर्वत्रेष्टमिति तद्वदेवात्र अध्ययनमपि अध्यापनविधिप्रयुक्तमिति युक्तमिति वाच्यम्, वैषम्यदर्शनात्। अध्यापनक्रिया अध्ययनक्रियेति क्रियाद्वय न समानपुरुषकर्तृकम्। परं तु प्रयाजादौ न तथा भिन्न कर्तृकता दृश्यते। अपि च माणवकसमवेतमर्थज्ञानरूपं फलमपहाय अलौकिकं तद्भिन्नाचार्यसमवेतमाचार्यत्वं कथं कथं फलत्वेन कल्पयितुं शक्यते ? एतच्चासम्भवीति प्रागेवोपपादि।

## आचार्यकं नालौकिकमिति प्रतिपादनम्

किं च आचार्यकं नालौकिकम्, अपि तु द्रव्यार्जनोपायत्वेन लोकतः प्राप्तमि न तत्र विधिः प्रवर्तते।
तथा हि —

[50]"**षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।**
**याजनेऽध्यापने चैव विशुद्धाश्च प्रतिग्रहः ॥**"

इति स्मृतिवचनं द्रव्यार्जनसाधनत्वेनैव अध्यापनं बोधयति। एवम् अन्य आचार्यशब्द प्रवृत्तिनिमित्तमपि।

[51]"**स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।**
**उपनीय ददद्वेदमाचार्यस्स उदाहृतः ॥**"

इति स्मर्यते।

किं च [52]'आचार्याय प्रियं धनमाहृत्य' 'आचार्याय वरो देय' इत्यादं आचार्याय माणवककर्तृकं दानं विहितमस्ति। तथा सति अध्यापनस्य प्राभाकररीत्य आचार्यकं, दक्षिणालाभश्चेति फलद्वयलाभः। एकस्य विधे र्न फलद्वयसम्भवः. अन्यथा वाक्यभेदप्रसङ्गः। न चाचार्यकं विधिप्राप्तं, शिष्यप्रीतिप्रयुक्तं वरदानं तु न विधेयं, परं तु लौकिकमिति वैषम्यदर्शनात् न वाक्यभेद इति वाच्यम्, यदि आचार्यकं फलत्वेन क्वचित् दृष्टं स्यात् तदा भवदुक्तिस्समीचीना। न हि तथा क्वचिदपि श्रूयते। परं तु द्रव्यार्जनोपायत्वेनैवस्मृत्यादौ पठितमध्यापनमिति आचार्यकमपि लौकिकमेव। एवं सति लौकिकाचार्यकवरलाभादिफलद्वयकल्पनेन वाक्यभेददूषणं दुर्निवारम्। अन्यथा याजकत्वप्रतिगृहीतृत्वादीनामपि अलौकिकत्वापत्तिरिति भवत्कल्पनं सुतद्यं परिहासास्पदमापद्यते। अत एवोक्तं —

[53]"**शिष्यः किंचोपनीतः वरमथगुरवे किं निमित्तं प्रयच्छेत्**
**आचार्यत्वं वरश्चेत्युभयमपि फलं कल्पयन् भ्रान्तकल्पः।**
**वृत्त्यर्थाध्यापनं च स्मृतिभिरधिगतं क्वापि नाचार्यकार्यं**
**नो चेन्नानाप्रकारा विधय इह तथा तत्र तत्राविलाः स्युः ॥**"

इति।

एतेन दानविधिना आचार्यकस्य अलौकिकत्वं स्वीकृत्य अध्ययनस्य
ध्यापनविधिप्रयुक्तत्वनिरूपणं भवनाथकृतं दूषितम् । अत एव 'यूपं तक्षति,
पमभ्यनक्ति' इति दृष्टान्तेन यूपवत् आचार्यकस्य अलौकिकार्थत्व प्रसाधनमपि
स्करं भवतीति ब्रूमः । यथा यूपो न लोके प्रतीतो न तथा आचार्य इत्यवोचाम ।
दि अध्यापनादिक्रियातिवृत्तौ लक्षणा आश्रीयते तर्हि 'आचार्यमुपगम्य अधीयत'
याम्नौ का वार्ता? भाविनि लक्षणा समाश्रीयत इति चेत् भूतात् भाविनि लक्षणा-
यणं जघन्यं भवति । भाविनः प्रतिबन्धवशात् अनुत्पत्तेरपि सम्भवात् । अत
क्षणापक्षोऽपि न क्षोदक्षम इति आचार्यकस्य अलौकिकार्थत्वकल्पनं न साधु ।
ादृशमेव प्राभाकरमतगतं परस्परवैषम्यमभिलक्ष्य आचार्यः श्रीमद्वेङ्कटनाथः
ष्टमुदीरयति-

[54]"**आचार्यायेत्यधीतिं वदसि परमते निर्निमित्तां परस्तात्**
**आचार्यस्येत्यधीतिस्तव किमु सनिमित्तत्वमभ्येति पूर्वम् ।**
**भाव्येऽर्थे लक्षणां चेत् कथयसि विहतेस्सम्भवात् सा जघन्या**
**भूते तु ज्यायसीयं तदिह सनियमाध्यापने शब्द एषः ।।**"

ते ? तस्मात् सिद्धमाचार्यकं न लौकिकमिति ।

## परस्मैपदश्रवणेन आचार्यकसमर्थनासम्भवकथनम्

यत्तूक्तं 'तमध्यापयेदि'ति परस्मैपदविधानेन आचार्यनिष्ठाचार्यकपरत्व-
ययनविधेरेष्टव्यमिति, तदपेशलम् । तथावर्णनं प्रामादिकमिति मीमांसापादुकायां
ष्टमुदीरितम् । अस्यायमाशयः - णिचश्चेत्यत्र कर्तृगामित्वपक्षे
त्मनेपदविधानमनुमतम् । परं तु फलस्य अकर्तृगामित्वपक्षे परस्मैपदमेव
कमिति अनुशासनसिद्धम् । तथा च अध्यापयेदित्यत्र अध्यापनफलस्य
चार्यनिष्ठत्वेन स्वीकारात् कर्तृगामित्वविवक्षया आत्मनेपदमेव विदध्यात् । परं
परस्मैपदमेव श्रूयते । अतः परस्मैपदविधानेन कर्तृगामिफलविवक्षातः
चार्यकसिद्धिः प्रामादिकीति ब्रूमः । न च विद्यादानस्य सर्वदानात् श्रेष्ठत्वात् तज्जन्यं
फलम् अलौकिकं, तदेवाचार्यकमिति वाच्यम्, अध्यापनविधौ 'उपनीय तु
शिष्यमि'ति श्रवणेन उपनीतो ब्रह्मचारी एव सम्प्रदानी भवति । परं तु विद्यादानं
मर्वेभ्योऽपि उपसन्नेभ्यः आश्रमिभ्य विधीयत इति चत्वारोऽपि आश्रमा

अविशेषेण सम्प्रदानीभूता इति प्रत्येतव्यम्। अतस्तद्दान (विद्यादान) विधिज फलं न उपनयफलमिति स्वीकार्यम्। अतः आचार्यकं नालौकिकम्। अयम मीमासापादुका श्लोकोऽनुसन्धेयः -

[55]''यच्चात्राध्यापयेदित्यभिदधति पदे स्वेष्टसिद्ध्यानुगुण्यं
तच्चोन्नीतं प्रमादात् णिच इह न किलाकर्तृगामित्वमर्थ्यम्।
विद्यादानाददृष्टं यदपि निजगदुस्तेन नाचार्यकं स्यात्
चत्वार श्चाश्रामास्तद्विधिमनुसरतां सम्प्रदानी भवन्ति।।'' इति।

## क्त्वाश्रुतिः उपनयनस्य अध्यापनाङ्गत्वे न प्रयोजिकेति निरूपणम

किं चोपनयनमध्यापनाङ्गमुपनयनमित्यत्र क्त्वाश्रुतिः प्रमाणमिति य प्राभाकरमत, तदपेशलम्। तथा हि एतया 'अन्नाद्यकामं याजयेत्' 'निषादस्थपा याजयेत्' इत्यादौ यथा याजयेदिति णिजन्तपदं यजनमेव बोधयति यजनस्याप्राप्तार्थत्वात्, याजनं तु स्वरसतः प्राप्तत्वात् (द्रव्यार्जनोपायत्वेनेत्यर्थः) तद्वदेवात्र अध्यापयेदित्यत्र अध्ययनस्यैव अप्राप्तस्य विधेयत्वं स्वीकार्यं, न वृत्य प्राप्तस्याध्यापनस्येति पूर्वमीमांसानुसारमेव समादर्तव्यम्। अपि माणवकसंस्काररूपफलमन्तरङ्गत्वेन उपनयनं तदेव प्रयुङ्क्ते, न तु अन्यनि बहिरङ्गमाचार्यकम् अपेक्षते। 'अन्तरङ्गबहिरङ्गयो. अन्तरङ्गं बलीय' इति न्यायविद। न चाध्ययनविधौ नियोज्यपदाश्रवणात् अध्ययनमध्यापन विधिप्रयुक्तमिति वाच्यम्, 'तमध्यापयीते' ति अध्यापनविधावपि 'आचार्यककाम इति पदाश्रवणात् तद्दोषतादवस्थ्यम्। न च विनिगमकविरहाभावः, अध्ययनं अन्तरङ्गार्थज्ञानरूपफलविशिष्टं न तु बहिरङ्गभूतम् आचार्यकमिति अन्तरङ्ग बलीयस्त्वन्याय. प्रमाणमत्र। एतदेवाहुः -

[56]''निर्णीतं याजयेदित्यपि यजनविधौ तत्परं नीतिविद्भिः
तत्प्रायाध्यापनोक्तावुपनयनमपि ह्यन्तरङ्गावरुद्धम्।
तस्मादध्येतृसंस्कृत्युपनयनफलं तत्फलार्थं क्रियार्थं
नो खल्वाचार्यकाख्यं किमपि फलमिहालौकिकं शक्यशङ्कम्।।'
इति।

एतेन तच्छब्दश्रुत्या उपनयनस्य अध्यापनाङ्गत्वसमर्थनमपि परास्तम्।

## तच्छब्दश्रुतिरूपनयनस्याध्यापनाङ्गत्वे न प्रमाणमिति प्रदर्शनम्

अत्रेदं वक्तव्यम् — 'तप्ते पयसि दध्यानयति' 'सा वैश्वदेवी आमिक्षा' 'वाजिभ्यो वाजिनम्' इत्यत्र तच्छब्दश्रुत्या दध्यानयनस्य वैश्वदेवाङ्गत्वं तच्छब्देन प्रसाधितम्। तद्वदेवात्र उपनयीत, तमध्यापयेदिति तच्छब्देन उपनयनमध्यापनाङ्गं सहोच्चारणमात्रादिति न वक्तुं शक्यते। दृष्टान्तवैषम्यात्। अत्र अध्यापनक्रिया अध्ययनक्रियेति क्रियाद्वयं वर्तते, तत्र दध्यानयनक्रियायाः वैश्वदेवयागक्रियायामेव अन्वयस्वीकारात् न क्रियाभेदः। अपि च अध्यापनक्रियाया फलं यत् आचार्यकं तदाचार्यनिष्ठम्। माणवकनिष्ठं फलमन्तरङ्गमिति बहिरङ्गस्याचार्यकस्य सम्पादनाय अध्ययनमुपनयनं वा विधत्त इति तु न विचारार्हं भवतीति तच्छब्दश्रुतिरपि न उपनयनस्य अध्यापनाङ्गत्वबोधने क्षमत इति विवेकः।

## उपनयनस्य अध्यापनाङ्गत्वाभावे युक्त्यन्तरप्रसाधनम्

एवमन्तरङ्ग न्यायस्त्वन्यायेन उपनयनं नाध्यापनाङ्गम् इति प्रतिपादितम्। सम्प्रति तत्रैव युक्त्यन्तरमपि आचार्याः प्रादीदृशन्। तथा हि — उपनयनं नित्यं यथा श्रूयते 'अष्टवर्षं ब्राह्मणम् उपनयीत' इति तथैव काम्यमपि पञ्चमे ब्रह्मवर्चसकामः' इति श्रीयते। तत्र वटोः ब्रह्मवर्चस्त्वप्राप्तिरूपं फलं कामयमानः गुरु· शिष्यं पञ्चमे वयसि उपनाययतीति ब्रह्मवर्चस्त्वप्राप्तिः शिष्यस्यैव भवति, न तु आचार्यस्येति निर्विवादमेतत्। तथैव नित्यस्थलेऽपि उपनयनफलं नाचार्यगामिति अवश्यमेष्टव्यम्। तस्य तत्कर्तृगामित्वेनैव स्वरसत· प्रतीतेः। न च काम्योपनयनस्य फलं यत् ब्रह्मवर्चसादि तत् नोपनयनफलम्, अपि तु पञ्चमवयोरूप (काल) गुणफलम्, आचार्यकमैव उपनयनफलमिति वाच्यम्, आचार्यकरूपफलस्य प्रधानत्वेन कुत्राऽपि अप्रसिद्धेः। यदि प्रसिद्धं स्यात् प्रधानत्वेन आचार्यकम्, तदा तदाश्रितगुणफलत्वेन ब्रह्मवर्चसादेरन्वय. स्यात्। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र अग्निहोत्रहोमफलत्वेन स्वर्गस्य प्रसिद्धिः दृश्यते, अत एव तदाश्रितगुणफलत्वेन दध्नेन्द्रियकामस्य, जुहुयात् इत्यत्र होमाश्रितदधिफलत्वेन इन्द्रियफलं विहितम्। उपनयन विधौ तु न तथा दृश्यते। आचार्यकफलस्य न कुत्रापि प्रसिद्धत्वात्। तदाहुराचार्यवेदान्तदेशिकचरणाः —

[57]"तत्तत्कामोपनीतावुपनयनफलं कर्तृगामीत्ययुक्तं
तत्सामान्यात् तदेकाश्रयफलमिह नस्त्वष्टवर्षोपनीतौ।
सिद्धेऽन्यत्र प्रधाने गुणफलमुचितं तस्यनाद्यापि सिद्धिः
नित्यं काम्यप्रयोगे घटितमिति पृथक्कालिकत्वं तु सह्यम्॥"

इति।

अत्रेदमाकूतम् - 'पञ्चमे ब्रह्मवर्चसकाम' इति काम्यानुष्ठानेन नित्योपनयनानुष्ठानस्यापि चरितार्थ्यमभिप्रयन्ति तान्त्रिकाः। न च तथा सति स्वकालं परित्यज्य कालान्तरस्वीकारेण विध्युल्लङ्घनप्रसङ्गः स्यादिति वाच्यम्, स्वकालपरित्यागेन अन्यकालादरेणापि न कापि क्षतिः। तथा अनुष्ठानं तु सह्यमेवेति मीमांसामर्यादा।

## उपनयनस्य अध्यापनाङ्गत्वे व्याकरणासम्मतिप्रदर्शनम्

यत्तूक्तं सम्माननेति सूत्रेण आत्मनेपदविधानात् उपनयीतेत्यत्र क्रियाफलमाचार्यनिष्ठमेव न उपनेयनिष्ठमिति, तत् न विचारसहम्। सम्माननेति सूत्रं न कर्त्रभिप्रायकम्। 'स्वरितञित. कर्त्रभिप्राये क्रियाफले' इति तु कर्त्रभिप्रायविषयकम्। अतः उपनयीतेति आत्मनेपदमकर्त्रभिप्रायार्थमेव सम्माननेति सूत्रविहितमिति प्रतीमः। अतः माणवकनिष्ठाध्ययनाङ्गत्वमुपनयनस्य फलति। अत एव 'अकत्रभिप्रायार्थं पुनरारम्भ' इति शाब्दिकवचनमपि सुसङ्गतं भवति। अन्यथा 'स्वरितञितः' इत्यस्य सम्माननेत्यस्य च अविशेषप्रसङ्गः स्यात्।

इदमत्रावधेयम् - अकर्त्रभिप्रायत्वं नाम किम्? येन च उपनयनमध्यापनद्वारा आचार्यत्वसाधनं भवति इति वक्तव्यं प्राभाकरैः। न हि कर्त्रभिप्रायत्वं नाम कर्तृमात्रगामित्वम्, अकर्त्रभिप्रायत्वं नाम कर्तृतदितरोभयगामित्वमिति परिष्कृत्य उपनयनफलस्याध्ययनस्य उपनेयनिष्ठत्वात् अकर्तृगामित्वं, अध्यापनफलस्याचार्यकस्य कर्तृरूपगुरुनिष्ठत्वेन चेति अकर्त्रभिप्रायत्वसम्भवात् आत्मनेपदसार्थक्यं सम्माननेति सूत्रेण सम्भवतीति कल्पयितुं शक्यम्। एवं सति अग्नीनादधीतेत्यत्रापि आधानफलस्य कर्तरि यजमाने अकर्तरि अग्नौ चान्वयसम्भवात्, अकर्त्रभिप्रायार्थ सूत्रेणैव आत्मनेपदविधानापत्तिः। पर त्वत्र

'स्वरितञितः' इति सूत्रविहितमात्मनेपदमेव सङ्गच्छत इति शाब्दिकाः । अतः पूर्वोक्तरीत्या कर्त्रभिप्रायत्वपरिष्कारः न समीचीनः ।

न च चेतनद्वयगामित्वमकर्त्रभिप्रायत्वं, तदितरत् कर्त्रभिप्रायत्वमिति विवक्षया अग्नीनादधीतेत्यत्र फलान्वयस्य चेतनद्वयावृत्ते र्न दोष इति वाच्यम्, ऋत्विजो वृणीतेत्यत्र चेतनद्वयान्वयसम्भवात् फलस्य । नात्र अकर्त्रभिप्रायार्थसूत्रं प्रवर्तते । कर्त्रभिप्रायसूत्रेणैव (स्वरितञित इति) आत्मनेपदविधानात् ।

न चैवं क्रियासमवहितोत्तरजन्यं फलं कर्तृगामीति कर्त्रभिप्रायं तदिरत्तु अकर्त्रभिप्रायमिति विवक्षया वरणक्रियाव्यवहितोत्तरमेव फलं जायत इति तत्र स्वरितेति सूत्रेणैव आत्मनेपदविधानोपपत्तिः, उपनयीतेत्यत्र तु उपनयन समनन्तरमेव आचार्यकफलसिद्ध्या उपनयनान्तरमध्ययन (निष्पत्ति) द्वारा आचार्यक फलसिद्धिरिति अकर्त्रभिप्रायार्थं सम्माननेति सूत्रेण आत्मनेपदविधानोपपत्तिरिति वाच्यम्, 'अग्नीन् आदधीत' 'ऋत्विजो वृणीत' इत्यादौ आधानवरणादि जन्यस्याव्यवहितस्य संस्काररूपफलस्य अग्निनिष्ठत्वेन ऋत्विङ्निष्ठत्वेन च अकर्तृगामित्वात् 'स्वरितञित' इति सूत्रेण आत्मनेपदविधानानुपपत्तेः । एवं प्राभाकरसम्मतं कर्त्रभिप्रायशब्दार्थं त्रेधा परिष्कृत्य त्रिविधोऽपि पक्षो न क्षोदक्षम इति मीमांसापादुकायां स्पष्टमुदीरितम् । क्रियाफलमुद्दिष्टं सत् कर्तृगतं भवति चेत् तत् कर्त्रभिप्रायं, तत्र स्वरितसूत्रस्य प्रवृत्तिः, कर्तृभिन्नगतं तद् भवति चेत् अकर्त्रभिप्रायं, तत्र सम्माननेति सूत्रस्य प्रवृत्तिर्भवतीति तु विवेकः । अयं च निष्कर्ष. श्रीमद्वेङ्कटनाथार्यैः ।

58 "**सूत्रात् सम्माननादेरुपगत इह तङ्कर्त्रभिप्रायबाधी**
**त्रेधाऽन्योक्तां गतिं तु क्षपयति वरणाधानसाध्यावमर्शः ।**
**स्पष्टं कर्तर्यकर्तर्यपि हि फलमिदं पूर्वसूत्रप्रसूतं**
**संवेदित्रो र्द्वयो श्चाव्यवहितमपि तत् दृश्यतेऽकर्तृगामि ॥"**

इति मीमांसापादुकायां प्रादर्शि ।

एतावता महता प्रयासेन अध्यापनाङ्गत्वमुपनयनस्य न सम्भवतीत्यस्माभिः प्रदर्शितम् । एवं च सति आचार्यकसिद्ध्यर्थं स्वाध्यायाध्ययनस्य कर्तव्यतामुपपाद्य

अर्थज्ञानर्थत्वाभावादध्ययनस्येति तदर्थनिर्णायक मीमांसाशास्त्रारम्भो व्यर्थ प्राभाकर पूर्वपक्षकल्पनं न युक्तिसहमित्यवगच्छामः। एवमेव स्वाध्यायाध्यय अर्थज्ञानार्थत्वमुररीकृत्य तदर्थं मीमांसाविचारः कार्य इति यत् प्राभ सिद्धान्तवर्णनं, तदपि दूरोत्सारितमिति प्रतीम.। अपि च तन्मतरीत्या सविचा वैधत्वे वक्तव्ये सति नयविवेककृता रागतः विचारस्यावसरकल्पनमपि कृता परस्परव्याघातावहै प्राभाकरमते को वा श्रद्धां कुर्यात् ? अत एवाहुः -

[59]''**अध्येतुः स्वोपयुक्तावगतिरथ मनाक् तद्बुभुत्सुः प्रवत्स्यन्**
**संरुद्धः पूर्वयुक्त्या परत इह पुनः प्रस्थितः प्राप्स्यतीति।**
**ज्ञात्वोत्स्वप्नायिताद्वा किमपि नयविविक्त्याऽऽह तन्न व्यतिस्ते**
**रागादेव प्रवृत्तिः प्रथममिह विधिप्रेरणाकाङ्क्षिणोऽपि ।।**'' इति।

## विशिष्टाद्वैतसम्मता जिज्ञासाधिकरणरचना
## तत्र एकदेशिमतनिरूपणम्

सम्प्रति विशिष्टाद्वैताभिमतमधिकरणरचनाप्रकारं प्रस्तोष्यामः।

अत्र केचिदेवं वर्णयन्ति - 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनवि अक्षरराशिग्रहणमेवाध्ययनस्य फलत्वेन विदधाति अत अर्थज्ञानमिति संशये स अक्षरराशिग्रहणमात्रमध्ययनस्य फलमिति स्वीकुर्वन्ति सिद्धान्तिनः। तथा स अध्ययनस्य अर्थज्ञानार्थत्वविरहात् तदर्थनिर्णायकमीमांसाशास्त्रारम्भो न कार्य इ पूर्वपक्ष. प्रसरति।

तत्रैवं सिद्धान्तः प्रवर्तते - अर्थबोधकत्वं तावत् शब्दानां स्वाभाविकमिति तत्र विधिरपेक्ष्यते। ''औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इत्यत्र एतत् प्रसाधि वर्तते। अत एव [60]'सिद्धे शब्दार्थसम्बन्धे' इति वचनमपि सुसङ्गतं भवति। तथा शब्दराशिरूपस्य वेदस्यापि स्वार्थबोधकत्वं स्वाभाविकं सम्भवति। एवं सत्य यदि क्वचित् यथार्थग्रहणं न सम्भवति तत्र तर्कादिप्रमाणं सहकुरुत इति विधिस्त नोपेक्षित। अधिगतसाङ्गवेदस्य प्रयोजनवदर्थापातप्रतीतौ सिद्धायामधीतवेदः पुरु विधिनैरपेक्ष्येण स्वयमेव विचारे प्रवर्तते। तथा च मीमांसाशास्त्रारम्भस्य नैरर्थ विरहेण अवश्यकर्तव्यताऽपि प्रतीयतेति प्रतीम। एतदेवं वर्णितं मीमांसापादुकाया

[61]"अत्राहुः केचिदाद्याध्ययनविधिरसावक्षराणां गृहीत्यै
तस्मादर्थे विवक्षा न भवति न ततस्तस्य चिन्तेति पूर्वः।
पक्षोऽन्यस्तु स्वशक्त्या प्रभवति निगमः स्वार्थबोधे सतः
तेनाधीतार्थचिन्ता स्फुरितफला स्यादिति स्थापनेति॥"

इति।

## अत्रैव पक्षान्तरप्रदर्शनम्

अपरे त्वेवमाहुः — धर्ममीमांसा कार्या न वेति संशयः।

तत्र पूर्वपक्षिणामयमाशयः — भ्रमप्रमादादि पुरुष दोषासंर्वा अनादिनिधनावच्छिन्न सम्प्रदायमूलस्य वेदस्य प्रामाण्यं स्वतः प्र मीमांसासम्प्रदायः। एवं शब्दराशेर्वेदस्य अर्थबोधकताऽपि स्वाभा मतम्। एवं सत्यपि प्रयोजवदर्थापातप्रतीतौ सिद्धायाम् अधीतवेदः पुरुषः विधिनैरपेक्ष्येण विचारे प्रवर्तत इति कथनं न जाघटीति। यत. वि अवसरलाभविरहात् फलराहित्याश्च। तथा हि - 'अधीत्य स्नायात्' इति अध्ययनसमनन्तरमेव स्नानकार्यं कार्यमिति प्रतीतेः। तथा सति अध्ययनर गृहस्थाश्रमपरिग्रहे सति कथं वा मीमांसाश्रवणस्यावसरः लभेत साङ्गवेदाध्ययने कृते सति अङ्गाध्ययनसामर्थ्यात् अधिगतवेदस्य अर्थ स्वरसतो जायत इति तदर्थं विचारस्यानपेक्षितत्वात् फलाभावोऽपि वा धर्मविचारः न कार्य इति पूर्वपक्षसारः।

तत्रैवं प्रतिविधानं भवति सिद्धान्तिनां यत् अवसरप्राप्तिविरहो दूषणं न अवसरस्य प्राप्तत्वात्। तथा हि - अधीत्य स्नायादिति अध्ययनसमनन्त विहितेऽपि गुरुदक्षिणार्थमर्थार्जनार्थं यथा अवकाशः लभ्यते, न तत्र स्ना प्रतिबन्धको भवति तथैव यावज्जीवानुष्ठेयसर्वाश्रमधर्मानुष्ठानसि ज्ञानार्जनस्याप्यवकाशो लभ्यतामिति न कापि क्षतिः। साङ्गाध आपातप्रतीतिरेव जायते, न तु संशय विपर्ययादिरहिता निर्णयात्मिकेति, निर्ण ज्ञानं तु विचारापेक्षमिति तदर्थ धमविचार· कार्य इति वि फलाभावप्रयुक्तदूषणमपि दूरोत्सारितम्। मीमांसापादुका कृता पक्षोऽयं

[62]“अन्येऽनाघ्रातदोषान्मिषति निगमतः शक्यहेतौ पुमर्थे
मानत्वे निर्विशङ्केऽप्यवसरफलयो र्हानितो नार्थचिन्ता।
इत्युद्यत्पूर्वपक्ष प्रशमनमनसा सूत्रमाद्यं प्रणीतं
कल्प्या तत्कालसिद्धिः फलमिह विशय भ्रान्त्यबोधव्युदासः ।।”

इति प्रास्तावि।

## कल्पेऽस्मिन् सूत्रस्वारस्यप्रदर्शनम्

अत एव ‘अथातो धर्मजिज्ञासे’त्यत्र अथातशशब्दयोरपि सार्थक्यं सम्भवति। तथा हि - अथ शब्दस्य आनन्तर्यम् अर्थ । वेदाध्ययनानन्तरमिति यावत्। वेदाध्ययनानन्तरं विचारस्यैव अवसरलाभो न स्नानस्येति प्रतीम· । तथा च अवसरप्राप्तिं विचारस्य सौत्राथशब्दः स्वरसत. प्रत्याययति। एवं फलाभावमपि निवारयति सूत्रघटितम् अतः पदम्। तथा हि - अतश्शब्दो हेतुपर· । वेदाध्ययनस्य जिज्ञासाहेतुत्वं बोधयति अतश्शब्द. । वेदाध्ययनग्रहणमात्रं न जिज्ञासां प्रति कारणं भवतीति वेदाध्ययनजन्य ज्ञानमेव हेतुरिति वक्तव्यम्। तच्च ज्ञानं न निर्णयरूपम्। तथा सति विचारस्यैवासम्भवात् आपातप्रतीतिरूपमिति स्वीकार्यम्। तथा च आपातप्रतीतिरूपं यद् ज्ञानं तदेव जिज्ञासां प्रति हेतुरिति विचारसाध्यो निर्णयः फलमिति अतश्शब्देनावगम्यते। तथा च सूत्रघटिताथातश्शब्दस्वारस्येनापि पूर्वोक्तरीत्या पूर्वपक्षसिद्धान्तादिकल्पनं समीचीनं भवतीति तत्पक्षं समर्थयति आचार्यः -

[63]“ आनन्तर्योक्तिरत्र ह्युचितमवसरं शक्तितो वक्तुमीष्टे
धर्मप्राथम्यसिद्ध्यै त्वथपदमिति योजनाभेदतस्तत्।
हेतूक्तिर्निर्णिनीषावधिरिह गमयेन्निर्णयाप्तेः फलत्वं
तस्मात् तत्क्षेपणीयस्त्वयमुचिततया दर्शितः पूर्वपक्षः ।।”

इति।

अत्रेदमाकूतम् - पूर्वपक्षिणा विचारस्यावसरालाभः प्रकारान्तरेणापि प्रस्तोतुं शक्येत - यथा - अध्ययनात् पूर्वं विचारो न भवितुमर्हति, विना कुड्यं चित्रनिर्माणस्यासम्भवात्। एवं स्वाध्यायाध्ययन समकालमेव विचारो भवत्विति

पक्षोऽपि न क्षोदक्षमः, आमूलाग्रमाम्नायमनधीतस्य पुरुषस्य पश्चादपि स त्पत्तेः। तथा सति सम्पूर्णाध्ययनसमनन्तरं विचारो भवत्विति मा शङ्कीः अ स्नायादिति अध्ययनानन्तरं स्नानस्य कृते विलम्बस्य असहमानत्वात्। ए पूर्वपक्षः प्रत्यवतिष्ठते, तत्रेदमेव समाधानं भवति यत् यथा अध्ययनसम स्नानविधौ सत्यपि गुरुदक्षिणार्थमर्थार्जनस्यावकाशं न प्रतिरुन्धते स्नानवि तथैव विचारस्यावसरमपि स्नानविधिः न प्रतिबध्नाति। अपि च कृतेऽ परिगृहीतेऽपि च गृहस्थाश्रमे विचारस्य करणे न कोऽपि दोषः। नानावर्णाश्रमधर्मानुष्ठान सम्भवेन गृहस्थाश्रमे विचारस्यावसरो न लभ्ये वाच्यम्, श्रावयितु र्गुरो र्गृहस्थस्य यथा अवकाशलाभः, तथैव श्रो गृहस्थस्यावसरप्राप्तिः भवत्येवेति अवसरालाभमादृत्य पूर्वपक्ष प्रस्तावो न सा मन्तव्यम्। तदाहुः

[64]"**वेदाधीते र्न पूर्वं न च सह घटते वेदवेद्यार्थचिन्ता**
**पश्चात्तु स्नानपूर्वैरवसरहरणं तत् कथं सेति चेन्न।**
**स्नानादेः प्राग्विचारस्तदनुगुणधनाद्यार्जनन्यायतः स्यात्**
**ऊर्ध्वं च श्रावयित्राद्यवसरनयतोऽमुष्य लभ्योऽवकाशः॥"**

इति।

एतावता सिद्धान्तिच्छायानुसारिणां जिज्ञासाधिकरणरचना प्रतिपादि

## सिद्धान्तरीत्या अधिकरणरचनाप्रदर्शनम्

सम्प्रति सिद्धान्त्यभिमता प्रथमाधिकरणरचना प्रस्तूयते। स्वाध्यायोऽध्ये इत्यत्र अध्ययनस्याक्षरराशिग्रहणमात्रं फलमिति अस्मत्सिद्धान्तः। तथा f अक्षरराशिग्रहणमात्रं स्वाध्यायाध्ययनस्य फलमिति स्वीकार्यम्। तर प्रथमभावित्वात्। अर्थज्ञानादिकं तु तदनन्तरभावित्वात् न विलम्बेन जाय फलत्वेन भवितुमर्हति। अक्षरराशिग्रहणमात्रेणैव जपादौ स्वाध्यायाध्यय उपयोगस्वीकारात्। न चाक्षरराशिग्रहणस्य स्वयमपुरुषार्थत्वात् तस्य फलत्वक न साध्विति वाच्यम्, अर्थ ज्ञानस्यापि स्वयमपुरुषार्थत्वात्। न चार्थज्ञा स्वयमपुरुषार्थत्वेऽपि क्रत्वनुष्ठानं प्रति तस्य उपयोगित्वेन स्वर्गादिसिद्ध्यै परम्प

तस्य प्रयोजनत्वं सुसम्पादमिति वाच्यम्, अक्षरराशिग्रहणमात्रस्यापि फ
प्रयोजनवत्वं परम्परया पूर्वोक्तरीत्या कथनेन न कापिक्षतिः। अपि च अलौ
जपादौ लौकिके अध्यापनस्वरूपधारणादौ चाक्षरग्रहणस्योपयोगसम्भवा
अध्ययनस्य नैरर्थक्यशङ्का। तथा च स्वाध्यायाध्ययनस्य अक्षरराशिग्रहण
फलमिति प्रतिपद्यामहे।

पूर्वपक्षः — एवमक्षरराशिग्रहणमात्रार्थत्वे अध्ययनस्य अर्थज्ञानाथ
विरहेण तदर्थनिर्णायक मीमांसाशास्त्रारम्भो न कार्य इति सिद्ध्यति।
स्वाध्यायाध्ययनविधिरक्षरग्रहणपर्यन्तो न भवति, परं तु अर्थज्ञान पर्यन्तः स
तदा तद्वैशद्याय स्यादेव मीमांसापेक्षा। न चैतत् समस्ति, अध्यय
अक्षरराशिग्रहणमात्रार्थत्वात्।

अपि च स्वाध्यायविधौ मीमांसापदस्पर्श एव नास्ति, येन च मीमां
अपि वैधत्वमाकलयेत्। 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इति उप
विधाय उपनीतं माणवकमध्यापयितुं

**''श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि।**
**युक्तः छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्॥''**

**''अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।**
**वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्॥''**

इति स्मृत्यनुसारं वेदतदङ्गानि प्राप्तानि सन्ति। न तत्र मीमांसाशब्दः श्रूयते। त
श्रुतौ स्मृतौ वा मीमांसास्पर्शस्यैवाभावात् मीमांसाश्रवणं न कार्यमिति फल
अतस्सिद्धं मीमांसाश्रवणं न वैधमिति। न चैवं सति रागादेव तद् भवत्विति वाच
रागस्य प्रतिघातत्वात्। अध्ययनसमनन्तरं स्नानविध्यनुसारं गृहस्थ
परिगृहीतस्सन् अधीतवेदः स्ववर्णाश्रमानुगुणविहितनित्यादिक्रमानुष्ठाने निरत
सत्यपि अवसरालाभेन विचारे न प्रवर्तते।

अपि च अधीतसाङ्गवेदस्यैव मीमांसाश्रवणेऽधिकृ तत
स्वाध्यायाध्ययनात् पूर्वं विचारावसरालाभात्, मीमांसाश्रव
अध्ययनपूर्वभावित्वं वक्तुं न शक्यते। न च सहैव न वा पश्चात् विचारो भवति

वाच्यम्, उभयोरपि दत्तोत्तरत्वात्। न हि अधीत्य स्नायादित्यत्र [65]'समानकर्तृकय
पूर्वकाले' इति अनुशासनेन अध्ययनस्य स्नान निरूपितपूर्वकालीनतामात्रं विधि
न तु तदव्यहितपूर्वतापीति वाच्यम्, स्वरसतः प्राप्तस्य नैरन्तर्यस्यापल
युक्तिविरहात्। न हि तत्र किंचित् व्यवधायकं दृश्यते। आहारविहारादि प्राणिध
व्यवधानं तु न दोषाय कल्पत इति ज्ञेयम्। तथा च साङ्गवेदाध्ययनाद
अपेक्षितज्ञानसम्भवात् मीमांसाशास्त्रम् अनारम्भणीयमिति पूर्वपक्षः प्रतिष्ठापि
भवति।

अत्रैव प्रतिविधीयते - स्वाध्यायोऽध्येतव्य इति अध्ययनविधिः अ
राशिग्रहणमात्रं विधत्ते न त्वर्थज्ञानादि। एवं सति मीमांसाश्रवणमपि
वैद्यमित्यापतति। तथापि मीमांसाशास्त्रमारम्भणीयमेव। कथमिति चेद् - ब्रूमः
साङ्गाध्ययनात् वेदस्य यथावदर्थ निश्चयः संशयविपर्ययादिरहितः न जायते
यथावस्थितार्थनिश्चयार्थं मीमांसाश्रवणं नियमेन कार्यमिति प्रतीमः। तथा स
मीमांसाशास्त्रस्यारम्भणीयतासिद्धिः।

न चैवं सति पूर्वोक्तरीत्या अवसरलाभात् मीमांसाश्रवणं नोपपद्यत इ
वाच्यम्, द्रव्यार्जनादि गुरुदक्षिणार्थं क्रियमाणं कर्म यथा अधीत्य स्नायादित्
स्नानविधिः अध्ययनसमनन्तरं सहते तथैव मीमांसाश्रवणमपि सहेतेति
काप्यनुपपत्तिः। न हि गृहस्थाश्रमपरिगृहीतस्य विहितनित्यकर्मानुष्ठानरतः
मीमांसाश्रवणेऽवसरो न लभेतेति शङ्कनीयम्। तथाभूतस्य गुरो र्य
अध्यापनार्थमवकाशलाभः तथैवास्यापीति नावसरालाभप्रयुक्तं दूषणं साधु। अ
च अपरिगृहीतदाराणां नायं प्रश्नस्समुदेतीति तेषां मीमांसाश्रवणार्थम् अवकाश
अवश्यं लभत एव।

न चैतन्मीमांसाश्रवणं वैधम्, विधिबोधकपदाश्रवणात्। अतः रागतः प्राप्तं
तदिति स्वीकार्यम्। विचारस्य रागप्राप्तत्वेऽपि तदवसरप्रतिरोधः स्नानविधिना
सम्भवतीति प्रागवादिष्म। अधीत्य स्नायादित्यत्र क्त्वा श्रुतिः न अव्यवहितत्वम
बोधिनी। तथा सति अर्थज्ञानसापेक्षितक्रतुविधीनामर्थविचार जन्य ज्ञानविरह
आनर्थक्य प्रसङ्गः स्यात्। अतस्सर्वोऽपि विधिः स्वकर्मानुष्ठानापेक्षित द्रव्यार्जन

यथा अवसरं विदधाति तथैव मीमांसाविचारस्यापि अवसरमनुमन्यत इति न क्षतिः।

अत्र सेश्वरमीमांसाकृतः - मीमांसाश्रवणं विनापि क्रत्वनुष्ठानं भवितुमर्ह यथा ब्रह्मचारिणः स्वकर्मानुष्ठानार्थं न विचारं (मीमांसाश्रवणं) कुर्व केवलापदेशमात्रेणैव ते स्वकर्म अनुतिष्ठन्ति। विचारार्थं तेषामवसरलाभा चैवं सति सर्वत्र उपदेशमात्रेणैव कर्मानुष्ठानं भवतु, न विचारापेक्षमिति वा प्रथममुपदेशमात्रेणानुष्ठानं कामं भवतु, तथापि उत्तरत्रानुष्ठाने पुरुषान्तरनैरपे सम्भावितत्वात् तदर्थं श्रवणार्थमवसरालाभात् उपदेशमात्रेण प्रथमम भवति। तेषामेव उत्तरत्र कर्मानुष्ठाने विचार उपेक्ष्यत एवेति मीमांसाश्रवणम कार्यमिति शास्त्रारम्भसमर्थनं सुशकम्। उपदेशमात्रेण यत्रानुष्ठानं प्रथमं भवति त ख्यात्यर्थं प्रवचनादिरागेण वा विचारस्यावसरः प्राप्त एव। न चोपदेशम अनुष्ठानसम्भवे शूद्रादीनामपि क्रत्वनुष्ठानेऽधिकारप्रसङ्गः स्यादिति वा उपनयनाध्ययनादौ अधीकृतस्यैव उपदेशमात्रेणानुष्ठानंसम्भवकथन नापशूद्राधिकरण विरोधः। अत एव [66]'श्रवणाध्यायनार्थप्रतिषेधात्' इति शूद्रा श्रवणाध्ययनादिकर्मप्रतिषेधकं शारीरकं सूत्रमपि साधु सङ्गच्छते। मीमांसाशास्त्रमारम्भणीयमिति सिद्धम्। अत्र

[67]"**चतुर्वर्गफलोपायविचारोऽध्ययनादनु।**
**तत एव बुभुत्सातः प्राप्तोऽवसरलाभतः॥**

**विचारात् पूर्वमेवात्र प्राप्तमध्ययनं विधोः।**
**अतोऽनधीतवेदस्य विचारः शास्त्रबाधितः॥**

**क्रमो विंशतिलक्षण्यां न वैधः किं तु लौकिकः।**
**अतो व्युत्क्रम चिन्तायामनौचित्यं प्रशिष्यते॥"**

इति सेश्वरमीमांसाकारिका अनुसन्धेयाः।

एतावता अस्मत्सिद्धान्तरीत्या जिज्ञासाधिकरणरचना प्रस्तुता। सम स्वाध्यायोऽध्येतव्य इत्यत्र प्रतीयमानं संस्कारकर्मत्वं स्वाध्यायस्य कथमुपप इति परपक्षनिरासमुखेन उपपाद्यते।

[68]''निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म - - - - - - - - - - - - - - - - -।।''

इति भर्तृहरिवचनम्। अनेन ''कर्तुरीप्सिततमं कर्मे''ति पाणिनिना प्रो क्रियाजन्यफलाश्रयत्वरूपं कर्म त्रिविधमिति प्रतीयते। एतच्चितयमा 'स्वाध्यायोऽध्येतव्य' इत्यत्र नोपपद्यते। तथा हि - अनादिसिद्धविशिष्टक्रमस स्वाध्यायस्य उत्पत्तिकथनं न विचार सहं भवति। अत एव क्षीरदध्यादिव अन्यथाभावादर्शनात् विकार्यत्वमपि स्वाध्यायस्य सम्भवति। स्वाध्यायाध्ययनस अक्षरराशिग्रहणरूप फलान्तर सम्भवात् स्वाध्याय प्राप्तिमेव फलत्वेन स्वीकृत प्राप्यकर्मत्वकथनमपि न साधु। अतः गत्यन्तराभावात् प्रतीयमानस्य (कर्मत्वेन स्वाध्यायस्य संस्कार्यत्वमेव परिशेषात् वक्तव्यं भवति। यद्यपि संस्कारकर्मरू चतुर्थं कर्म हरिणा न स्वीकृतं, तथापि तस्य प्राप्ये कर्मणि अन्तर्भावस्तस्य (हरेः अभिमतत्वादिति ब्रूमः। एवं स्वाध्याय संस्कार्यत्वात् संस्कारकर्मत्वमेव (गुणकर्मत्वम्) अध्ययनस्य उपपद्यते न तु प्रधानकर्मत्वमिति सिद्ध्यति।

एतेन स्वाध्यायसंस्कारः अध्ययनस्यैव सम्भवति न तु पुरुषस्येति इत्यपि व्याख्यातम्।

## प्रकारान्तरेण संस्कारकर्मत्वोपपादनम्

अथवा 'स्वाध्यायोऽध्येतव्य' इत्यत्र न साक्षात् स्वाध्यायस्य संस्कार्यत्वं प्रतीयते। परं तु आर्थिकमेव तत् प्रतीयते। तथा हि - स्वाध्यायाध्ययन विधौ प्रतीयमानस्तव्य प्रत्ययः प्रैषार्थे विनियुक्तः। [69]'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इति हि स्मृतिः। प्रैषस्य च प्राप्तविषयकत्व प्रवर्तनात्मकत्व समुदायरूपत्वात् विधायकवाक्यस्वरूपे ब्राह्मणे च प्राप्तविषयत्वसम्भवेन समुदायासम्भवेऽपि तदेकदेशलक्षणया प्रवर्तनामात्रमुच्यते। तथा चोक्तं

''प्रवर्तन स्मृतिः प्राप्ते प्रैष इत्यभिधीयते।
अप्राप्तप्रैषणे सर्वं विधित्वं प्रतिपद्यते।।''

इति। प्रवर्तना हि प्रवृत्त्यनुकूल व्यापाररूपा। तथा च आर्थीभावना अपि तेनैवाक्षिप्यते, प्रवृत्तिरूपत्वात्। तस्याश्च भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन

प्रयोजनवदक्षरराशिग्रहणं (साध्यत्वेन) फलत्वेन अन्वेति । भावार्थाधिकरणन्यायेन अध्ययनस्य करणत्वेन साधनाकाङ्क्षायामन स्वीकृतः । तच्च साधनत्वम् अध्ययनस्य स्वाध्याय प्राप्तिद्वारा सम्भवति । ते स्वाध्यायस्य तव्यप्रत्यय बलात् कर्मत्वं सूपपादम् । तच्च संस्काररूपा अङ्गीकार्यम् । अत एव बादर्यधिकरणवार्तिके कुमारिलभट्टेन [70]‘ सिद्धमथविबोधार्यमध्ययनं स्वाध्याय संस्कारश्चे’ति प्रावोचि । न चैवं र स्वाध्यायस्य संस्कार्यत्वात् उद्देश्यत्वमपि तस्य स्वीकारात् ‘ग्रहं सम्मार्ष्टि’ इत्य अत्रापि उद्देश्यगतैकत्वस्य अविवक्षापत्त्या [71]शाखान्तराधिकरणवार्तिको (तन्त्रवार्तिक) ‘‘शाखाध्ययन विरोधप्रसङ्ग इति वाच्यम्, एकत्वविवक्षायाम स्वाध्यायपदे स्वशब्देन आत्मीयवाचिना सपित्रादिपरम्परया प्राप्ताया एव शाखा कर्मव्युत्पत्त्या वाच्यत्वावधारणात् । अनेकशाखाध्ययने शाखान्तराधिकर विरोधप्रसङ्गः स्यात् । अत एवोक्तं भाट्टदीपिकायां खण्डदेवाचार्यै. [72]‘न सर्वशाखास्सर्वपुरुषैरध्येया , स्वाध्यायाविधौ ‘अध्वर्यु वृणीते’ वत्सवीयत्यैकत्वयो र्विवक्षितत्वेन अनेकशाखाध्ययनानुपपत्तेः’ इति अतस्सिद्धमध्ययनस्य संस्कारकर्मत्वम् ।

## प्रकारान्तरेण संस्कारकर्मत्वोपपत्तिप्रदर्शनम्

अत्रेदं वक्तव्यम् - व्रीहीन् अवहन्तीत्यत्र संस्कारकर्मत्वमेव विधे· स्वीकृ तान्त्रिकैः । अत एव अवहननं गुणकर्मैव न प्रधानकर्म । तद्वद् अध्ययनमा गुणकर्मैवेति ध्येयम् । किं नाम गुणकर्मत्वं प्रधानकर्मत्वं च ? अत्र ब्रूमः । पूर्वतन तानि द्वैधाधिकरणे गुणकर्म प्रधानकर्मणोः स्वरूपं सूत्रयामास भगवान् जैमिनि [73]‘‘तानि द्वैधं गुणप्रधानभूतानि । यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत । तस् द्रव्यप्रधानत्वात् । यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि । द्रव्यस गुणभूतत्वादि’’ति । अस्यायमर्थ. - यै. कर्मभिः द्रव्यमुत्पादयितुं संस्कर्तुं वा इष्यते तेषु कर्मसु गुणत्वमङ्गीकार्यम्, तस्य कर्मणः द्रव्य प्रधानत्वात् । द्रव्यप्रधानमित्यः द्रव्यं प्रधानमस्येति बहुव्रीहि समास । ‘यूपं तक्षति’ ‘आहवनीयमादधाति’ इत्यादै यूपाहवनीयादिद्रव्यमुत्पादयितुमिष्यते तक्षणाधानादिकर्मणा । अतस्तक्षणाधानादि

विधि. गुणकर्मविधिः । एवं 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' इत्यादौ व्रीह द्रव्यं संस्कर्तुमिष्टम् । अतस्तत्र गुणकर्मत्वम् अभिप्रेतम् । एतद्वैपरीत्यं प्रयाजा दृश्यमानत्वात् प्रयाजादिः प्रधानकर्मेति कथ्यते । तथा च व्रीहीन् अवहन्ति इ यथा गुणकर्मत्वमिष्टं तथैव अध्ययनविधावपीति भाव्यम् । यथा अवहन्ति वि व्रीहौ कश्चन संस्कारः दृष्टः संस्कारः स्वीक्रियत इति संस्कारकर्मत्वं स्वाध्याय दुरपह्नवम् । 'सक्तून् जुहोति' इत्यत्र तु सक्तूनां कुत्रापि उपयोगासम्भवात् अग सक्तुभि होमं सम्पादयेदित्यर्थवर्णनं समाश्रीयते । किं च संस्कारकर्मणा संस् द्रव्यं क्वचित् भूतोपयोगि, क्वचिश्च भाव्युपयोगि। आद्यं तु 'परिधीन् प्रहरति' इत परिधिप्रहरणं तु भूतोपयोगि भवति । द्वितीयं तु अवघातप्रोक्षणादि । अध्ययनम अक्षरग्रहणद्वारा भाव्युपयोगीत्येव भाव्यम् । एवं च अक्षरराशिग्रहणा वा रूपदृष्टफलके अध्ययने स्वाध्याय संस्कारकत्वमवश्यमश्युपगन्तव्यम् । अ विवक्षितस्य संस्कारस्य लक्षणमेवमभ्यधायि श्रीभाष्यकृता - 'संस्कारो हि न कार्यान्तरयोग्यताकरणम्' इति । तच्च स्वाध्ययेऽपि निष्प्रत्यूहमिति प्रतीमः । एत सर्वं क्रोडीकरोति मीमांसापादुकायाः श्लोकद्वयम् । यथा -

[74]"**स्वाध्यायप्राप्तये ह्यध्ययनमभिहितं पावकाधानसाम्यात्**
**व्रीह्यादिप्रोक्षणादिः स्वकृतिषु गदिता संस्कृति वादिमुख्यैः ।**
**सिद्धः संस्कार्यभावः निजनिगमगिरां भावि कार्योपयोगात्**
**दृष्टान्यार्थो विभक्ते विपरिणतिवशात् सक्तुहोमस्वगत्या ।।**" इति

[75]"**दृष्टार्था संस्क्रियेयं न भवति घटते ह्यन्यथाऽप्यत्र दृष्टं**
**नादृष्टार्थाऽपि वैध प्रकरणविरहे न ह्यसौ स्यात् तदर्था ।**
**तस्मात् स्वाध्यायसाध्याध्ययनविधिरसौ सक्तुहोमादिवत् स्यात्**
**न स्यादुक्तोरत्वात् न कथमितरथाऽऽधानमर्थ्यं न योज्यम् ।।**" इति च ।

## अध्ययनस्य अध्येतृसंस्कारकत्वकथननिरासः

प्राभाकराः पुनः 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वाध्यायस्य कर्मत्व-श्रवणेऽपि अध्येतृ संस्कारकत्वम् अध्ययनस्य स्वीकुर्वन्ति । न स्वाध्याय

संस्कारत्वमभीप्सितं तेषाम्। एतत्तु न सारभूतमिति उक्तप्राभाकरमतं न समादः णीयम् । तथा हि - संस्कारो हि नाम सत उत्कर्षाधानम्। द्रव्यनिष्ठैरेव धात्वः तत्तत्कर्मभूतेषु उत्कर्षाधानमेव उचितं भवति। दृष्ट संस्कारस्थले संस्काराश्रयत्वे क्लृप्तत्वाच्च। यदि तत्र बाधः क्वचिद् उत्पद्यते यथा सक्तून् जुहोति इत्यादौ त संस्कृतस्य सक्तुद्रव्यस्य भूतभाव्युपयोगविरहात् गत्यन्तरासम्भवा विभक्तिविपरिणामेनार्थवर्णनं क्रियते। न तथा अध्ययनविधाविति भाव्यम्। अ एवोक्तं भगवता श्रीभाष्यकारेण [76]'अध्ययनं च स्वाध्याय संस्कार' इति। तथा अध्ययनं स्वाध्यायसंस्कारकं न तु अध्येतृसंस्कारकमित्यङ्गीकार्यम् संस्कारपदाभिलप्यः उत्कर्षः अतिशयो वा भगवत्प्रीतिरूप इत्यस्मत्सिद्धान्तः एतेन [77]'संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः' इति प्रोक्षणादीनां कर्मकारव संस्कारकत्वमनङ्गीकृत्य पुरुषसंस्कारकत्वमभ्युपगच्छतः कुसुमाञ्जलिकारस्य मतमपि परास्तम्। तदाहुः -

[78]"अध्येतुस्संस्क्रियैषाऽध्ययनमिति किलस्यान्नियोगार्थतायां
तामेव प्रोक्षणादिष्वपि गतिमवदन् केचिदेतत्तु वार्तम्।
भावार्थैर्द्रव्यनिष्ठैरतिशय उचितः कर्म भूतेष्वबाधे
तस्मात् स्वाध्यायसंस्कृत्युपपदनगति र्भाष्यकारैरभाषि ।।" इति।

## संस्कारः भगवत्प्रीतिरूप इति प्रदर्शनम्

किंचास्मन्मते स्वाध्याये जनितस्संस्कारः भगवतः प्रीतिरेव। सर्वत्र जायमानस्संस्कारः अतिशयो वा भगवत्प्रीतिरेवेति नैगमिकानां पन्थाः। 'स एवैनं प्रीति· प्रीणाति तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति; भोक्ता च प्रभुरेव च इत्यादिश्रुतिस्मृतिदर्शनात्। एतेन 'भूतभाव्युपयोगि हि द्रव्यं संस्कारमर्हति' इति वचनानुसार द्रव्यस्यैव संस्कार्यत्वसमादरात् विशिष्टाद्वैतमते शब्दस्य अद्रव्यत्वात् स्वाध्यायस्य संस्कार्यत्व कथनमतिसाहसमिति,मीमांसकमतमप्यपास्तम्। अस्माकं सिद्धान्ते शब्दो न द्रव्यम् तथापि द्रव्याद्रव्यादीनां स्वरूपं (लक्षणं) मीमांसकाभिमतं नास्माभि स्वीकारात् संस्कारस्य उक्तरीत्या भगवत्प्रीतिरूपत्वेन समादरे न किंचिदपहीयते। तदुक्तं मीमांसापादुकायां -

[79]"स्वाध्यायं संस्क्रियार्हं कथमिव कथयेच्छब्दमद्रव्यमिच्छन्
द्रव्यं संस्कारमर्हेदिति हि नयविदस्तत्र तात्पर्यभेदात्।
आराध्य प्रीतिरेव ह्यतिशय उदितो नैगमैश्चोदितेषु
स्वाधीतः स्यादसौ तद्विषय इति दशा तादृशा तादृशी संस्क्रियाऽत्र॥"

इति।

स्वाधीतस्स्यादित्यस्य सत्पथसञ्चारव्याख्यानमवश्यम् अवधेयम्। अयं तद्ग्रन्थसन्दर्भः — [80]'असौ स्वाध्यायः स्वाधीतस्सन् स्वेन शास्त्रानुमततद्वेद-शाखाध्ययनार्हपुरुषेण अधीतस्सन् तद्विषयः देवताप्रीतिविषयो भवति इति तादृश प्रीतिविषयत्वरूपावस्थाश्रयत्वमेव अत्र स्वाध्याये संस्कार्यत्वम्। स्वाध्यायशब्दे स्वशब्दः अध्येतृपुरुषीयेत्यर्थकः। अत्र स्वाधीत इत्यत्र स्वशब्दः वेदाध्ययनार्हपुरुषीयेर्थक इति भेदः। स्वेनाधीतः स्वाधीत इति।' एतेन इदं प्रतीयते यत् अवस्थाश्रयत्वमेव द्रव्यलक्षणमिति अस्मदभिमतत्वात् स्वाध्यायेऽपि भगवत्प्रीतिविषयत्वरूपावस्थाश्रयत्वस्य सत्त्वात् 'भूतभाव्युपयोगेऽपि द्रव्यं संस्कारमर्हतीति वचनानुसारं संस्कार्यत्वं स्वाध्यायस्यापि सम्भवे न कापि क्षतिरिति। किं च

[81]"योऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥"

इत्यादि प्रमाण पुरस्सरं वेदाध्ययनस्य नित्यकर्तव्यताम् अवगच्छामः। न चैवं सति नित्यस्याध्ययनस्य संस्कारफलोक्तिरनुपपन्नेति वाच्यम्, अध्ययनस्य नित्यत्वेऽपि दृष्टं वा अदृष्टं वा किंचित् फलमवश्यमेष्टव्यम्। अन्यथा नैष्फल्ये न कस्यचित् प्रवृत्तिरुपपद्येत। तथा चात्रापि अदृष्टरूपा उक्तरीत्या भगवत्प्रीतिः फलत्वेन समाद्रियते। दृष्टं तु अक्षरराशिग्रहणमेवेति न किंचिदनुपपद्यतेऽत्र। अत एव [82]'अत्र तु नियमादृष्टानुविद्धम् अक्षरराशिग्रहणं फलतया स्वीकर्तव्यमि'ति मीमांसापादुकापरित्राणकृता निरदेशि। भाट्टा अपि नियमादृष्टानुविद्धम् अर्थज्ञानमेव फलत्वेन संगिरन्ते। तत्र नियमादृष्टं भगवत्प्रीतिरूपमिति अस्मदिष्टं, तदिष्टं तु अपूर्वमिति विवेकः। एतदेव मीमांसापादुकायामेव समग्राहि —

[83]"नित्यं चेन्निष्फलं स्यात् भवति तु फलवत् काम्यभावादनित्यं
मैवं त्यागेन तादृग्ग्रहणफलवतः प्रत्यवायानुशिष्टेः ।
नैष्फल्यं सर्वथा चेत् कथमिव मतिमान् तत्र बुद्ध्या प्रयस्येत्
तस्मान्नित्येऽप्यपूर्वं तदितरदपि वा स्यात् फलं तत्र तत्र ।।"

इति । एवं मीमांसापादुकायां श्रीमद्वेदान्तदेशिकैः महता प्रयासेन स्वाध्य संस्कार्यत्वमनितरसाधारणं सुनिपुणं चोपापादि ।

## विचारस्य रागप्राप्तत्वप्रस्तावः

एवं स्वाध्यायाध्ययनविधिना प्रवृत्त· स्वीयां शाखां विधिवद् अधीत्य सञ्जातायाः आपातप्रतीतेः निर्णयात्मकं ज्ञानमभीप्सन् विचारे स्वयमेव अधीत पुरुषः प्रवर्तते । अतः विचारः रागप्राप्तः, न तु वैध इति अस्मत्सिद्धान्त. । विचारस्य रागप्राप्तत्वकथनं कथं सम्भवदुक्तिकमिति पूर्वा निरूपितमार्गप्रदर्शनपुरस्सरं प्रस्तोष्यते ।

'अथातो धर्मजिज्ञासे'त्यत्र वेदाध्ययनजन्यापातप्रतीतेः निर्णीविषया स्वत जातस्य विचारौन्मुख्यस्य पूर्वपक्षयुक्त्या जातां प्रतिहतिम् (अधीत्य स्नाया स्मृतिबलेन अध्ययनसमनन्तरं समावर्तनमेव कार्यमिति) अपाकु अध्ययनसमनन्तरं तत एव हेतोर्वेदार्थविचारः कार्य इति निरूपितः । अत विचारस्य कर्तव्यत्वात् तद्रूपस्य मीमांसाशास्त्रस्यारम्भणीयत्वमपि प्रतिष्ठा भवति । न चैतद् रागप्राप्तत्वपक्षे (विचारस्य) दुस्साधम् जिज्ञासासूत्रेण विचार विधीयमानत्वात्; अत एव [84]'इष्यमाणं ज्ञानमिह विधीयत' इति भगव श्रीभाष्यकारः प्रावोचत् इति वाच्यम् । 'यजेत' 'जुहुयात्' इत्यादिषु प्रतीत यागहोमादेः लोकत अनवगम्यमानत्वात् तत्र अज्ञातज्ञापनरूपस्य विधेः स्वीक क्रियते । न च तथा अत्र युक्तम् । विचारस्य स्वरूपज्ञानं लोकत एव प्रसिद्धमि तद्विलक्षणं विधिस्वरूपमेवात्र वक्तव्यम् । तच्च प्रतिबन्धकविधूननमेव अस्यायमर्थ अध्ययनसमनन्तरं विचारस्य कर्तव्यतां स्नानविधिः प्रतिरुणद्धि तेन विचारस्य अनवसरत्वं प्राप्यते । तद् विधूननाय अथातो धर्मजिज्ञासेति स् प्रवर्तत इति नात्र अप्रवृत्तप्रवर्तनरूपो विधिः प्रवर्तते । तथा च इष्यमाणं ज्ञानमि

विधीयत इति ग्रन्थोदितं विधानं प्रतिबन्धकविधूननपरमित्येव प्रतीमः । यागहोमादेः स्वर्गसाधनतावत् विचारस्य निर्णयसाधनता श्रुतित एवावगम्य विचार प्रवृत्तिरिष्टहेतुत्वेन (निर्णय साधनत्वेन) लोकत एव ज्ञायत इति वि रागप्राप्त एवेति स्वीकुर्मः । तथा चोक्तम् —

[85]"रागप्राप्तो विचारो यदि वितथमिदं तद्विधानाय सूत्रम्
मैवं विध्यन्तरत्वात् न हि तदकरणे पापमत्र प्रकाश्यम् ।
प्राप्ता रागात् प्रवृत्तिस्त्ववसदनवती पूर्वपक्षोक्तयुक्त्या
प्रत्यापद्येत सिद्धान्त्यभिहितनयतः सेष्टहेतुः प्रसिद्धा ॥"

इति । अत्रेदमाकूतम् - यदि विचारः वैधः अप्रवृत्तप्रवर्तनविषयः, तदा विचाराक प्रत्यवायः स्यात् । अत एव नित्यो न भवति विचारः । काम्यतया विधानमप्य यागहोमवैषम्यप्रदर्शनेन असम्भवीति प्रागवादिष्मेति सर्वथा विधानं विचारस्य सम्भवतीति सिद्ध्यति ।

अथैवं मनुषे - समीचीनन्यायसाध्यं परीक्षणं तत्त्वार्थबोधं प्रति कारणमि तु लोकत एव ज्ञातम् इत्यास्तां तावत् । तथापि तत्र विधेरपेक्षा अनिवार्या । यथ 'प्राङ्मुखो भुञ्जीत' 'सुप्रक्षालितपाणिपादो भुञ्जीत' इत्यत्र भोजनस्य प्राप्तत्वेऽ विधेरपेक्षा अप्रकम्प्या दृश्यते, तद्वदत्रापीति भाव्यम् - इति - तदपेशलम् - ः भोजने प्राङ्मुखत्वं यथा सम्भवति तथा अप्राङ्मुखत्वमपि पाक्षिकं सम्भवेदि तद्व्यावृत्तये तथा नियमविधिः स्वीकृतः । एवमत्रापि विचारार्थं [86]'सि सत्सम्प्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठम्' इत्युक्तरीत्या गुरूत्तमोपसदनं, 'सद्वृत्तः साधुसेवी'ति शिष्यलक्षणं च नियमविषयत्वेन स्वीक्रियमाणे न कापि क्षति न ह्यत्र विचार. नियमविषयः । तदत्राहुः मीमांसापादुकाकृतः —

[88]"सम्यङ्न्यायैः परीष्टिः करणमवगतं लोकतस्तत्त्वबोधे
नैवास्मिन् विध्यपेक्षा न यदि कथमसौ नेष्यते भोजनादौ ।
रागप्राप्ते हि तस्मिन् नियमयतिविधिः प्राङ्मुखत्वादिमात्रं
तद्वान्मीमांसमाने स्वयमथ नियमाः केवलं सन्तु केचित् ॥"

इति ।

इदमत्रावधेयम् - भोजनादौ लोके या प्रवृत्तिः दृश्यते सा केवलरागाधीना भवति। यागहोमादौ स्वर्गादिप्राप्तये या प्रवृत्तिः दृश्यते सा तु विधिमूलेति प्रवृत्तेर्द्वैविध्यमवश्यम् अस्माभिस्समादर्तव्यम्। तत्र विधिमूलप्रवृत्तावपि रागस्योपयोगः अनिवार्यः। प्रवृत्तिसामान्यं प्रतीच्छायाः हेतुत्वात्। तर्हि विधिमूलरागप्रवृत्तौ नित्यकाम्ययोः को भेद इति चेद्-ब्रूमः। नित्यस्थले विधिमूलात् रागात् प्रवर्तमाने सति न किंचिदपि फलं लभ्यते, परं तु अप्रवर्तमाने तु विध्युल्लङ्घनादेव प्रत्यवायः स्यात्। काम्यस्थले तु विधितः प्रवर्तते चेत् स्वर्गादि फलं प्राप्नोति, न प्रवर्तते चेत् न प्रत्यवायं प्राप्नुयात्। एवं विधिमूलरागात् प्रवृत्तिस्थले भेदो वर्तते। केवलरागात्, प्रवृत्तिस्थले तु यथा - मीमांसाख्य विचारस्थले तु प्रवर्तमाने सति निर्णयाख्यं फलं प्राप्नोति, अप्रवर्तमाने तु न किंचिद् विपरीतं प्राप्नोति। न च विचारेऽप्रवर्तमाने सति 'स्थाणुरयं भारहारः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम्' इति प्रत्यवायं प्राप्नुयादिति शङ्क्यम्, सम्यङ्न्यायपरीक्षणाख्यविचाराभावे तत्त्वज्ञानाभाव एव लभ्यत इति तदर्थात्। तत्तु लोकत एवावगतमिति न च तत्र शास्त्रप्रवृत्तिः। एतदेवं प्राचीकशन् आचार्याः वेदान्तगुरवः —

**[89]''कृत्ये रागं वितन्वन् विधिरपि पुरुषं प्रेरयेत् तत्र काम्ये**
**रागाभावान्निवृत्तो न भवति फलभाक् तेन न प्रत्यवेयात्।**
**नित्ये स्यादन्यथाऽत्र त्वविधिसमुदितात् रागतः सम्प्रवृत्तौ**
**शुद्धां विन्देत बुद्धिं तदभवन इह प्रत्यवायस्त्वनुक्तः ॥''**

इति। अत्र एतत्पद्यं व्याकुर्वाणानां सत्पथसञ्चारकर्तॄणाम् अभिनवदेशिकाचार्याणामाशयोऽप्यवश्यमवधेयः - तथा चायं तद्ग्रन्थसन्दर्भः - [90]''अत्रायं विवेकः - यस्य लोके स्वत एव कार्ये इष्टसाधनत्वादि ज्ञातम्, तस्य विधिं विना रागादेव प्रवृत्तिः। यत्र तदभावः, तत्र विधिज्ञाने तत इष्टसाधनताज्ञानात् रागात् प्रवृत्तिः, यथा काम्ये। नित्यस्थले तु नेष्टसाधनत्व ज्ञानाधीनो रागः, किं तु अकरणे प्रत्यवायो भवेदिति यत् अकरणप्रसञ्जन प्रसञ्जितप्रत्यवायकत्वज्ञानं प्रत्यवायहेतु-भूताकरणप्रतियोगिभूतम् इदं कर्मेति ज्ञानम्, तदधीनो रागः। अथवा इष्टसाधनत्वमेव द्विविधम्। इष्टफलजनकत्वम्, इष्टो यः प्रत्यवायाभावः तत्परिरक्षकत्वं चेति। तत्र

द्वितीयविषयकज्ञानं नित्यस्थले। यथा राजाचार्यादिनियोगे अकरणेऽनिष्टमिति भीत्यैव प्रवृत्तिः, तद्वत्। तत्र काम्ये रागाभावे कार्यस्याकरणे फलाभावमात्रम्, न पापम्; न प्रत्यवेयात् न पापं प्राप्नुयात्'' इति। उक्तग्रन्थाशयस्त्वतिस्फुटत्वात् अस्माभिर्विस्तरभिया नात्र विव्रियते।

किं च विचारस्यावैधत्वे तस्यावश्यकर्तव्यतानियमोऽपि विहन्येतेति न हि शङ्का कार्या। आपातप्रतीतेः सार्वत्रिकत्वात् सर्वोऽपि निर्णयाय प्रवर्तेतेति विचारस्य अनियतत्वं दुर्घटम्। अपि च गृहस्थाश्रमिणः कर्मानुष्ठानार्थं विचारस्यावश्यकत्वात्। न हि सर्वस्सर्वदा परोपदेशमात्रेण स्वानुष्ठानं सम्पादयेत्। न च तथापि केचन विचारे न प्रवर्तेरन्निति अपूर्वविधिविषयत्वं स्वीक्रियतां विचारस्येति वाच्यम्, यथा ऋतावुपेयादित्यत्र ऋतुगमनस्य लोकतः प्राप्तत्वेऽपि यत्र ऋतुकालगमनं न जातं तत्र तत्परिहारार्थं नियमविधित्वं स्वीकृतं, न तु अपूर्वविधित्वम्, तद्वदत्रापि लोकत एव विचारस्य प्राप्तत्वात् नायमपूर्वविधेः विषयः। विचारस्तु न नियमस्यापि विषय इति प्रागेवास्माभिः प्रादर्शि। अतः विचारे कर्मानुष्ठानसमर्था एव अधिकारिणः भवन्ति न तु सर्वे। अयं च पन्थाः वैधत्वपक्षेऽपि समानः। अन्यथा अलसजडादीनपि विधिः प्रेरयेत्। न चैतद् दृश्यते। अतः राग प्राप्त एव विचारो न वैध इत्यवश्यमभ्युपेत्यम्। तदाहुराचार्याः —

[91]''**स्वेच्छाया हेतुतायामनियतिरिति चेत् तन्न दत्तोत्तरत्वात्**
**क्वाचित्क्या त्वप्रवृत्त्या ऋतुगमननयात् सन्ततिं सा न जह्यात्।**
**वैधत्वस्थापनेऽपि ह्यलसजड विधित्यागिनो न प्रवृत्ताः**
**तस्मादास्माक दृष्ट्या स्वयमिह यातनं तत्क्षमे स्थापनीयम्॥''**

इति।

## विचारस्य रागप्राप्तत्वपक्षः नयविवेकग्रन्थारूढ इति प्रदर्शनम्

अत्राह नयविवेककारो भवनाथः - 'स्वाध्यायोऽध्येतव्य' इति अध्ययनस्य नित्यविधिप्राप्तत्वात् कश्चन वटुः यथाविधि वेदाध्ययनं करोति। अङ्गाध्ययनमपि 'कृष्णपक्षेषु चाङ्गानि' इत्यादि स्मृतिसद्भावात् यथा सम्भवं स करोति। अङ्गाध्ययनसामर्थ्यात् संस्कृतप्रायदेशवासात् संस्कृतज्ञकुलोद्भूतत्वाच्च

अध्ययनकाल एव स्वापेक्षितं कर्मानुष्ठानार्थज्ञानं तस्य वटोः स्वतः प्राप्नोति। त अध्ययनपरिपूर्त्यनन्तरं स्वाधीतसकलवेदार्थबोधकामनया स विचारे प्रवर्तमा वर्तते। तस्मिन्नेव काले 'अधीत्य स्नायादि' ति स्मृतिग्रन्थदर्शनेन अध्ययनसमनन विना व्यवधानं समावर्तनमेवानुष्ठेयमिति स प्रत्येति। तथा सति विचारर अवसरालाभात् विचाराख्यं मीमांसाशास्त्रं नारम्भणीयमिति पूर्वः पक्षः प्रत्यवतिष्ठते ततः तत्परिहर्तुकामः सिद्धान्ती अध्ययनस्य अर्थज्ञानफलकत्वात् विचारमन्तरे अर्थज्ञानस्य दुर्लभात् विचारः करणीय एवेति स्वपक्षं स्थापयति। इति। एवं सा स्वतः अर्थज्ञानं स्वापेक्षितं स्वाध्यायाध्ययनकाल एव सम्भवतीति कथने विचारस्य रागप्राप्तत्वं भवनाथेनापि स्वीकृतमित्येव प्रतिभाति। किमेतादृशं कथ ज्ञात्वा तेन उक्तमुत अविदित्वेति तन्मन एव तत्र प्रमाणम्। अत एव एतन्म परिहसन्तः श्रीमद्वेङ्कटनाथार्याः प्राचीकशन् —

''**अध्येतुः स्वोपयुक्तावगतिरथ मनाक् तद्बुभुत्सुः प्रवत्स्यन्**
**संरुद्धः पूर्वयुक्त्या परत इह पुनः प्रस्थितः प्राप्स्यतीति।**
**ज्ञात्वोत्स्वप्नायिताद्वा किमपि नयविविक्त्या हि तन्न व्यतिस्ते**
**रागादेव प्रवृत्तिः प्रथममिह विधिप्रेरणाकाङ्क्षिणोऽपि॥''** (मी.पा 62

इति।

## धर्मशब्दार्थनिर्णयः

एतावता विचारस्य रागप्राप्तत्वं स्थापितम्। सम्प्रति विचारणीयो धर्मः किं रूप इति विचार्यते।

## सिद्धसाध्ययोर्धर्मशब्दार्थत्ववर्णनम्

धर्मशब्दार्थः सिद्धरूपः परमात्मा साध्यभूतः यागहोमादिरिति द्विविधः। सिद्धस्यापि कथं धर्मशब्दवाच्यत्वमुपपद्यत इति चेद् - ब्रूमः। अलौकिकत्वे सति श्रेयस्साधनत्वं धर्मशब्द प्रवृत्तिनिमित्तं भवति। तच्च सिद्धे साध्ये च वस्तुनि अव्याहतमिति परमात्मापि धर्मशब्दवाच्यो भवति। अत एव महाभारते

[92]''**ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः।**
**ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्॥''**

इति कृष्णस्य धर्मशब्दार्थत्वेन प्रकीर्तनं कृतम् । एवं [92]'रामो विग्रहवान् धर्मः' इत्यादिरपि द्रष्टव्यः । न च [93]'चोदना लक्षणोऽर्थो धर्म' इति सूत्र व्याकुर्वाण शबरस्वमी [94]'चोदना नाम क्रियायाः प्रवर्तकं वचनमि'ति निर्देशात् तादृश क्रिया प्रवर्तकवचनं यस्य लक्षणं प्रमाणं भवति स एव धर्मपदवाच्य इति अभिप्रैतीति साध्यधर्मस्यैव तथात्वमव्याहतं न सिद्धधर्मस्येति वाच्यम्, चोदना नाम शास्त्रम् । तच्च वेद एव, [95]'वेदात् शास्त्रं परं नास्ति', [96]'शास्त्रयोनित्वात्', [97]'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यादिप्रमाणसद्भावात् । स च वेदः सिद्धसाध्या-ऽभयार्थकवाक्यरूपः । तथा च तादृशवेदः यत्र प्रमाणं भवति स धर्म इत्येव धर्मस्य अनुगतं लक्षणं प्रतिपादितं भवति । न तु शाबराभिमतमन्यत् । अत एव कुमारिलपादैरपि सिद्धस्यापि धर्मशब्देन ग्रहणकामनया

[98]"**द्रव्याक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।**
**तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।।**"

इति प्रत्यपादि । तथा च सिद्धसाध्ययोरर्थयोरेव धर्मशब्दवाच्यत्वं ग्राह्यम् ।

अथवा यागो नाम 'देवतोद्देशेन द्रव्यत्याग' एव । तथा च देवतां विना द्रव्यत्यागस्यैवासम्भवात् देवतायास्सत्त्वमपि अवश्यमभ्युपेत्यम् । सत्यां च देवतायां किं तत्स्वरूपमिति चेदत्र ब्रह्ममीमांसैव शरणमिति आराध्यभूतस्य परमात्मनोऽपि धर्मशब्दार्थत्वेन ग्रहणं कार्यम् । तथा च सिद्धधर्मस्य साध्यधर्मस्य च अथवा आराध्यभूतस्य आराधनभूतस्य च परमात्मन. यागहोमादेश्च विचारः कृत्स्नवेदार्थ निर्णयहेतुत्वात् अवश्यं कार्य इति सिद्ध्यति । न चैवं सति केचन विना वेदाध्ययनं पूर्वमीमांसायाम् अथवा उत्तरमीमांसायां वा प्रवर्तन्ते इति एकदेशविचार एवालं किमर्थं कृत्स्नवेदार्थविचार इति वाच्यम्; स्वाध्यायोऽध्येतव्य इति वाक्ये कृत्स्नवेदार्थ विचार एव अभिप्रेतः । केचन अशक्तत्वात् बहुकालं विचारं कर्तुम् अक्षमत्वात् एकदेशविचारे प्रवर्तन्त इति न तन्न्यायेन सर्वैस्तथैवानुष्ठेयमिति वक्तव्यम् । तदुक्तमधिकरणसारावलिग्रन्थे [99]'कालक्षेपाक्षमत्वात् कतिचन गृहिणः शीघ्रमन्ते रमन्ते' इति । एतत्सर्वं मीमांसापादुकायामेवमभिहितम् —

[100]"**सिद्धं साध्यं च धर्मं प्रभवति गदितुं धर्मशब्दोऽथवाऽर्थात्**
**आराध्यादे र्विचारः स्फुरतु निगदितः कृत्स्नचिन्तोद्यमश्च ।**

**स्वाध्यायत्वाविशेषे स्थितवति निखिलेऽधीतनानांशचिन्ता**
**केषांचित्त्वेकदेशाध्ययनमगतिरतेस्ते तु नात्र प्रसक्ताः ।।''** इति ।

[101]''**धर्मस्सूत्रे द्वितीये ननु परिपठितश्चोदनालक्षणोऽर्थः**
**तेनास्मिन् सिद्धधर्मग्रहणमनुचितम्; तन्नतल्लक्षणैक्यात् ।**
**शास्त्रोक्तेष्टाभ्युपायः स इति खलु समं लक्षितौ सिद्धसाध्यौ**
**स्वीकार्यः स्वेष्टसिद्ध्यै य इह स तु भवेत् तस्य तस्मिन्नुपायः ।।''**

इति च ।

## मीमांसकोऽपि सेश्वरवादीति तदुक्त्यैव प्रकटनम्

एवं परमात्माऽपि धर्मशब्दवाच्य इति न्यरूपि । न चैतत् ईश्वरमनङ्गीकर्तॄणां मीमांसकानामिष्टमिति वाच्यम् । मीमांसकैरपि ईश्वरस्वीकारात् । न च पूर्वमीमांसायां क्वचिदपि तन्निराकरणपरं सूत्रमुपलभामहे । न हि देवताधिकरणभाष्ये शबरस्वामिना ईश्वरो निराकृत इति अनीश्वरवादी मीमांसक इति वक्तुं शक्यम् । एकेन शबरस्वामिना निराकरणात् सर्वोऽपि ईश्वरपक्षपाती मीमांसको न नास्तिकतां भजते । अत एव वार्तिककृता भट्टकुमारिलेनापि 'नमस्सोमार्धधारिण' इति विग्रवत्वमपि परमात्मन. स्वीकृतम् । अपि च ग्रहाधिकरणतन्त्रवार्तिके (जै. अ.३, पा-१, सू-१३-१५) भट्टकुमारिलपादेन

[102]'**शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।**
**तदप्यधिष्ठितंसर्वमेकेन परमात्मना ।।''**

इति वेदस्य परमात्माधिष्ठितत्व स्वीकारेण परमात्मास्तित्वं भट्टपादाभिमतमित्येव प्रतीयते । अपि च ईश्वरं निरसयितुं प्रवृत्त इव लेखिनी व्यापारयन् भवनाथः [103]'एतावता ईश्वरानुमानमेव निरस्तम्, न तु ईश्वरः' इति अन्ते निगमयति । एवं देवताधिकरण भाट्टदीपिकायां परमात्मनः विग्रहवत्वादिकं महता प्रयासेन निराकृत्य 'ममत्वेवं वदता वाणी दुष्यतीति हरिस्मरणमेव शरणमिति' इति अन्ते निगमयन् खण्डदेवः स्वस्य आस्तिकाग्रेसरं मनुते स्म ।

अत [104]''आसंसारं प्रसिद्धानुभवे भगवति भवे सन्देह एव कुत'' इति आचार्योदयनोक्त प्रकारं को वा आसंसारं प्रसिद्धमीश्वरं निराकुर्यादिति मीमांसकोऽपि

सेश्वरवादीति निश्चिनुमः। न चैवं सति देवतानिराकरणपराणां शाबरवाक्यानां का कथेति वाच्यम्, वेदविरुद्धपराणां तादृशानां वाक्यानां प्रामाण्यं न वयं स्वीकुर्मः। यथा वृक्षवृद्ध्यर्थं वृक्षस्य अङ्गे जायमानानां विपरीतप्रतीकानां निर्मूलनमवश्यापेक्षितं तथैव वेदवृक्षाभिवृद्धये तद्विपरीतानां (तत्प्रतिबन्धकानां) वाक्याना निराकरणमवश्यकर्तव्यमिति मीमांसापादुकाकृतः —

[105]"**आसंसारं प्रसिद्धे भगवति सहसा बिभ्यतोऽपह्नवोक्तेः**
**नेशानः क्षिप्यते किं त्वनुमितिरिति ये भक्तातां भावयन्ति।**
**भद्रास्ते भारतादिप्रणिहितमनसां नास्तिकत्वं कुतः स्यात्**
**नित्यं धर्मं जुहुर्ये विचिनुम इह तान् वेदवादान् कुवाचः॥"**

इति श्लोके प्रतिपादयन्ति। 'आसंसारं प्रसिद्धे भगवती'ति ग्रन्थेन वेदान्तोदयनशिष्यः ग्रन्थकर्ताऽयं पूर्वोक्तम् 'आसंसारं प्रसिद्धानुभवे भगवति भवे सन्देह एव कुत? इति' इति आचार्योदयनग्रन्थं स्मारयतीति प्रतीमः।

## सर्वकर्मसमाराध्यत्वं भगवतः श्रुतिस्मृत्यादिप्रसिद्धमिति निरूपणम्

किं च सर्वकर्मसमाराध्यो हि परमात्मा। तथैव श्रुतिस्मृत्यादि निरूपणात्। यद्येतत् मीमांसकानामनिष्टं, तर्हि तेषां नास्तिकतां को नाम अपह्नवीत? तथा चोक्तं महाभारते

[106]"**देवता तीर्थतपसां भारतात् यस्य निर्णयः।**
**न जन्यते नास्तिकता तस्य मीमांसकैरपि॥"**

इति। न चैवं सति श्रीमन्नारायणस्यैव सर्वकर्मसमाराध्यत्वे अग्नीन्द्रादिशब्दाना अग्नीन्द्रादिदेवताबोधपराणां कथं विष्णुवाचकतोपपत्तिरिति वाच्यम्, किंचिद् द्वारा प्रवृत्त्या तथात्वोपपत्तेः। तथा हि - वाचकशब्दानां बोधनव्यापारः क्वचित् साक्षात् भवति, क्वचित् किंचिद् द्वारा भवतीति विवेक। उभयथापि सर्वे शब्दाः परमात्मबोधपरा इति वेदान्तविदः। अग्रं नयतीति व्युत्पत्त्या अग्र नयनस्य व्यापारस्य परमात्मनि सत्त्वात् साक्षादेव अग्निशब्दः परमात्मानं बोधयति। अयं चार्थः [107]'साक्षादप्यविरोधं जैमिनिः' इत्यत्र वैश्वानराधिकरण ब्रह्मसूत्रे जैमिनेरपि सम्मत इति ज्ञायते। अग्निशब्द अग्निरूपां देवतां बोधयति चेत् तदा अग्निदेवताया.

अन्तर्यामी तु परमात्मेति तदन्तर्यामित्वेन रूपेण सद्वाराप्रवृत्त्या अग्निशब्दः परमात्म
बोधयितुं क्षमते। अत एव 'सर्वे वेदा यत्रैकं भवन्ति' 'सर्वे वेदा यत्पदमामनन्ति
'वेदैश्च सर्वैरहमेव वेद्यः'

[108]'**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥'**

इत्यादि श्रुतिस्मृत्यादिवचनैः परमात्मनस्सर्वकर्मसमाराध्यत्वं प्रादर्शि। तदाहुः
मीमांसापादुकाकृतः —

[109]'**स द्वाराद्वारवृत्तिद्वितय नियतया वाचकानां प्रवृत्त्या**
**सर्व श्रुत्यर्थभूतः श्रुतिभिरभिहितस्तस्य चोक्त्या तथाऽन्यैः।**
**तस्मादीशो वितन्वन् निजमहिमबलात् विश्वमेकातपत्रं**
**प्रख्यात स्सार्वभौमः पशुभिरिव न संवेद्यते मोहनिघ्नैः॥'**

इति। अतस्सिद्धं सिद्धरूपं ब्रह्मापि धर्मशब्दवाच्यमिति।

## ब्रह्मणः धर्मशब्दार्थत्वं लक्षणामुखेन प्रतिपादनम्

अथवा, ब्रह्मणः धर्मपद शक्यत्वं मास्तु; धर्मपदलक्ष्यत्वं स्वीक्रियताम्, नैतत् दुष्टम्। तथा हि — अथातो धर्मजिज्ञासेत्यत्र जिज्ञास्यमान धर्मस्वरूपप्रमाणसाधनफलभेदेन चतुर्धा भवतीति मीमांसकपरिपाटी। एवं तै आत्मादीनां सिद्धवस्तूनामपि विचारः प्रवर्तितः। तथैव अपाकरणीयतया अधर्मस्यापि निषिद्ध्यमानस्य विचारः पूर्वमीमांसायामनुमतः। एतत्सर्वं कथं धर्मशब्दार्थत्वेन युज्यते? अत्र ते प्रतिविदधति यत् आक्षेपतः धर्मशब्दः पूर्वोक्तं सर्वमप्यर्थं तात्पर्याविरोधं गृह्णातीति। आक्षेपो हि लक्षणा। तथा च यथा पूर्वमीमांसकानां लक्षणया धर्मशब्दार्थत्वं पूर्वोक्तपदार्थानामभिमतं तथैवास्माकं सिद्धधर्मस्यापि परमात्मनः धर्मशब्दार्थत्वं मतम्। न च लक्षणाश्रयणं जघन्यतामावहतीति शङ्कचम्, वेदतात्पर्याविरोधेन तदाश्रयणे न कोऽपि दोषः। अपि चात्र अजहल्लक्षणाश्रयणेन वाच्यार्थस्यापि अपरित्यागः भवति। तदिदं प्राहुः मीमांसापादुकाकृतः -

[110]"धर्मद्वारा विचार्यं निखिलमनुसृतं छत्रिनीत्याऽथवा स्यात्
तात्पर्यारो हि सर्वं प्रथयितुमजहल्लक्षणेयं समीची।
आपातस्फूर्तिसाम्यादनभिमत परीहार नित्योन्मुखानां
हेय प्रख्यापनार्थं ध्रुवमियमखिलैरत्र निर्धारणीया ॥" इति।

इदमत्रावधेयम् — अत्र भामती संवादोऽपि दृश्यते । अर्थशब्दार्थविवरणावसरे शङ्करभगवत्पादैः [111]'स्वाध्यायानन्तर्यं तु समानम्' इत्यभाषि । एतद्भाष्यं व्यावृण्वानः भामतीकारः [112]'धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद् ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादिति' प्राह। अनेन एवं प्रतीयते यत् वेदार्थत्वविषेण धर्मशब्दवाच्यं यथा कर्म भवति तथैव ब्रह्मापीति । यदि धर्मशब्दवाच्यत्वं कर्मब्रह्मणोः समानरूपेण न स्वीक्रियते, तर्हि उक्तभामतीवचनं विफलतां भजेत। स्वाध्यायाध्ययनं तु कर्मब्रह्मविचाराभ्यां पूर्वं वृत्तमिति तु समानमिति कथयितुकाम एव भामतीकारः वेदार्थत्वाविशेषेण कर्मणः ब्रह्मणश्च धर्मशब्दार्थत्वं समीहते । अत एव वेदार्थमात्रोपलक्षणं धर्मशब्द इत्यपि तैरभिहितम्। अत एव समानरूपं आनन्तर्यं तिरस्कृत्य धर्मविचारात् विलक्षणं यत् नित्यानित्य वस्तुविवेके-हामुत्रफलभोगविरागशमदमादिसाधनसम्पन्मुमुक्षुत्वादिसाधनचतुष्टयसम्पदेव पूर्ववृत्तत्वेन स्वीकृतमद्वैतवादे। अतस्सिद्धं धर्मपदं कर्मब्रह्मोभयार्थबोधकमिति।

## सूत्रे धर्मपदस्वारस्यचिन्तनम्

अथैवं मनुषे — धर्मपदं कर्मब्रह्मोभयार्थग्राहकं स्यात् नाम । तथापि धर्मार्थकाममोक्षभेदेन चतुर्विधपुरुषार्थानामपि जिज्ञास्यमानत्वे युक्ते सति कथं केवलं धर्मस्यैव विचारः प्रस्तूयत इति - अत्र ब्रूमः - धर्मार्थकाममोक्षाः पुरुषार्था भवन्ति। तत्र काममोक्षौ पुरुषार्थभूतौ, धर्मार्थौ तु तदुपायभूतौ स्तः। तथापि अजहल्लक्षणया धर्मार्थयोरपि चतुर्विधपुरुषार्थेऽन्तर्भावः स्वीकृतो न दोषम् आवहति । न च उपायान्तरस्य फलभूतस्यापि अर्थस्य विचार्यत्वेन किमर्थं ग्रहणं नेष्टमिति वाच्यम्, बहुविध दुःखोदर्कत्वादर्थस्य। तदुक्तम् —

[113]"अर्थानामार्जने दुःखमार्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखम् - - - - ॥"

इति । एवं केवलपुरुषार्थयोः कामयोक्षयो· विचार्यत्वमपि न साधु । उपायभूतस्य विचार्यत्वे हि तदनुष्ठानसम्भवः । धर्मस्तु सर्वविधपुरुषार्थमूलं भवति । धृति साधनं हि धर्मः । अत एव फलसाधनोभयमपि धर्मपदं सङ्गृह्णाति । धृति शब्देन अर्थकाममोक्षाणां संग्रहो भवति । [114]'धर्मो विश्वस्य जगतः प्रतिष्ठा, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितम् तस्माद्धर्मं परमं वदन्ति' इति तैत्तिरीयोपनिषद् । अपि च

[115]" अतस्करकरग्राह्यमराजक वशं वदम् ।
अदायादविभागार्हं धनमार्जय सुस्थिरम् ॥"

इत्यादि वचनेन स्थिरधनत्वेन प्रतीतः धर्मः । अत एव सर्वपुरुषार्थोपेतं धर्मं सूत्रकारः जिज्ञासासूत्रे उपादीयमानः स्वशास्त्रस्य विषयफलोभयनिर्देशमपि चकार । एतादृशः धर्मपदस्वारस्यनिरूपणप्रकारः न कस्मिंश्चिदपि पूर्वमीमांसाग्रन्थे विवेचितः, यस्तु श्रीमद्वेदान्तदेशिकैः मीमांसापादुकायां प्रादर्शि । अत एव सर्वतन्त्रस्वतन्त्रास्ते भवन्ति । अयं मीमांसापादुकाश्लोकः —

[116]"धर्मादेव प्रयुक्तादभिदधति सतां धर्मकामार्थमोक्षान्
नान्यार्थौ काममोक्षौ धनमबहुफलं दोषवर्गान्वितं च ।
सिद्धानेकाधिकारैर्धृतिकृदयमतस्सेव्यते सावधानैः
आदावेतं निबध्नन् विषयफलयुतं शास्त्रमाविश्चकार ॥" इति ।

## काम्यकर्मणः विचार्यत्वोपपत्तिप्रदर्शनम्

ननु चतुर्विधपुरुषार्थे मोक्षस्यैव परमत्वात् तद्विचार एव वेदे प्रवर्तनीयः । वेदस्तु क्षुद्रफलप्रदानसमर्थं कर्मापि तत्र तत्रोपदिशति । तादृश कर्मविचारोऽपि धर्मजिज्ञासारूढः प्रतिपाद्यते । कथं वात्सल्यावहं शास्त्रं (वेद.) तत्त्वोपदेशं विना तत्त्वज्ञान विघटनसमर्थं स्वर्गादिक्षुद्रफलजननसमर्थं कर्म निरूपयितुं क्षमते । अपि च [117]'यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते ।' [118]'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्मात् लोकात् पुनरेत्यस्मै लोकाय कर्मणे ।'

[119]'आब्रह्मभुवनाल्लोका. पुनरावर्तिनोऽर्जुन' [120]'स्वर्गेऽपि पातभीतस्य क्षयिष्णो र्नास्ति निर्वृतिः'

[121]"**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ।।**"

"**कामात्मानः स्वर्गपराः जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ।।**"

"**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।।**"

इत्यादि श्रुति स्मृतयः काम्यकर्माणि निन्दन्ति । अतस्तद्विचारः वेदे कथमुपयुक्ततां भजते यस्तु जिज्ञासाधिकरणेऽपि विचार्यमाणत्वेन स्वीकृत इति चेद् —

अत्रैवं समाधीयते - वेदो न देहमात्रविषयकः, अपि तु आत्मविषयकः । अत एव स न जीवनविषयकः, परं तु उज्जीवनविषयकः । अत एव सर्वात्मसाधारण्येन चतुर्विधपुरुषार्थसकलापुरुषार्थनिवृत्तितत्साधनबोधकत्वेन कदाचिदप्यनुरमात् वेदः अत्यन्तं हिततमो भवत्यस्माकम् । अनादिभूतेऽस्मिन् संसारे केचन सत्त्वप्रचुरा·, केचन रजः प्रचुरा. केचन तम· प्रचुराश्च तिष्ठन्ति । तेषां कामनानुसारं तत्तत्फलतत्साधनोपदेशेन स्वस्य वात्सल्यं प्रदर्शयति वेदः । मातापित्रादिरपि पुत्राभीप्सितं वस्तु प्रदीयमान· स्ववात्सल्यं प्रकटयति । वेदस्तु मातापितृसहस्रेभ्योऽपि वत्सलतरः । तथा सति वेद आश्रितानां स्वगुणानुगुण्येन स्वर्गादि साधनमेव हितं नावबोधयति चेत्, तदा रजस्तमः प्रचुरत्वेन सात्त्विकफलमोक्षविमुखाः स्वापेक्षितफलसाधनमजानन्तः कामप्रावण्यविवशा अनुपादेयेषु उपादेयभ्रान्त्या प्रविष्टाः प्रणष्टा भवेयुः । यथा वातपित्तकफादिदोष परीक्षणेन वैद्याः तत्तत्प्रकृत्यनुकूलान् उपादेयान् पदार्थान् उपदिशन्ति, अन्यांश्च निषेधन्ति, तद्वदेव वेदोऽपि प्रत्येतव्यम्, अत एवोक्तं भगवद्गीतायां [122]'त्रैगुण्यविषया वेदाः' इति । वेदस्य त्रैगुण्यविषयत्वं प्रतिपाद्य [123]'निस्त्रैगुण्यो भवार्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्' इति शेषभागेन निर्द्वन्द्वत्वनित्यसत्त्वस्थत्व निर्योगक्षेमात्मवत्वादि प्राप्तिरवश्यं कर्तव्येति उपदिष्टम् । अत एव मोक्ष

धर्मप्रधानमपि महाभारतं ऐहिकामुष्मिकफलादिनिर्देशमपि तत्र तत्र करोति। अने· अध्येतॄणां मन्दबुद्धीनां स्वाभीष्ट काम्यवस्तुलाभेन वेदे महाभारतादि ग्रन्थे च दृढ विश्वासो जायते।

[124]' **शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्।**
**ददादि ध्यायिनां नित्यमपवर्गप्रदो हरिः॥'**

इत्युक्तप्रकारेण सर्वफलप्रदातरि भगवति हरौ विश्वासो भवति। एतादृशविश्वासे कुण्ठिते सति स्वयं जनाः अनर्थतां सेवमानाः नास्तिकाग्रेसराः भवन्ति। अत एव सर्वफल प्रदातृत्वं भगवतः तत्र तत्र श्रुतिस्मृत्यादयः संगिरन्ते, भगवानपि गीतापुराणादिषु स्वयं एतत् निर्दिशति। तथा च धर्मविचारे काम्यस्यापि क्रियमाणे न कोऽपि दोषो जागर्ति। अय पक्ष· मीमांसापादुकायां

[125] **तत्तत्कर्मप्रवाह प्रभवरुचिभिदातारतम्यानुरोधात्**
**वेदे वात्सल्यभाजि व्यतिषजति चतुर्वर्गचर्योपदेशः।**
**उक्तं मोक्षप्रधाने त्रिकमितरदपि ह्यादितो भारतादौ**
**विस्रम्भार्थं तु मुक्तेस्तदितरकथनं कीर्तितं सात्वते॥''**

इत्यत्र प्रदर्शितः।

## नित्यस्यापि कर्मणः धर्मपदवाच्यत्वसम्भवः

न चैवं सति नित्यं कर्म न धर्मपदवाच्यं भवितुमर्हति, सुखजनकत्वेन काम्यकर्मण· धर्मत्वं, दु·खहेतुत्वेन निषिद्धकर्मणः अधर्मत्वमिति नियततया तदुभयभिन्नं नित्यकर्म न धर्मपदवाच्यमिति तद्विचारणीयं भवतीति वाच्यम्, नित्येष्वपि कर्मसु प्रत्यवायपरिहाररूपफल दर्शनात् न किंचदपहीयते। अत्यन्तनिष्फलं नित्यं कर्म भवतीति चेत् तदा न कोऽपि बुद्धिमान् तत्कर्मानुष्ठानं करोति। न चैवं सति नित्यकर्मण सफलत्वे नित्यकाम्यविवेक दुष्कर इति वाच्यम्, गोबलीवर्दन्यायवदुपपत्तेः। धृतिसाधनत्वं नित्यकाम्योभयसाधारणमेव। तथापि यत्र अवश्यकर्तव्यताप्रतीति तत् नित्यं कर्म, यथा सन्ध्योपासनादि, यत्र न तथा प्रतीतिस्तत् काम्यमिति विवेकस्सुकरः। तदाहु· —

[126]"काम्यं कर्मैव धर्मः सुखजनकतया दुःखहेतुस्त्वधर्मो
धर्मोऽधर्मश्च न स्यादनुभयजनकं नित्यमित्याहुरेके।
मन्दं तन्नित्यवर्गेऽप्यनभिमतनिवृत्त्याद्यभीष्टार्थवत्त्वात्
धर्मत्वे दुर्निवारे पृथगभिलपनं गोबलीवर्दवत् स्यात्॥"

इति। तथा च नित्यमपि कर्म धर्मपदवाच्यं भवतीति प्रतीमः।

## विषयस्य निर्देश्यत्वोपपत्ति निरूपणम्

एवं विषयफलयुतं शास्त्रं प्रथमसूत्रेण भगवान् जैमिनिराविश्चकार।

अत्रेत्थमाशङ्क्यते - विषयप्रयोजनकथनार्थं प्रथमसूत्रं प्रवृत्तमिति तु न सम्भवदुक्तिकम्। विषयः धर्म एव भवतीति हि सिद्धान्तः। स च विषयः चोदनासूत्र-गम्यः, न प्रथमसूत्रगम्यः। 'चोदनालक्षणोऽर्थो धर्म' इति धर्मस्य लक्षणं कथ्यते। लक्षणे अभिधीयमाने विषयस्याप्यभिधानं स्वत एव प्राप्तम्। न च उद्देशः लक्षणं परीक्षेति विभागमनुसरद्भिः न्यायवैशेषिकतीर्थङ्करैः प्रथमं पदार्थानामुद्देशं विधाय ततः लक्षणपरीक्षादि कृतमिति तद्वदेवात्र प्रथमसूत्रे उद्देशो विहितः, द्वितीयसूत्रे उद्दिष्टस्य धर्मस्य लक्षणं क्रियत इति धर्मः चोदनालक्षणोऽर्थ इति अर्थवर्णनमपि तदा कार्यमिति वाच्यम्, न्यायवैशेषिकादिग्रन्थे निरूपणीयस्य पदार्थस्य नानाविधत्वात् तथा कीर्तनं साधु। परं तु शास्त्रेऽस्मिन् निरूपणीयो धर्मस्त्वेक एवेति लक्षणाभिधानकाल एव स्वतस्तज्ज्ञानसम्भवात् पृथक् तस्य विषयत्वेन आदिमसूत्रे निर्देशः व्यर्थ इति —

अत्रैवं प्रतिविधीयते - अतिशयितप्रज्ञाशालिनां विषये काममस्तु भवदीया प्रक्रिया। परं तु ये मन्दबुद्धयः शिष्या दृष्यन्ते तेषां कृते प्रथमं विषयनिर्देशः प्रदर्शनीयः, अन्यथा तेषां प्रवृत्तिरेवात्र नोदेति। किं च अधीतवेदस्य पुरुषस्य आपातप्रतीतयः नानाविधास्समुत्पन्ना भवन्ति। तथा सति तादृशं नानाजिज्ञासाव्याकुलमतिं शिष्यं धर्मस्यैव प्रधानविषयत्वेन उपदिश्य तस्य दृष्टिं धर्मविषये प्रवर्त्य तं संक्षिप्तदृष्टिं करोति आचार्यः। ततः पश्चात् स शिष्य धर्मेऽवहितमनाः एतदतिरिक्तं विषयत्वेन परित्यज्य स्वसन्देहस्थलमपि तत्र तत्र मीमांसानयानुरोधं संदिदृक्षेत। अथवा सर्वेषामप्यध्यायानां धर्म एव विषय इति

द्योतनार्थं प्रथमसूत्रे विषयाभिधानं न्याय्यं भवति। तदुक्तं मीमांसापादुकायाम् -

> [127]"अस्यासौ ग्रन्थराशे र्विषय इति मतिः प्रेक्षितॄणां स्वतःस्यात्
> मोघा पूर्वं तदुक्तिः, नतिरिव न हि सा भाविनी भद्रचर्या।
> उद्देशोऽप्यर्थसिद्धस्तदुचितवपुषो लक्षणस्य प्रणीतौ
> सत्यं संक्षिप्तद्रष्टेर्मतिरवदधती संदिदृक्षेत शेषम्॥"

इति। अतस्सिद्धं प्रथमसूत्रे विषयस्य निर्देश्यत्वं सूपपादमिति।

## प्रयोजनस्य निर्देश्यत्वं प्रथमसूत्रे अभिहितमिति कथनम्

एवं प्रयोजनस्य निर्देशोऽपि प्रथमसूत्रे अत्यन्तमावश्यकः। न च ग्रन्थकर्तुराप्तत्वनिश्चये सति तेन ज्ञानेन शास्त्रप्रवृत्तिः शिष्यस्य सुशकेति प्रयोजननिर्देश व्यर्थः, यदि न कर्तुः आप्तत्वनिश्चयः परं तु अनाप्तत्वनिश्चयः शिष्यस्य वर्तते चेत् उक्तमपि फलं तदा न विश्वसिति शिष्य इति प्रयोजननिर्देशः विफल इति वाच्यम्, आचार्यस्य ग्रन्थकर्तुराप्तत्वनिश्चये प्रवृत्तिस्सुकरा प्रेक्षावतां भवति। अनाप्तत्व निश्चये तु न तथा प्रवृत्तिरिष्यते। परं तु यत्र प्रेक्षावतां ग्रन्थकर्तृनिष्ठम् आप्तत्व सन्दिग्धं भवति तत्र फलमपि तेषां सन्दिग्धं भवति। तस्मिन् काले सन्देहापकरणार्थं प्रयोजननिर्देशः ग्रन्थकर्तुरवश्यकर्तव्यतामावहति। सन्दिहानस्य पुरुषस्य सर्वत्र प्रवृत्तिः कुण्ठिता भवति। तथा सति तां प्रवृत्तिं प्रकर्षेण जनयितुमय प्रयोजननिर्देश. उपयुक्तो भवति। लोकेऽपि सन्दिहानानां प्रवृत्ति प्रयोजनवाक्यश्रवणेनैव सफला दृश्यते। अत. उपदिश्यमानार्थे उपादानेच्छां जनयितुं प्रयोजननिर्देश. अवश्यं कार्य इति मन्वानः तन्निर्देशपुरस्सरं सूत्रकारः शास्त्रम् आविश्चकारेति प्रतीयते। तदाहुः

> [128]"आप्तत्वं ग्रन्थकर्तुर्यदि विमतमिह स्वेन किं तत्फलोक्त्या
> तन्निर्धारे ततस्तत्फलमनुमिमते निष्फलेत्यसारम्।
> सन्देहेऽपि प्रवृत्तिं प्रजनयितुमियं कल्पते विश्वदृष्ट्या
> निश्शङ्कानां निजेष्टं प्रमुखयति ततो धुक्षयेत् संजिघृक्षाम्॥"

इति।

## अत्र शास्त्रदीपिकाकृन्मतविमर्शः

यदुक्तं शास्त्रदीपिकायां जिज्ञासाधिकरणे मीमांसाशास्त्रारम्भकर्तव्यतोपपादकन्यायोपवर्णनपरं प्रथमसूत्रमिति प्रतिपाद्य एतादृशवर्णने पौनरुक्त्यशङ्कामुद्भाव्य विषयप्रयोजनादिकथनमात्रपरं प्रथमसूत्रमिति । तस्यायमर्थः — स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः किमदृष्टं उत दृष्टरूपार्थज्ञानं विधत्त इति संशयमुद्भाव्य दृष्टे सम्भवति अदृष्टकल्पनाया अन्याय्यत्वादिति न्यायेन अर्थज्ञानार्थमध्ययनमिति निरूप्य तच्चार्थज्ञानं विचारमन्तरेण न सम्भवतीति स एव विधिः विचारमाक्षिपतीति मीमांसाशास्त्रारम्भस्य कर्तव्यता जिज्ञासाधिकरणे व्यधायि । इदं त्वस्माभिः प्रागेव सम्यगदर्शि अध्ययनविधि विचारावसरे । एवं प्रथमं निरूप्य प्रथमाधिकरणरचनां प्रकारान्तरेण रचयामास शास्त्रदीपिकाकारः अथवेत्यादि ग्रन्थेन[129]

तद्ग्रन्थस्यायं सारः — साम ऋगक्षराभिव्यक्तिद्वारा दृष्टार्थं भवति नादृष्टार्थमिति नवमद्वितीये निरूपितम् । यथा —

[130]"**अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् ।**
**अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गचोदिता ।।**
**एवं दृष्टे फले लब्धे नादृष्टफलकल्पना ।**"

इति । तथा च तेनैव न्यायेन अध्ययनस्य अक्षरराशिग्रहणद्वारा अर्थज्ञानार्थत्वसिद्ध्या पुनस्तस्य साधनं प्रथमसूत्रे व्यर्थताम् आपादयतीति तत्पौनरुक्त्यं परिजिहीर्षया प्रयोजनविवक्षैव सूत्रकृता अभिप्रेतेति पार्थसारथिमिश्रैरभिहितम् । तत्र [131]'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति कुमारिलभट्टवचनमपि पार्थसारथिमिश्रः प्रमाणयति । एवं अधर्मस्यापि जिज्ञास्यत्वेन स्वीकारार्थं सूत्रे अकारप्रश्लेषः कार्य इत्यपि शास्त्रदीपिकायां प्रदर्शितम् । एवं प्रथमसूत्रार्थवर्णनं शास्त्रदीपिकाकृता कृतम् ।

एतत् एवं विमृश्यते - शास्त्रारम्भप्रतिज्ञासूत्रे शास्त्रारम्भोपपादनन्यायोपवर्णनमेव न्याय्यम्, न तु तत्र पौनरुक्त्यमाशङ्क्य विषयप्रयोजनमात्रपरं सूत्रमिति वर्णनं साधु । न्यायगुच्छात्मके शास्त्रे प्रथमसूत्ररचनवेलायामेव न्यायसञ्चारः परित्यज्यते चेत् - तदत्यन्तं परिहसमीपं भवेत् । एवं

धर्मपदमुपलक्षणार्थ, अधर्मस्यापि जिज्ञास्यत्वेन ग्रहकत्वात् इति वचनं तु साधु परं तु अधर्मग्रहणार्थ सूत्रे अकारप्रश्लेषः कार्य इति पक्षस्तु न रमणीयः। तथा सति अर्थद्वयविषय प्रतिज्ञाद्वये क्रियमाणे शास्त्रस्य तथा अधिकरणस्य च एकार्थकत्वभङ्गः स्यात् । तथा च धर्मपदमुपलक्षकमिति, प्रथमसूत्रम अधिकरणरचनारूपमिति च समादर्तव्ये इति पूर्वोक्तः शास्त्रदीपिकापक्षः न साधीयानिति मीमांसापादुकायां श्रीमद्वेदान्तदेशिकाचार्यः प्राह -

[132]''**सूत्रेऽस्मिन् नास्ति नीति र्विषयफलकथामात्रमेवोपजीव्यं**
**यत् साम्नां वक्ष्यमाणं तदनुसरणतोऽधीतिरध्यायशेषः ।**
**इत्याहुः केचिदेतन्मृदुफलम्; अपि चाधर्मचिन्ताऽप्यकारो -**
**-पश्लेषात् कल्पनीयेत्यपि परिजगृहुः क्लिष्टगत्यन्तरं तत् ।।''**

इति। अयं विचारः इतोप्यन्यत्र न चर्चित इत्यस्ति कश्चन अतिशयो मीमांसापादुकाया इत्यवधेयं सुधीभिः।

## प्रतिज्ञासूत्रे संबन्धकथनमप्यावश्यकमिति निरूपणम्

सर्वमपि शास्त्रं विषयप्रयोजन सम्बन्धाधिकारिरूपम् अनुबन्धिचतुष्टयं प्रथमं प्रदर्शयति। अन्यथा श्रोतॄणां प्रवृत्तिरेव नोपपद्येत। अत एव मीमांसाशास्त्रप्रतिज्ञासूत्रे एतत्सर्वं निगूहितमिति शबरस्वामिप्रभृतयः मन्यतेस्म। तदुक्तं श्लोकवार्तिके

''**अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ।।''**

इति। एवं विषयप्रयोजने धर्मशब्देन निरूपिते। एवं च सतिसम्बन्धकथनं कुत्रास्तीति चेदत्रोच्यते -

[133]''**शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।**
**तदुक्त्यन्तर्गतस्तस्माद् भिन्नो नोक्तः प्रयोजनात् ।।''**

इत्यत्र धर्मज्ञानस्य प्रयोजनत्वकथनादेव शास्त्रस्य धर्मज्ञानेन सह साध्यसाधनभावरूपः प्रतिपाद्य प्रतिपादकभावरूपो वा सम्बन्ध अर्थात् ज्ञात एवेति कुमारिलपादाः आशेरते। न हि अर्थात् समधिगतमपि महर्षिगुण सूत्रेषु अक्षरै

निर्बध्नाति । एतदेव शबरस्वामी 'अथवा अर्थवत्' इति ग्रन्थेन प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धनिरूपयितुकामः प्राह । तथा च सम्बन्धकथनमत्यन्तमावश्यकमित्यापतति। अन्यथा असम्बद्धप्रलापित्वेन श्रोतॄणां प्रवृत्तिरेव नोदेति । [134]'अथातो धर्मं व्याख्यास्याम' इत्यत्र कणादेन मुनिना शिष्यप्रश्नानन्तर्यादिरूपसम्बन्ध एवाभिप्रेतः इति वैशेषिकग्रन्थे निरूपित, तथापि स च सम्बन्ध· अनुपयुक्तत्वात् पूर्वोक्त· साध्यसाधनभावरूप. प्रतिपाद्यप्रतिपादकभावरूपो वा सम्बन्ध एवात्र वक्तव्य इति श्लोकवार्तिके सुष्ठु प्रतिपादितम्। अत एव कुमारिलभट्ट.

[135]"**योऽप्ययं शास्त्रसम्बन्धः वर्ण्यते कैश्चिदादितः ।**
**क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा ॥**
**सदसद्भावयोस्तस्य विशेषो नोपलभ्यते ।**
**श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥**"

इत्यत्र क्रियारूपस्य सम्बन्धस्य निष्प्रयोजनत्वेन, एवं गुरुपर्वक्रमरूपस्य सम्बन्धस्यापि निर्हेतुकत्वेन निष्फलत्वेन च निराकार्षीत्। सम्बन्धस्तु स एव भवति यः सप्रमाणकः सप्रयोजनश्च भवति । स तु पूर्वोक्त एव साध्यसाधनभावरूपो भवितुमर्हतीति स्पष्टम् उदीरयति कुमारिलार्यः

[136]"**तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुस्सप्रयोजनः ।**
**शास्त्रावतारसम्बन्धो वाच्यो नान्यस्तु निष्फलः ॥**" इति।

इदं त्वत्र परमं तत्त्वम् - विषयोऽप्यत्र ज्ञाप्यजन्यभेदेन द्विविधो भवति । ज्ञाप्यो धर्मः, जन्यस्तज्ज्ञानम्। धर्मेण सह शास्त्रस्य सम्बन्धस्तु ज्ञाप्यज्ञापकभावलक्षण , तज्ज्ञानेन सह जन्यजनकलक्षणः । धर्मज्ञानमवान्तरप्रयोजनम् । परमप्रयोजनं तु अभ्युदयनिःश्रेयसे। तत्कामोऽधिकारी भवतीत्यनुबन्धिचतुष्टयं श्रोतृप्रवृत्तिसिद्ध्यर्थं सूत्रकारेण श्रुत्यर्थाभ्यामुक्तम्। एतादृशसम्बन्धाकथने सर्वत्र सम्बन्धादीन् निरसितु प्रवृत्तानां वैतण्डिकानां दूषणवादश्रवणेन शास्त्रस्यास्यापि असम्बद्धप्रलापित्वभ्रमः व्यामुग्धानां भवेत् । तदपाकरणार्थमेव सर्वे तीर्थङ्करा. कृपालवः महर्षयः आदौ सम्बन्धमपि शास्त्रस्य विषयेन प्रयोजनेन च सह निबध्नन्ति । तदाहु

मीमांसापादुकाकृतः -

[137]“वक्तुं कश्चित् प्रबन्धं यदि विषयफले तस्य पूर्वं ब्रवीति
स्पष्टस्सम्बन्धवर्गः किमिति पुनरिमं वर्णयेतेत्यवर्ण्यम्।
तत्तत्सम्बन्धवर्गप्रमथनकथनोद्दण्डवैतण्डिकोक्ति -
व्यामुग्धच्छात्रषण्डभ्रमभिदुरगिरामानृशंस्यं न शास्त्रम् ।।”

इति।

## सूत्रोक्तजिज्ञासाशब्दार्थविवरणम्

ननु जिज्ञासेति पदस्य कोऽर्थ इति चेदत्रोच्यते — ज्ञातुमिच्छा जिज्ञासा प्रकृत्यर्थः ज्ञानम्, प्रत्ययार्थः (सनर्थः) इच्छा। अत्र ज्ञानं नाम विचार एव। तस्यैवाः विधीयमानत्वात्। न च धर्मजिज्ञासा कर्तव्येति इच्छाया एव विधानार्हता प्रोक्तेः विषयवैलक्षण्याधीनाया इच्छाया विधेयत्वं कथं सङ्गच्छत इति वाच्यम् 'इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयत' इति जिज्ञासाधिकरण श्रीभाष्यवचनानुसारं ज्ञानस्यैव विधानात्। तथा हि - सम्प्रत्ययवाच्याया इच्छाया छात्वर्थभूतं ज्ञानं कर्मभवति। कर्म तदेव भवति यत् कर्तुः क्रियया आप्तुमिष्टतम-मिति। अतः कर्मणः क्रिया शेषभूता भवति, तत्सिद्ध्यत्वात् तस्याः। यथ यागीयव्रीह्यादेः प्रोक्षणादिः। अतः प्रकृत्यर्थभूतज्ञानकर्मिकेच्छा तत्सिद्ध्यर्था। अत इच्छाया इष्यमाण ज्ञानप्रधानत्वात् इष्यमाणं ज्ञानं विधेयमिति फलति। न च जिज्ञासायाः कर्तव्यत्वे प्रतीते कथं ज्ञानस्य विधेयतासम्भव इति शङ्कचम्, यथा 'स्नात्वा भुञ्जीत' 'प्राङ्मुखो भुञ्जीत' इत्यादौ धात्वर्थभूतस्य भोजनस्य कर्तव्यत्वे प्रतीतेऽपि 'अप्राप्ते हि शास्त्रमर्थवत्' इति नियमात् अप्राप्तयोः स्नानप्राङ्मुखत्वयोरेव विधेस्तात्पर्यमिति अर्चस्वाभाव्यादभ्युपगम्यते तथैव अत्र इच्छाया विधेयत्वासम्भवात् तद्विषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते न च [अत्र विधानं नाम विचारस्य अज्ञातज्ञापनमेव, न तु अप्रवृत्तप्रवर्तनम्। विचारस्य रागतः प्राप्तत्वात्। रागतः प्रवृत्तस्यापि अनारम्भनीयताबुद्धौ सत्यां (भ्रमात्) आरम्भणीयताज्ञापनमेव अज्ञातज्ञापनम्।] न चात्र निर्णयात्मकं ज्ञानमेव स्वीकृत्य जिज्ञासाशब्दस्य निर्णयेच्छैवार्थ इति कथं नोच्यत इति वाच्यम्, तथा सति

निर्णयेच्छायां सत्यां आप्तोपदेशादिनापि निर्णयसम्भवात् विचारस्य आवश्यकतैव नोदियात् विचारात्मकं हि शास्त्रमिदं प्रवर्तते। तथा च विचारशास्त्रप्रारम्भवेलाया विचारनिर्देश एव युक्तो भवति। अपि च सन् प्रयोगसत्त्वेन विचारस्य रागप्राप्तत्वमपि प्रतीयते। निर्णयात्मकज्ञानस्वीकारे सन्प्रत्यय प्रयोगवैयर्थ्यापत्ते.। विचारो हि निर्णयान्तो भवतीति निर्णयस्त्वर्थलभ्यो भवति। विचारस्य रागप्राप्तत्व-विचारस्त्वन्यत्र निरूपित इत्यालमतिचर्चया।

अस्तु तर्हि धर्मजिज्ञासेत्यत्र कीदृशस्समासस्समाश्रयणीय इति चेद् - ब्रूम - धर्मस्य जिज्ञासेति षष्ठीतत्पुरुषः प्रत्येतव्यः। धर्मस्येति कर्मणि षष्ठी गृह्यते। अत एव धर्मस्य विषयत्वं प्रयोजनत्वं च सिद्ध्यति। अत एवोक्तं 'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्'। इति। अत एव धर्मेण जिज्ञासा, धर्मजिज्ञासेत्यादि विग्रहकल्पनं न युक्तिसहं भवति। न चैवं सति धर्माय जिज्ञासेति शाबरभाष्यवचनं कथं सङ्गच्छत इति वाच्यम्, प्रकृतिविकृतिभावस्थले यूपाय दारु इत्यादावेव तादर्थ्य चतुर्थीसमास सम्भवात् उक्तशाबरवचनं न समासप्रदर्शनपरम्, अपि तु धर्मस्य प्रयोजनत्वसूचनपरमित्यवगच्छामः। अत एवोक्तं कुमारिलवार्तिके

**[138]'प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्तं समस्यते।**
**तादर्थ्ये यूपदार्वादौ तेनास्मिन्नसमासता॥''**

इति। षष्ठीसमासाश्रयणमेव युक्तमिति मन्वानः भगवान् शबरस्वामी [139]'सा हि तस्य ज्ञातुमिच्छा' इति प्रादीदृशत्।

न चात्र प्रतिपदविधाना च षष्ठी न समस्यत इति प्रतिप्रसवसद्भावात्। प्रतिप्रसवो नाम अपवादापवादः।

न च जिज्ञासाशब्दस्य आबन्तत्वेन स्त्रीलिङ्गत्वात् कथं कृदन्तत्वं तस्योपपन्नम्, येन च कृद्योगा च षष्ठी समस्यत इति प्रतिप्रसवसद्भाव. प्रदर्शित इति वाच्यम्, ज्ञाधातुतः निष्पन्न जिज्ञासाशब्दः। ज्ञा धातो र्द्वित्वे सति ज्ञा ज्ञा इति रूपं भवति। ततः अभ्यासस्थस्य अकारस्य लोपे ज् ज्ञा इति भवति। ततः अभ्यासस्य अकारस्य इकारादेशे प्राप्ते 'जिज्ञा' इति भवति। तत. सन् प्रत्यये विधीयमाने जिज्ञास इति प्राप्यते। जिज्ञास इति सनन्तात् [140]'अप्रत्ययात्' इति सूत्रेण अकारे कृत्प्रत्यये जाते

अदन्तात् जिज्ञासाशब्दात् [141]'अजाद्यतष्टाप्' इति सूत्रेण टापि जिज्ञास आ इति जाते [142]'अकस्सवर्णे दीर्घ' इति सवर्णदीर्घे च जिज्ञासेति निष्पद्यते। अयमेकादेशः [143]'अन्तादिवच्च' इति सूत्रेण पूर्वस्य शब्दस्य अन्ततां भजन् कृदन्तत्वादिकं च भजते। अतः जिज्ञासाशब्द. कृदन्त इति कृद्योगे च षष्ठी स्वरसत एवात्र वर्तत इति न किंचिदनुपपन्नं नामात्र । इतोऽप्यत्र समासविचारः विस्तरेण श्रुतप्रकाशिकातत्त्वटीकादौ द्रष्टव्य इत्यास्तां तावत् । एतादृशः जिज्ञासाशब्दार्थविचारः श्रीमद्वेदान्तदेशिकार्यैः मीमांसापादुकायामेवं समग्राहि —

**[144]"ज्ञानं सूत्रे विचारस्तदधिकरणतो निर्णयस्त्वर्थलभ्यः**
**चिन्तायां सम्प्रयोगो विधिपरिहरणात् रागसिद्धिं व्यनक्ति।**
**धर्मस्येत्यत्र षष्ठी प्रतिपदविहिता यद्यपि स्यात् तथापि**
**प्रोक्ता कृद्योगजेयं समसनविषयः, शाबराकूतमन्यत्॥"** इति,

**[145]"जिज्ञासां निर्णिनीषां विदुरिह कतिचित् तत्र गम्यो विचारः**
**तस्यैवारम्भयोगादिह स तु भवतु ज्ञानमिच्छाधिरूढम्।**
**सामान्योक्ति र्विशेषे प्रकरणवशतो विन्दते स्वा प्रतिष्ठां**
**नो चेत् विश्रान्तिरस्याः कथमिह भवतां निर्णयाख्ये विशेषे॥"**

इति च।

अत्रेदमाकूतम् - ब्रह्मजिज्ञासेत्यत्र जिज्ञासाशब्देन निर्णिनीषैवेति प्रतिपाद्य निर्णयस्य विचारसाध्यत्वात् निर्णयेच्छा विचारमाक्षिपतीति शाङ्करवेदान्तिनां मतम् । तदुक्तं भामत्यां — [146]'आनन्दघनब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम्। तच्च न केवलेभ्यो वेदान्तेभ्योऽपि तु ब्रह्ममीमांसोपकरणेभ्य इति इच्छाविभेन ब्रह्ममीमांसायां प्रवर्त्यते।' इति। एतद् व्याख्यान प्रसङ्गे कल्पतरुकारैः 'निर्णयश्च विचार साध्य इति तत्कर्तव्यता अर्थाद् गम्यत इत्यर्थः। आर्थिके चास्मिन् अर्थे कर्तव्यपदाध्याहारः। श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्तेत्येष एव।' इति प्रोक्तम्। एतेन निर्णयेच्छैव जिज्ञासाशब्द वाच्येति अवगम्यते। विचारस्तु अर्थलभ्य इति तदर्थः। एवमेव निर्णयेच्छामेव जिज्ञासाशब्दार्थत्वेन निरूपयन्ति भाट्टाः । तथापि अस्माभिः निरूपितः प्राक्तन. प्रकार एव समीचीन

इत्यवगन्तव्यम् । विचारात्मकस्य शास्त्रस्य आरम्भणीयतायां विचारस्यैव ज्ञानशब्दार्थत्वं युक्तं भवति । अपि च विचारस्य रागत. प्राप्तत्वात् सन्प्रत्यययोगस्यापि तत्र सार्थक्यसम्भवात्। न च ज्ञाधातोः ज्ञानसामान्यवाचित्वात् कथं विचारार्थकत्वं तस्य युक्तमिति वाच्यम्, निर्णयार्थपक्षेऽपि एतत्समानात । अर्थप्रकरणादिना विचारार्थकत्वे ज्ञा धातो. स्वारस्यसम्भवात् ।

एतेन [147] "अत्र तर्करूपं ज्ञानं विधेयम्, तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञान तु फलत्वात् न विधेयम्। 'प्रमितिरूपं ज्ञानं विधेयम्, तर्करूपं ज्ञानं त्वार्थम्' इत्यपि परैरुक्तम्, अन्तर्नीतं विचारमाक्षिपतीति। ततोऽपि प्रागुक्तपक्षस्साधीयान्।" इति जिज्ञासाधिकरण श्रुतप्रकाशिकाशयोऽपि व्याख्यातः ।

एवं प्रथमाधिकरणरचना मीमांसापादुकायां श्रीमद्वेङ्कटनाथर्यै अनितरसाधारणशैल्या प्रदर्शिता ।



## पादटिप्पणी

1. अनुमितिगादाधरी सङ्गतिप्रकरणम्
2. सत्पथसञ्चार· पृ. 270.
3. मी.पा. 18
4. मी पा. 19
5. मी पा. 17
6. मी पा - परित्राणम् - 271
7 मी.पा. 20
8 श्लोकवार्तिकम् - श्लो. 11
9 ताण्ड्यब्राह्मणम्
10. पू.मी 4-3-18
11 तै आ. 2-15
12 तै आ. 2-10
13. मनुस्मृति· - 2-167
14. न्यायरत्नमाला - पृ. 19
15. शास्त्रदीपिका 1-1-1
16 श्रीभाष्यम् 1-1-1
17. भाट्टचिन्तामणि· 1-1-1
18. शास्त्रदीपिका 6-1-7
19 न्यायमाला 1-1-1
20. शाबरभाष्यम् - 6-1-37
21. प्रकरणपञ्चिका - पृ. 443
22. प्रकरणपञ्चिका - पृ. 22
23. आपस्तम्बश्रौतसूत्रम् - 1-7-1
24. मनुस्मृति. 2-140

25. प्रकरणपञ्चिका पृ. 22
26. प्रकरणपञ्चिका पृ. 23
27. बृहती 6-1-1
28 मनुस्मृति 4-95 & 4-98
29. मनुस्मृति· 2-172
30. बृहती 1-1-1
31 नयविवेक पृ. 18
32. प्राभाकरविजयः - 1
33. न्यायरत्नमाला - पृ. 16
34. शाबरभाष्यम् 1-1-2
35 नयविवेका· - 1-1-1
36. अष्टाध्यायी 1-3-36
37. वै.सि.कौ. 1-3-36
38 काशिका 1-3-36
39. अष्टाध्यायी 1-3-72
40. अष्टाध्यायी 1-3-86
41. अष्टाध्यायी 1-4-49
42 मीमांसाकौस्तुभ· - 1-2-1
43. मी.पा. 41
44 मी.पा. 31
45. मी.पा. 42
46. मी.पा. 43
47. मी.पा. 39
48. मी.पा. 40
49. श्रीभाष्यम् 1-1-1
50. मनुस्मृति 10-16
51. याज्ञवल्क्यस्मृति· आचाराध्याय - श्लो 34
52 तै.उ 3-1-19
53. मी.पा. 74
54. मी पा. 80
55 मी.पा. 78
56. मी.पा 73
57 मी.पा. 75
58. मी.पा. 72
59. मी.पा 62
60. शाबरभाष्यम् 1-1-5
61. मी.पा. 21
62. मी.पा. 22
63. मी.पा. 23
64. मी.पा. 24
65. अष्टाध्यायी 3-4-21
66. ब्र.सू. 1-3-38
67 से.मी. 28
68. वाक्यपदीयम्
69. अष्टाध्यायी 3-3-163
70. तन्त्रवार्तिकम् 3-1-3
71. तन्त्रवार्तिकम् 2-4-2
72. भाट्टदीपिका 2-4-2
73 पू.मी. 2-1-6,7,8
74. मी.पा. 66
75. मी.पा. 67
76. श्रीभाष्यम् 1-1-1
77. न्यायकुसुमाञ्जलि 1-11
78. मी.पा. 68
79 मी.पा. 69

80 सत्पथसञ्चार पृ 363
81 मी.पा. परित्राणम् पृ. 365
82. मी.पा. परित्राणम् पृ 365
83. मी.पा. 70
84 श्रीभाष्यम् 1-1-1
85. मी पा. 58
86 न्यासविंशति - श्लो. 1
87. न्यासविंशति श्लो. 3
88. मी.पा. 59
89. मी.पा. 60
90. मी.पा. सत्पथसञ्चार· - पृ-344
91. मी.पा 61
92. जिज्ञासाधिकरणश्रुतप्रकाशिकायां धर्मशब्दार्थविचारावसरे उद्धृतौ इमौ।
93. पू.मी. 1-1-2
94. शाबरभाष्यम् 1-1-2
95. नारसिंहपुराणम् 18-33
96. ब्र सू. 1-1-3
97. ब्र.सू. 1-1-31
98. श्लोकवार्तिकम् - चोदनासूत्रम् 13
99. अ.सा. 20
100. मी.पा. 44
101 मी.पा. 45
102. तन्त्रवार्तिकम् 3-1-13-15
103 नयविवेक. 1-1-1
104 न्यायकुसुमाञ्जलि - 1
105. मी.पा 46
106. मी.पा. परित्राणे अयं उद्धृत पृ. 282
107. ब्र सू 1-2-29
108 भगवद्गीता 18-4
109 मी.पा. 47
110. मी.पा. 48
111. शाकरभाष्यम् 1-1-1
112. भामती 1-1-1
113. मी.पा. सत्पथसञ्चारे उद्धृत अय श्लोक । पृ 321
114. तै उ 2-63
115. मी.पा. परित्राणे उद्धृतोऽय श्लोक पृ. 320
116. मी.पा. 49
117. छा उ 5-10-5
118. बृ. उ. 3-6-4-6
119. भगवद्गीता 8-16
120. वि.पु. 6-5-50
121. भगवद्गीता 2-42, 43, 44
122. भगवद्गीता 2-45
123. भगवद्गीता 2-45
124 मी.पा. परित्राणे उद्धृतोऽय श्लोक पृ. 50
125. मी पा. 50
126 मी पा 55
127. मी.पा. 51
128. मी.पा. 52
129. शास्त्रदीपिका 1-1-1
130 शास्त्रदीपिका 9-2-2
131 श्लोकवार्तिकम् जिज्ञासासूत्रम् श्लो. 11

132. मी.पा. 53
133. श्लो. वा जिज्ञासासूत्रम् श्लो. 18
134. वैशेषिकदर्शनम् 1-1-1
135 श्लो वा. जिज्ञासासूत्रम् श्लो. 23
136 श्लो वा. जिज्ञासासूत्रम् श्लो. 25
137. मी.पा. 54
138 श्लो. वा. जिज्ञासासूत्रम् श्लो. 118
139 शाबरभाष्यम् 1-1-1
140. अष्टाध्यायी 3-3-10
141. अष्टाध्यायी 4-1-4
142. अष्टाध्यायी 6-1-101
143. अष्टाध्यायी 6-1-85
144. मी.पा. 56
145. मी.पा. 57
146. भामती 1-1-1
147. श्रुतप्रकाशिका 1-1-1



# ३. धर्मलक्षणाधिकरणविचारः

## चोदनालक्षणोऽर्थो धर्मः - 1-1-2

एवं प्रथमसूत्रे वेदार्थविचाररूपं मीमांसाशास्त्रम् अवश्यमारम्भणीयमिति प्रतिज्ञातम्। सूत्रेणानेन जिज्ञास्यतया प्रतिज्ञातो धर्मः किं स्वरूपः किं लक्षणश्चेति विचार्यते। उद्देशो लक्षणं परीक्षेति नियमानुसारं प्रथमं धर्मः उद्दिष्टः। उद्दिष्टस्य धर्मस्य लक्षणं साम्प्रतं वक्तव्यं भवति। तथा च लक्षणप्रतिपादकस्याप्यस्य सूत्रस्य अधिकरणरूपत्वं सिद्धमिति विषयविशयपूर्वोत्तरपक्षप्रयोजनादिपञ्चाङ्ग-संवलितमेतदिति प्रत्येतव्यम्।

### भाट्टमतेन एतदधिकरणनिर्वाहप्रकारः

अत्राहुः भाट्टाः - पूर्वाधिकरणे जिज्ञास्यत्वेन प्रतिज्ञातो धर्मविचारोऽत्र विषयः। स च विचारः कर्तव्यो वा न वेति विशयस्तत्रोदेति। धर्मस्तु नेन्द्रियगोचर इति स त्वलौकिकः। तथा च गगनकुसुमस्य लक्षणप्रमाणादिरहितत्वेन अविचार्यत्वं यथा प्रसिद्धं तद्वदेव अलौकिकस्य धर्मस्य लक्षणप्रमाणयोरप्रसिद्धत्वात् तद्विचारः व्यर्थ इति पूर्वः पक्षः। तत्र सिद्धान्तत्वेवं भवति यत् — अलौकिकस्यापि धर्मस्य लक्षणं प्रसिद्धमेव। अत्र लक्षणपदेन प्रमाणं, स्वरूपं चेति अर्थद्वयमिष्टम्। तत्र चोदनैव प्रमाणं यस्य, चोदना लक्षणं प्रमाणमेवेति अर्थद्वयविवक्षया विग्रहद्वयं कार्यं भवति। तत्र प्रथमं तु प्रधानं, द्वितीयं तु गौणम्। अर्थात् प्रथमं श्रौतम्, अपरं त्वर्थमिति विवेक.। अत एवाहुः -

[1]"**धर्मे सामान्यतस्सिद्धे प्रमाणं चोदनोच्यते।**
**स्वरूपादेस्ततस्सिद्धिः स्वरूपं चेह सूत्र्यते॥**
**द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते॥**"

इति । तथा च प्रथमविग्रहेण चोदनाव्यतिरिक्तस्य प्रत्यक्षादेः प्रामाण्य धर्मे व्यावर्त्यते । द्वितीयेन तु चोदनाया अप्रामाण्यशङ्का व्यावर्त्यते । तथा च चोदनाप्रमाणकत्वरूप लक्षणस्य चोदनारूपप्रमाणस्य च सत्त्वात् धर्मविचार· कर्तव्य इति सिद्ध्यति । अत्र चोदना नाम किमिति चेदुच्यते — 'चोदनेति क्रियाया· प्रवर्तकं वचनमाहुः' इति शाबरभाष्ये । अस्यायमर्थ - पुरुषप्रवर्तनपरे विधौ साध्यसाधनेतिकर्तव्यताद्यंशैः पूर्णः प्रत्ययः येन वाक्येन भवति तदेव चोदनाशब्दवाच्यमिति । तदाहु. वार्तिककृतः

[2]'**किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।**
**तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ॥'** इति ।

अस्याधिकरणस्य एवं सङ्गतिरचना कार्या - धर्मे लक्षणप्रमाणयो प्रतिपादनात् धर्मविचारात्मकशास्त्रसङ्गतिः । चोदनायाः धर्मे प्रामाण्य निरूपणात् पादाध्यायसंगती निरूपिते । धर्मे प्रमाणस्वरूपयोरेव असत्त्वात् तद्विचारो न कार्य इति पूर्वाधिकरणेन आक्षेपिकी सङ्गतिः । एवं भाट्टमतसारोऽत्र प्रदर्शितः ।

## मीमांसापादुकायां धर्मलक्षणाधिकरणविचारः

अत्राहुः मीमांसापादुकाकृतः - प्रथमाधिकरणे जिज्ञासितो धर्मः किंरूपः किंलक्षणश्चेति विचारे सूत्रमिदं प्रवर्तते चोदनालक्षणोऽर्थो धर्म इति । अनेन धर्मस्य लक्षणप्रमाणासत्त्वं निवारितम् । तत्र लक्षणं च धर्मस्य चोदनालक्षणार्थत्वम् वेदप्रमाणार्थकत्वमिति तदर्थ· । अत्र स्वरूपकथनं श्रौतं भवति, तस्यैव प्रमाणजिज्ञासातः पूर्वं सम्भवात् । प्रमाणकथनं तु आर्थं भवति । स्वरूपज्ञानं विना प्रमाणज्ञानं त्वसम्भवीति स्वरूपकथनं प्रथमं कार्यम् । अत एव शाबरभाष्येऽपि [3]'को धर्मः कथं लक्षणः' इति धर्मस्वरूपपरं वचनमेव प्रथमं दरीदृश्यते । अपि च स्वरूपप्रमाणयोः द्वयोरपि अत्र श्रौतत्वकथने वाक्यभेदापत्तिः स्यात् । न च [4]'यत्र वाक्यादर्थोऽवगम्यते तत्रैवम् । तत्तु वैदिकेषु, न सूत्रेषु । अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमिदमित्यवगम्यते' इति शाबरवचनानुसारं पुरुषनिर्मिते सूत्रे अर्थद्वयकल्पनं न वाक्यभेददोषाय कल्पत इति वाच्यम्, अर्थो धर्मः, चोदनालक्षणो इति हि पौरुषेयसूत्रद्वयकल्पना । अत्र च साकाङ्क्षत्वात् अनन्तरसूत्रगतो धर्मशब्दः

अनुषङ्गेण तदेकदेशत्वेन कल्प्यते । चोदनालक्षणो धर्म इति । तेन च वाक्यद्वयेनैवार्थद्वयप्रतीतिरिति एकवाक्यत्वासम्भवः, अध्याहारादिकल्पनागौरवं चेति उभयोः प्राधान्यपक्षो न कार्यः । अत एव अन्तिमं शाबरभाष्यवचनम् [5]'अथवा अर्थस्य सतः चोदनालक्षणस्य धर्मत्वमुच्यत इत्येकार्थत्वमेवेति' इति पूर्वोक्तपक्षे क्लिष्टतामनुभूय एकार्थतापक्षं प्रस्तौति इति विस्तरस्तु शाबरभाष्यतद्व्याख्याग्रन्थेषु द्रष्टव्यः । तथा च प्रमाणकथनं श्रौतमिति यत् भाट्टप्रस्थानं, तत् वैभवादनङ्गी-कुर्मः । तदाहुः मीमांसापादुकाकृतः

[6]"**धर्मश्चोद्दिश्यतेऽर्थात् स्वयमिह मुनिना तद्विचारार्थसूत्रे**
**लक्ष्मादृष्टेरचिन्त्यभ्रममिह नुदता चोदनासूत्रमूचे ।**
**तत्र त्वार्थं प्रमाणं तत इह न भवेत् वाक्यभेदप्रवृत्तिः**
**मानप्राधान्यपक्षान्तरमपि कतिचित् वैभवादाश्रयन्ति ॥"** इति ।

## शब्दस्य चोदकत्वासम्भवनिरूपणम्

चोदना नाम किम् ? उच्यते - वेद एव चोदना । शास्त्रं शास्तिः इत्यादिस्तु तत्पर्यायवाचकः । अत एव "शास्त्रयोनित्वात्" "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यादि ब्रह्मसूत्रे 'वेदात् शास्त्रं परं नास्ति' इत्यादि स्मृतौ च वेदस्यैव शास्त्रनाम्ना सङ्कीर्तनात् । चोदकस्तु 'श्रुतिस्मृतिर्ममैवाज्ञा' इति प्रमाणसिद्ध. श्रीमन्नारायण एव । लौकिकवाक्येषु प्रवर्तनपरेषु विधिषु प्रवर्तकनिष्ठं यथा चोदकत्वं तथा अलौकिकेषु विधिवाक्येष्वपि अयमत्र प्रवर्ततामित्याभिप्रायवान् कश्चन चेतन एव भवितुमर्हति, न तु अचेतनं वाक्यम् । अतस्स च चेतनः अस्मद्विलक्षणः परमपुरुष एवेति स्वीकर्तव्यं भवति । 'आचार्यचोदितः करोमी'ति शाबरवचनेनापि इदमेव प्रतीयते यत् आचार्यादिः चेतनः लोके प्रवर्तको भवति तद्वत् अलौकिके अस्मद्विलक्षणः सर्वनियमनशीलः परमात्मैव स इति ।

अपि च 'सन्ध्यामुपासीत' इत्यादिः आज्ञारूपः, 'स्वर्गकामो यजेत' इत्यादिरभ्यनुज्ञारूपः काम्यविधिः, 'नानृतं वदेत्' इति निषेधरूपो विधि इत्येवं रूपेण शासनभूतो वेदः बहुप्रकारो वर्तते । तत्र शासकत्वं तु अस्मदादीनामत्यन्तं दुर्घटमिति विश्वगोप्ता परमात्मैव शासक इति स्वीकार्यम् । तदाहुः

[7]'कश्चित् पित्रादिकल्पं प्रथयति पुरुषं चोदनाद्युक्तिरर्थात्
वाक्यादे श्चोदकत्वग्रहणमनुचितं शास्त्रसिद्धोज्झनं च।
त्याज्योपादेय वर्गत्यजनभजनविध्युन्मुखाज्ञाभ्यनुज्ञा -
किम्मीरो वेदराशिः किमिति न विदितः शासनं विश्वगोप्तुः ॥'

इति। तथा च ईश्वराज्ञैव चोदनेति सिद्ध्यति।

## ईश्वराज्ञायाः चोदनात्वसम्भवोपपादनम्

ननु ईश्वराज्ञायाः चोदनात्वकल्पनं न सङ्गच्छते, कुत इति च वेदस्यापौरुषेयत्वात्। यस्य यद्वाक्यप्रणेतृत्वं नास्ति, न त तद्वाक्यार्थविधातृत्वमपीति नियमात्। अतः ईश्वराज्ञा न चोदनेति चेदत्र ब्रूम वेदो नित्यः, पुरुषकृत्यजन्यश्चेत्यत्र नास्माकं विप्रतिपत्तिः। तथाऽपि [8]'धा यथापूर्वमकल्पयत्' इत्यादि निगमानुसारं परमात्मा पूर्वपूर्वकल्पानुसारं वेदं स्मृत जगत् सृजतीति एष्टव्यम्।

[9]"अनादि निधना ह्येषा वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ॥" इति।

[10]"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥"

इति च स्मृतिवचनमत्र प्रमाणं भवति। एवं श्रुतिरपि [11]'वेदेन रूपे व्याकरोत् सतासत प्रजापतिः' इति [12]'स भूरिति व्याहरत्। स भूमिमसृजत। स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत' इति च दृश्यते।

अत्रेदं वक्तव्यम् - भगवान् श्रीमन्नारायणः प्रलयस्य समाप्तिकाले जगत प्राक्तनानि रूपाणि स्मरन् [13]'बहुस्यां प्रजायेय' इति श्रुत्यनुसारं स्वस्य बहुभव संकल्प्य भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्ड हिरण्यगर्भपर्यन्तं यथापूर्वं सृजति। ततः पूर्वानुपूर्वी विशेषसंस्थितान् वेदान आविष्कृत्य हिरण्यगर्भाय उपदिशति। ततः यथापूर्वं देवाद्याकारजगत्सर्गे तं हिरण्यगर्भ परमात्मा नियोजयति। तदा स परमात्मा तदन्तर्यामित्वेन तिष्ठतीति वेद-वित्सम्प्रदायः। तथा च वेदस्य नित्यत्वं नाम प्रतिकल्पं समानरूपतया

उच्चार्यमाणत्वम् । एतदेव अपुप्रभवत्वरूपमपौरुषेयत्वमपि । तदेवम् अभाषत श्रीभाष्यकृतः [14]''एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च, यत् पूर्वपूर्वोच्चारण क्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणैव उच्चार्यमाणत्वम्'' इति । अस्य तु विचारः विशेषरूपेण वेदापौरुषेयत्वाधिकरणे करिष्यत इत्येतावदेवालम् ।

एवं वेदस्यापौरुषेयत्वेऽपि नित्यं श्रुतिद्वारैव स परमात्मा सर्वान् नियमयतीति नित्याऽपि श्रुतिस्तदाज्ञा भवति । श्रुत्यर्थोपदेशरूपत्वेन गीतादेः प्रवृत्तिदर्शनात् स्मृत्यादिरपि परमात्मनः आज्ञैव । अत एवोक्तं

**''श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।**
**आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ।।''**

एतदेव स्पष्टीकरोति । ''यः शास्त्र विधिमुत्सृज्य'' इत्यत्र 'शास्त्रं वेदा , विधि अनुशासनम्' इति गीताभाष्यवचनम् । अतस्सिद्धं परमात्मैव श्रौतार्थविधातेति ।

अपि च कर्मानुष्ठानं यथा सर्वत्र समानमेकरूपं च भवति तथैव ब्राह्मणवाक्यानामपि एकानुपूर्वीकत्वं सर्वदा तिष्ठति । मन्त्राणां कर्मानुष्ठानोपयोगात् आनुपूर्व्यैक्यं मन्त्राणामेव युक्तं, न तु ब्राह्मणानामिति न वक्तव्यम् । ब्राह्मणवाक्येष्वपि आनुपूर्व्यैक्यमवश्यमङ्गीकार्यम् । अन्यथा वेदस्य आनुपूर्वीभङ्गयोगात् जपपारायणाद्युपयोगिनः वेदस्य अनित्यतापत्तिः, व्यर्थतापत्ति । अर्थात् जपपारायणादिना अपेक्षितफलासम्भवापत्तिः । एतत्सर्वं मत्वैव श्रुतिः 'धाता यथा पूर्वमकल्पयत्' इति आनुपूर्वीक्रमस्य नित्यत्वं बोधयति । अत एव वेदस्य अध्यापनं परमात्मा कृतवानिति आचार्यत्वमेव तस्य [15]'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादि वचनं प्रदर्शयति । गीतादिषु तु कस्य कर्तृत्वं निराबाधमेव ।

शबरस्वामी तु निरीश्वरवादित्वात् अकामेनापि चोदनाशब्दार्थविचारे 'आचार्यचोदितः करोमीति हि दृश्यते' इतिनिर्दिशति । अनेन पुरुषाभिप्राय एव चोदना लौकिकवाक्य इति ज्ञायते । तद्वदेव अलौकिकेऽपि वेदे तदुपदेष्टुः परमात्मनः अभिप्रायविशेष एव चोदनेति स्वीकार्यम् । कथमेतत् निरीश्वरवादी अङ्गीकुर्यात्?

अत एवोक्तं सेश्वरमीमांसायाम् [16]'इति शाबरमुत्स्वप्नायितम्'

एतादृशोऽभिप्रायविशेषः परमात्मन. नित्यनैमित्तिक काम्यविधिभेदेषु वेदवाक्येषु कथं वर्तत इति व्यञ्जयति पराशरभट्टपादः -

[17]"**आज्ञा ते सनिमित्तनित्यविधयः स्वर्गादिकाम्यविधिः**
**सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः ।**
**सर्वीयस्यसमस्तशासितुरहो श्रीरङ्गराजस्य ते**
**रक्षाकूतनिवेदिनी श्रुतिरपि त्वन्नित्यशास्त्रिस्ततः ।।"**

इति । सर्वीयस्य - सर्वजनहितस्येत्यर्थः । अतस्सिद्धं चोदना भगवदाज्ञैवेति । तदिदमाह मीमांसापादुकाकारः

[18]"**नित्यत्वात् ईश्वराज्ञा न भवति निगमः पौरुषेयोन्यथा स्यात्**
**इत्येतत् क्षुद्रहृद्यं नियतनिजगिरा नित्यमाज्ञाप्रवृत्तेः ।**
**तन्त्रान्यायादमन्त्रेष्वपि विविधभिदां विश्वकर्ता विधित्सेत्**
**आचार्यत्वं च वेदेष्वगणि भगवतः कर्तृता चेतरेषु ।।"** इति ।

## प्राभाकरमतरीत्या एतदधिकरणप्रस्तावः

अत्राहुः प्राभाकराः - धर्मः वेदार्थः भवति । चोदनालक्षणपदेन कार्यमुच्यते । तथा च वेदार्थः कार्यरूपो भवति, न तु सिद्धरूप इति सिद्ध्यति । एवं सूत्रघटकम् अर्थपदम् अनर्थानुबन्धव्यावृत्तिबोधनपरम् । तथा च अनर्थानुबन्धिनः श्येनयागस्य व्यवच्छेदः अर्थपदेन क्रियत इति ज्ञायते । 'श्येनादयः नैव कर्तव्या' इति विधेयत्वनिराकरणेन निषेधविषयत्वं तस्य श्येनादेः अर्थपदेन बोध्यते । कथं तस्य विधेयत्वं निराक्रियत इति चेत् - उच्यते । लिङ् पदं स्वार्थस्य कर्तव्यतां बोधयति, न तु यागस्य कर्तव्यताम् । लिङर्थस्तु नियोगो भवति । तस्य कार्यमित्यपरं नामधेयम् । तस्य विषयः करणं च यागो भवति । स च नियोगार्थः कर्तव्यतात्मा अन्यथाऽनुपपत्त्या स्वविषयभूतस्य यागस्य कर्तव्यतां बोधयन् अनुष्ठापको भवति । श्येनादीनां तु काम्यत्वात् कामवशादेव प्रवृत्तिसिद्धे र्न नियोगस्तत्र अनुष्ठापकतां भजत इति न श्येनादीनां विधेयत्वं सम्भवति । विधेयतायां चासत्यां तेषां निषेधविषयत्वादनर्थत्वं सूपपादमिति तद्व्यावृत्तये सौत्रमर्थपदमावश्यकमिति ।

## उक्तप्राभाकरमतखण्डनम्

तदिदं प्राभाकरमतं न युक्तिसहं वर्तते। तथा हि- कार्यरूप एव वेदार्थ इति तु न समीचीनो वादः। सिद्धरूपे वस्तुन्यपि शक्तिग्रहसम्भवात् तस्यापि वेदार्थत्वं निराबाधमेव। सिद्धार्थे कथं व्युत्पत्तिस्सम्भवतीति चेद् - उच्यते - मात्रादिभिः अङ्गुल्यादिभिस्तत्तत्पदार्थनिर्देशपूर्वकं 'तव पिता अयमास्ते, तं पश्य, पितरम् आह्वय, पितरं प्रीणय' इत्येवं पित्रादि शब्दानुवृत्त्या पदान्तरावोपोद्वापाभ्यां च तत्तत्पदार्थनिर्देशेषु शनैश्शनैः बालस्य पित्रादिसिद्धार्थपरताबुद्धिरुदेति। अङ्गुल्या तत्तत्पदार्थ निर्देशपूर्वकं बहुशः तत्तच्छब्दप्रयोगात् अव्यभिचरितानुभवो जायते। तत एव पटुतरसंस्कारोऽपि जायते। अपि च अङ्गुल्या पदार्थनिर्देशपूर्वकं बहुशः प्रयुज्यमानस्य शब्दस्य एष महिमा यत् बालस्य स्वार्थप्रत्यायकत्वम्। बालकस्य अर्थज्ञानदर्शनादेव एतादृशसामर्थ्यकल्पना शब्दस्य स्वीक्रियते। एवं 'विकसितपद्मे मधुकरस्तिष्ठति' इत्यत्रापि सिद्धार्थे व्युत्पत्ति सम्भवात् कार्यार्थ एव शक्तिग्रह इति प्राभाकरपक्षो न युक्तः। अन्यथा सिद्दार्थपरस्य वेदान्तभागस्य अनर्थतापत्तिप्रसङ्गः। न चेष्टापत्तिः, 'स्वाध्यायोऽध्येतव्य' इत्यत्र सम्पूर्णस्यैव वेदस्य सार्थकत्वं प्रोक्तं, न त्वेकदेशस्येति स्वीकारात्। अतः वेदस्य कृत्स्नस्यापि स्वार्थे तात्पर्यमस्तीति वेदवित्संप्रदायं वेदशक्तिं वा निरुद्ध्य यत् प्राभाकरैरुच्यते तदस्माभिरपाकरणीयमिति मीमांसापादुकाकृतः प्राहुः —

[19]"**वेदार्थः कार्यरूपस्त्विति जगति मिथः कश्चिदाचष्ट धाष्ट्र्यात्**
**विध्युद्देशांशमात्रे तदलमिहयतो वक्ष्यते सिद्धभागः।**
**शक्तिं संरुद्ध्य शाब्दीं श्रुतिमुनिवचसोच्छन्दवृत्तिं विरुद्ध्य**
**व्रीडानाघ्रातचित्तो वितथमिति वदन् वैदिकैरुज्झनीयः॥**" इति।

अपि च वेदार्थः कार्यरूप इति द्वितीयसूत्रे प्रतिपादितमिति हि भवन्मतम्। तत्रेत्थ विकल्प्य दूषणं विधीयते - यत् कार्यं तद् वेदार्थ एवेति कार्यमुद्दिश्य वेदार्थताया विधानम्? उत यो वेदार्थः स कार्यरूप एवेति वेदार्थत्वमुद्दिश्य कार्यस्य विधानमिति। नाद्यः पक्षः, अव्याप्तिदोषग्रस्तत्वात्। गवानयनादिकार्येऽपि कार्यत्वस्य विद्यमानत्वात् तत्र वेदार्थत्वं दुरुपपादमिति व्याप्तिविरहेण अव्याप्ति-प्रसङ्गः। किं

च उपादेयभूतस्य वेदार्थस्योद्देश्येन कार्यरूपेण अव्यापनात् अकार्येऽपि वेदस्य प्रामाण्यमुक्तं स्यात् । यथा अग्नेरिव धूमेनाव्याप्तेः । न च द्वितीयः पक्षः, अतिव्याप्तिप्रसक्ते. । तथा हि स्वर्गादौ किं बहुना ब्रह्मण्यपि वेदार्थत्वस्य विद्यमानत्वेऽपि कार्यत्वस्याभावात् । अपि च यो वेदार्थः स कार्यरूपएवेत्यत्र यो धर्म· स चोदनालक्षण इत्युक्तो भवति । तत्र अर्थशब्दस्य अभ्युदयवाचित्वं स्वीक्रियते । अर्थ शब्द. किमुपादेयभूतस्य चोदनालक्षणपदार्थस्य विशेषणम्, उत उद्देश्यभूतस्य वेदार्थस्य विशेषणमिति वक्तव्यम् । नाद्यः पक्षः, तथा सति सर्वस्यापि वेदार्थस्य कार्यत्वम् अर्थत्वं च विधीयत इति श्येनादि नियोगानामप्यर्थत्वापत्तिः । अर्थात् श्येनयागोऽपि अभ्युदयकारी भवेदिति । नापि द्वितीयः पक्षः, योऽर्थात्मकोऽभ्युदयस्वरूपो वेदार्थ· स कार्यरूप इत्युक्तं भवति तदा । तथा सति अनभ्युदयकारिणां अनिषिद्धफलभाजां श्येनादि नियोगानां कार्यत्वं न सम्भवति । न चेष्टापत्तिः, तेषामपि लिङा कार्यता प्रतीतेः । श्येनयागस्य कार्यता निवारयितुं शक्यते, न नियोगस्येति प्रागवोचाम । नियोगस्तु कार्यैकस्वभाव इति हि भवत्सिद्धान्तः । अतः प्राभाकरमतवर्णनमत्र न युक्तमिति सिद्धम् ।

तदिदमाहुः श्रीमद्वेदान्तदेशिकाचार्याः -

> [20]"**यत् कार्यं तद्धि सर्वं निगमविषय इत्येतदव्याप्तिदुःस्थं**
> **यो वेदार्थः स कार्यात्मक इति च तथा तत्र तत्रातिचारात् ।**
> **उद्देश्यादे र्विभागे बहुरिह विहति र्दर्शिता वाक्यविद्भिः**
> **किं चास्मिन् अर्थशब्दत्यजनभजनयोः स्यादयुक्तिः विचित्रा ॥"**

इति । एतादृशं प्राभाकरमतखण्डनं सेश्वरमीमांसाशास्त्रदीपिकादिग्रन्थेषु बहु कृतं, तथापि विस्तरभिया नात्र प्रतन्यते ।

अपि च अर्थ एव धर्मः, नानर्थ इति कथनमेव सूत्रस्य तात्पर्यमिति न वक्तुं शक्यते । तत्तु स्पष्टत्वात् सूत्रं किमपि नूतनं नाभिदधाति । न च चोदनैव कार्ये प्रमाणं भवति, नान्यदिति सूत्रं कथयतीति सूत्रस्यसार्थक्यसम्भव इति वाच्यम्, तत्तु [21]'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' इति प्रत्यक्ष सूत्रादेवावगतमिति तत्कथनमत्र व्यर्थतां सेत्स्यति । न च कार्ये एव चोदना प्रमाणम्, न तु सिद्ध इत्यर्थवर्णनमत्र कार्यमिति

वाच्यम्, सिद्धेऽपि बोधसम्भवप्रकारोऽस्माभिः प्रदर्शितत्वात् । उत्तरमीमांसायाः निरर्थकतापत्तिश्च । अत. धर्मस्वरूपलक्षणपरमिदं सूत्रं प्रवर्तते, तत्र प्रमाणप्रदर्शनमार्थमिति अस्मदुक्तपक्ष एव साधीयानिति सिद्ध्यति । तदुक्त मीमांसापादुकायां

[22]"**निष्कृष्टं चोदनार्थं यदि नियमयति स्पष्टमेतन्न पाठ्यं**
**तस्मात् धर्मस्वरूपप्रभृतिकथनतः सार्थकं सूत्रमेतत् ।**
**प्रामाण्यं कार्यशेषं प्रथयति यदि तत् प्रापितार्थं परस्तात्**
**अप्रामाण्यं तु सिद्धे वदति यदि, तदप्युत्तरत्रोपरोध्यम् ।।**" इति।

## शाबरवचनस्य निर्दोषताप्रदर्शनम्

एवं धर्मलक्षणपरत्वं द्वितीयसूत्रस्य स्वीकृतम् । तत्र सूत्रव्याख्यानावसरे 'चोदनेति क्रियायाः प्रवर्तकं वचनमि'ति शबरस्वामी प्राह। तदिदं वाक्यं प्रवर्तकत्व चोदनायाः लक्षणमिति बोधयति। एतल्लक्षणं निर्दुष्टं भवति। न च गामानयेत्यादि लौकिक वाक्येऽपि प्रवर्तकत्वसम्भवात् लक्षणमिदमतिव्याप्तमिति वाच्यम्, वेदबोधितेष्टसाधनताकत्वमेव तल्लक्षणमिति स्वीकारात् लौकिकवाक्येषु वेदप्रतिपाद्यत्वं नास्तीति नातिव्याप्तिप्रसङ्ग· । एवम् अर्थवादादिवेदगमितत्वात् स्मार्तेष्वपि धर्मेषु एतल्लक्षणं सङ्गच्छत इति निर्दुष्टं धर्मलक्षणमिति सिद्धम्। तदिदमाह मीमांसापादुकाकारः -

[23]"**व्याकुर्वन्ति क्रियाप्रेरकमिह वचनं चोदनाद्युक्तिवेद्यं**
**तस्यानाम्नायसाम्यात् नियतमिदमतिव्यापि धर्मस्य लक्ष्म ।**
**मैवं वेदत्वयोगे सति खलु पुरुषप्रेरकं वाक्यमेतत्**
**वेदोक्तार्थे तु धर्मे कथय कथमतिव्याप्तिरव्यापनं वा ।।**"

इति।

## प्राभाकरोक्तस्य अर्थशब्दकृत्यस्य खण्डनम्
## तत्र स्वमताविष्करणं च

यदपि श्येनयागव्यावर्तनपरमर्थपदमिति गुरुमतम्, तदपि निराकर्तव्यम्। तथा हि - श्येनादि र्न च अभिचारशब्दार्थो भवति । अभिचारो हि मारणं हिंसा । श्येनयागस्तु तथा न। अभिचारस्तु फलं भवति। श्येनयागस्तु तत्साधनं भवति। न

च फलद्वारा श्येनयागनिषेधो भवत्विति वाच्यम्, फलस्य निषिद्ध्यमानत्वेऽपि श्येनयागस्वरूपस्य विहितत्वात् अव्याहतं तस्य धर्मत्वं सिद्ध्यति। अतोऽर्थपदं न श्येनव्यावर्तनपरम्, अपि तु निषिद्धहिंसादिव्यवच्छेदपरम्। निषिद्धानां चोदनालक्षणत्वं वर्तत एव। निषेध चोदनाया अनर्थसाधनत्वेन लक्षितत्वात्। न च निषिध्यमानस्य अनर्थसाधनतामन्तरेण निषेधचोदना प्रवर्तेत। अतः श्येनादिष्वपि फलमात्रं व्यवच्छिद्यते। तस्मात् अर्थपदं फलसाधनबोधनपरं भवति। अर्थ्यत इति हि अर्थः। अपेक्षाविषयत्वमेव तदर्थः, न तु द्वेषविषयत्वम्। यद्वा - "ऋ गतौ" इति धातोः थन् प्रत्यये कृते अर्थशब्दो निष्पद्यते। अर्थते प्राप्यते इत्यर्थः। धर्मस्यैव प्राप्यत्वं युक्तं, न तु अधर्मस्येति तद्वारणमत्र विवक्षितमिति युक्तम्। अथवा अभिमतफलनिष्पादकत्वमेव अर्थ्यत्वम्। तथा च वेदबोधितत्वे सति अभिमतफलसाधनताकत्वमिति धर्मलक्षणसिद्धिः भवति। एतदेव सुनिपुणं प्रादर्शि मीमांसापादुकायां -

**[24]"धर्मोऽधर्मश्च लक्ष्यौ समुपनिपतितश्चोदनालक्षणोक्त्या**
**तत्राधर्माद्विभागं प्रकटयितुमसौ अर्थशब्दः प्रयुक्तः।**
**अर्थ्यत्वादर्थभावात् अभिमतफलनिष्पादकत्वाच्च तस्मिन्**
**अर्थत्वं भाति केचिद्विदुरभिचरणाक्षेपकं त्वर्थ शब्दम्॥"** इति।

अपि च 'अग्नीषोमीयं पशुमालभेत' इत्यत्र प्रतीतायाः यागपशुहिंसायाः पशुमरणानुकूलव्यापाररूपत्वेऽपि अत्यन्तहितत्वेन शास्त्राभिमतत्वं सुसङ्गतं भवति। अधिकसुखोदर्कभिन्नो वेदनाजनकव्यापार एव हिंसा शब्दार्थो भवति। अत एवाहुः श्रीभाष्यकृतः [25]"अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, अपि तु रक्षणमेव" इति। अत एवाह श्रुतिरपि [26]'न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिस्सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृतः तत्रत्वा देवस्सविता दधातु"। एतादृशं हिंसात्वं विहितहिंसायामेव (अग्नीषोमीयादावेव) वर्तते। श्येनजन्याभिचारे तु विहितत्वं हिततमत्वं चेकित्सोपमत्वं च नास्तीति अभिचारकर्मणा पापप्राप्तिरेवेति तद्वारणाय अर्थशब्दप्रयोगस्सार्थको भवतीति वक्तव्यमिति मीमांसापादुकायां प्रपञ्चितमेवं -

**[27]"न भ्रातृव्यस्य हिंसा मरणमभिमतं मारणं श्येनपूर्वं**
**तच्चाभीष्टाभ्युपायः श्रुतिविहित इति क्वार्थशब्दोऽत्र सार्थः।**

**सत्यं हिंसा पशूनां सुहिततममतः सा चिकित्सोपमा स्यात्**
**नैवं शत्रोरतस्तद्धननिरसने सार्थको ह्यर्थशब्दः ॥''** इति।

## बौद्धधर्मादेरग्रहणत्वकथनम्

एवं वेदबोधितेष्टसाधनताकत्वं, वेदबोधितालौकिक श्रेयस्साधनताकत्वमेव वा धर्मलक्षणं भवतीति निरूपणात् बौद्धोद्युक्ताहिंसासत्यवदनादिकं न धर्मपदवाच्य भवितुमर्हतीति प्रतीम. । तथा हि - तदुक्तस्य अहिंसादेः श्रेयस्साधनत्वं दुरुपपादम् । प्रत्यक्षानुमानातिरिक्तम् अलौकिकतत्त्वावेदकं वेदाख्यं शास्त्रं प्रमाणत्वेन तैरस्वीकारात् इदं सत्यवदनादिलौकिक श्रेयस्साधनमिति श्रेयस्साधनताज्ञानं तेषामनुदयात् । अत एव स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिसिद्ध-ज्ञानबोधितश्रेयस्साधनाताकत्वमेव धर्मलक्षणं नान्यदिति नियमोऽप्यत्र विवक्षितो ज्ञेयः । अतस्सिद्धं बौद्धाद्युक्ताहिंसादीनां वेदबोधितश्रेयः साधनताकत्वविरहात् उपादेयताबुद्धि र्न कार्येति । तदिदं

[28]**''यश्चाहिंसादि धर्मः श्रुतिभिरभिहितः सोऽपि ताभिः प्रतीतः**
**स्यात् धर्मो बाह्यतन्त्रैस्तदवगतिरवस्थाप्यते निष्फलेति ।**
**स्वाध्यायाधीति सिद्धग्रहणफलधिया धर्मसिद्धिर्नियम्या**
**तस्मात् बौद्धागमाद्यैरिह तदवगति र्गोपनिर्मन्थ्यवत् स्यात् ॥''**

इति गोपनिर्मन्थ्योदाहरणपुरस्सरं प्रदर्शितं मीमांसापादुकायाम्। गोपकृतः मथिताग्नि. न वैदिककर्मणे कल्पते । अथवा निर्मन्थ्यं नाम तक्रम् । गोपात् दधिक्रयणे न शास्त्रविरोधो दृश्यते, परं तु तक्रक्रयणं तु निषिद्धं भवति। तद्वदेव बौद्धाद्युक्तो धर्म· न श्रुतिमूल इति सर्वथा स अनुपादेय एवेति परमस्सिद्धान्तः ।

## सूत्रात् प्रतिज्ञाद्वयलाभप्रदर्शनम्

सूत्रेऽस्मिन् चोदनालक्षण इति पदमेकं विद्यते। चोदनैव लक्षणं प्रमाणमिति, चोदनालक्षणमेव प्रमाणमेवेति समासद्वयेन प्रतिज्ञाद्वयलाभः अर्थात् प्राप्यते । तत्र प्रथमा प्रतिज्ञा चोदनैव धर्मे प्रमाणमिति; सा प्रत्यक्षसूत्रे समर्थयिष्यते । द्वितीया चोदना प्रमाणमेवेति, सा औत्पत्तिक सूत्रादौ स्थापयिष्यत इति ज्ञेयम्। न चैवं सति सूत्रमिदं पूर्वोक्तप्रतिज्ञामात्रपरमिति प्राभाकरमतं कथं युक्तं न स्यादिति वाच्यम्,

न्यायनिबन्धनात्मके शास्त्रेऽस्मिन् अङ्गपञ्चकसम्पत्तिपूर्वकं प्रत्यधिकरणं नेयम् अन्यथा शास्त्रस्य न्यायनिबन्धनताविरहेण पृथगधिकरणत्वकल्पनं व्यर्थं भवेत् ।

एवं धर्मलक्षणाधिकरणविचार. श्रीमद्वेदान्तदेशिकपादैः प्रस्तुतः । सौत्रपदाना चतुर्णामपि अर्थाः श्लोकरूपेण सेश्वरमीमांसायां समग्राहिषत । यथा -

**[29]''सूचितश्चोदकः कश्चिच्चोदनापदसूत्रणात् ।**
**यदभिप्रायभेदेन धर्माधर्मौ फलिष्यतः ।।**
**प्रमाणे लक्षणपदं प्रयुञ्जानेन सूचितम् ।**
**विशेषणमुपादाय लक्षणं च तदेव नः ।।**
**अर्थसाधन मात्रार्थशब्देन प्रतिपादयन् ।**
**फलतुल्यमुपायं च नैश्श्रेयसमसूचयत् ।।**
**चतुर्वर्ग फलोपाय विषयैश्चान्यदीदृशम् ।**
**धृति साधनशब्देन मोक्षेऽपि प्रीतिमक्षताम् ।।''** इति ।



## पादटिप्पणी

1. श्लो वा. चोदनासूत्रम् - 1& 2
2 श्लो. वा. चोदनासूत्रम् - 3
3. शाबरभाष्यम् 1-1-2
4. शाबरभाष्यम् 1-1-2
5. शाबरभाष्यम् 1-1-2
6. मी.पा. 81
7. मी.पा. 82
8 तै उ 2-1-9
9. मनुस्मृति. 1-11
10 मनुस्मृति
11 तै ब्रा 2-1-2-7
12 तै. ब्रा. 2-2-4-22
13 छ. उ 6-2-3
14 श्रीभाष्यम् 1-3-26
15 श्वेताश्वतरोपनिषद् 6-18
16. सेश्वरमीमांसा 1-1-2
17. श्रीरङ्गराजस्तवः 2-24
18. मी.पा 83
19 मी.पा 84
20 मी.पा. 85
21. पू. मी. 1-1-4
22. मी. पा 86
23 मी.पा 87
24. मी.पा 89
25. श्रीभाष्यम् 3-1-25
26. तै सं. 2-6-9-46
27 मी पा. 90
28 मी पा. 88
29 से.मी 1-1-2



# ४. धर्मे प्रामाण्यपरीक्षाधिकरणविचारः

## तस्य निमित्तपरीष्टिः - 1-1-3

**प्रस्तावना** - पूर्वस्मिन् सूत्रे धर्मस्य ज्ञानं चोदनानिमित्तकमिति प्रोक्तम्। तच्च केवलं तत्र प्रतिज्ञातुं, न युक्तिभिस्साधितमिति प्रतिज्ञातस्य धर्मज्ञानस्य निमित्तभूतस्य चोदनाख्यस्य वेदस्य परीक्षां साम्प्रतं करोति सूत्रकारः तस्य निमित्तपरीष्टिरिति। न च [1]'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येव जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत् किं च, नेन्द्रियम्' इति शाबरभाष्ये युक्तिरपि प्रदर्शितेति पुनस्तत्र सूत्रप्रवृत्तिः पुनरुक्तितां भजत इति वाच्यम्, भाष्यकारेणैव सा प्रदर्शिता न सूत्रकारेणेति सूत्रकाराभिमतेन प्रतिज्ञामात्रोक्त्यविरोधः। तथा च अस्मिन् सूत्रे धर्मस्य निमित्तं प्रमाणं यत् चोदनारूपं तत्परीक्षणं क्रियते। वक्ष्यमाणसूत्रेषु चोदनैव प्रमाणं धर्मे, चोदना प्रमाणमेवेत्यादि परीक्षणं क्रियत इति तस्य इदमधिकरणमुपोद्घातरूपं भवतीति उपोद्घातसङ्गतिरत्र विवक्ष्यते। [2]'अथातश्शेषलक्षणम्' [3]'अथ क्रत्वर्थपुरुषार्थयोर्मीमांसा' इत्यादिसूत्रं यथा प्रतिज्ञापरमध्यायस्य भवति, तद्वदेवेदम् अध्यायस्य प्रथमस्य प्रतिज्ञापरमिति ज्ञेयम्।

किं च स्वरूपप्रमाणयोः स्वरूपं प्रमाणमुखेनैव अन्वेष्टव्यम्। तदर्थमिदमधिकरणं प्रवृत्तमिति प्रतीमः। एतत्सूत्रं अध्यायार्थविभजनपर भवति। अत्र वक्ष्यमाणार्थस्य प्रतिज्ञा क्रियते। अन्यथा प्रत्यक्षसूत्रे औत्पत्तिकादि सूत्रैश्च कस्य विषयस्य साधनं युक्तिभिः क्रियत इति न ज्ञायेत। न केवलमिदं सूत्रं प्रतिज्ञापरमिति मन्तव्यम्। तथा सति अधिकरणसमुदायात्मकस्य अस्य शास्त्रस्य प्रवृत्तिरेवानुदियादिति अधिकरणमिदं प्रार्थक्येन वक्तुं न शक्येत। अत न्यायपञ्चक-सम्प्रत्तिपूर्वकमधिकरणमत्रापि युज्यत इति ज्ञेयम्।

## अधिकरणविचारः

अधिकरणविचारस्तु इत्थं प्रवर्तते - यथा - धर्मे प्रमाणं परीक्षणीयं वा उत स्वरूपमेवेति संशय । तत्र विचार्यते किं प्रमाणनिरूपणमन्तरा धर्मस्वरूपनिरूपणं युज्यते वा न वेति।

तत्रायं पूवः पक्ष. - प्रमाणनिरूपणमन्तरा स्वरूपनिरूपणं भवितुमर्हति। न च सर्वे जनाः प्रथमं प्रमाणं निरूप्य वस्तुस्वरूपमवगच्छन्ति। अत एव मधुराम्लकुटकषायतिक्तलवणादिरसभेदं, शुक्लनीलपीतादिरूपभेदे, शीतोष्णादिस्पर्शभेदे च तदुपलम्भकप्रत्यक्षनिरूपणमन्तरा अवगम्य तत्तदर्थग्रहणे जनाः प्रवर्तन्ते । तद्वदेवात्रापि शब्दान्तराभ्यासश्रुतिलिङ्गादिभिः भेदशेषशेषिभावादिनिरूपणमुखेन धर्मस्वरूपमेवानुष्ठानार्थं निरूपणीयम्। अत· प्रमाणपरीक्षणं व्यर्थमितिसिद्धम्।

अत्रैवं समाधिः - तस्य परीष्टिरिति। धर्मस्य प्रमाणपरीक्षणं कार्यमिति तदर्थः। अलौकिकार्थत्वात् धर्मस्य प्रमाणपरीक्षणं युक्तमेव। मधुराम्लादिभेदस्तु लौकिकार्थ इति वैषम्यं अत्र प्रतीयते। अन्यथा बौद्धोक्तस्य धर्मस्य वेदप्रतिपादितस्य धर्मस्य च साम्यापत्त्या बौद्धोक्तधर्मग्रहणे अनुपपत्तिविरहप्रसङ्गः स्यात्। ज्योतिष्टोमादेः, बौद्धस्य चैत्यवन्दनादेश्च विद्यमानं अलौकिकं विभागं परीक्षणं विना सम्भवति। तत्परीक्षणेनैव वेदोक्तधर्मं एवोपादेयःनेतर इतिनिर्धारयति प्रेक्षावान् पुरुषः। प्रमाणविचारमकृत्वा यदि अलौकिकार्थे प्रवर्तेत, तर्हि स अन्धवत् अनर्थे पतेत्, अपेक्षितमर्थं च न विन्देत। अतो वेदस्यैव धर्मे प्रामाण्यम् निश्चित्य तदर्थस्यैव धर्मत्वे अवधारिते सति तद्भेदाभेदतदाराध्यादि विचारस्य अवकाशो भवति। अपि च विंशतिलक्षण्याम् आद्वितीयाध्यायम् आसमाप्ति निरूप्यमाणं कर्मदेवताब्रह्मतदनुबन्धिभेदभिन्नं सर्वमपि प्रमाणेनैव निरूपणीयत्वात् प्रमाणलक्षणमेव प्रथमं प्रवर्तत इति युक्तं प्रमाणपरीक्षणमिति। मानाधीना हि मेयसिद्धिः।

न चैवं शङ्क्यमधीतस्वाध्यायानां वेदप्रामाण्ये सन्देहस्यैवासम्भवात् प्रामाण्यपरीक्षा न युक्तेति। धर्मे वेदो यथा प्रमाणं तथा अनुमानादिकमपि इति

केचन मन्यन्ते। एवं किमपि तत्र प्रमाणं नास्तीति धर्म एव मास्तु इति चार्वाकप्रभृतयः प्रतिपद्यन्ते। धर्मे वेदः, अनुमानं च प्रमाणमिति केचन कथयन्ति। एवं च सति अधीतस्वाध्यायस्य मनः सन्देहडोलायामेव विहर्तुमधिरोहति, न निश्चितं तत्त्वं किंचिदवधारयति। अतस्तच्चञ्चलमतिवारणार्थमेव सूत्रमिदमपेक्षितमित्येष्टव्यम्। तदिदं सर्वं मीमांसापादुकायामेवं प्रपञ्चितम् -

**[4]"धर्मे वेदः प्रमाणं तदितरदपि वा नोभयं वोभयं वे-**
**त्येवं सन्देहडोलाविहरणाविहितानेकदिक्प्रसक्तान्।**
**जिज्ञासून् वेद एवेत्यवधृति नियतावस्थितीन् कल्पयिष्यन्**
**चक्रे सूत्रं तृतीयं चटुलमतिदशावारणारम्भणार्थम्॥"** इति।

**[5]"अत्रायोगान्ययोगौ प्रशमयितुमियं चोदनामानतोक्तिः**
**सत्सूत्रादौ स्फुटं तत् समसनविषयक्षेपणीयक्रमेण।**
**अध्यायस्थाप्यसिद्ध्यै प्रथममभिदधे तन्निमित्ते परीष्टिः**
**कर्तव्या नेति वा स्यादिह विनिगमना सूत्रकृत्काकुभेदात्॥"**

इति च।

## निमित्तमपरीक्ष्यमिति उपवर्षकारमतनिरूपणम् - तद्विमर्शश्च

अत्राह वृत्तिकारः उपवर्षः - निमित्तपरीक्षणं न कार्यमिति। नञ अध्याहार सूत्रे कार्यः। कुत इति चेत् - वेदस्य अपुम्प्रभवत्वात् तत्प्रामाण्यस्य निराकरणं न कोऽपि कर्तुं क्षमत इति प्रमाणपरीक्षणं व्यर्थम्। अपि च प्रमाणपरीक्षणं येन ज्ञानेन (प्रमाणेन) क्रियते, तस्यापि प्रामाण्यं स्थापनीयं भवतीति अनवस्थादोषप्रसङ्गः। अतः धर्मज्ञानस्य प्रमाणं यत् भवति तस्य परीक्षा न कार्येति सिद्ध्यति। एवं निरूपणार्थं सूत्रे नञः अध्याहारः कार्यः।

तदिदं कथनमापातरमणीयं भवति। धर्मप्रमाणविषये बहुभिः वादिभिः बहुधा निरूपणात् धर्मजिज्ञासोः सन्देहाक्रान्तत्वेन भ्रमज्ञानोदयप्रसङ्गः। तदपाकरणार्थं प्रमाणस्य प्रसिद्धत्वेऽपि परीक्षणं युक्तमेव। प्रमाणपरीक्षायां सत्यामनवस्थादोषोऽपि न सम्भवति। यत. सन्देहे सति परीक्षायाः प्रवृत्तिरिति नियमात्। उत्तरोत्तरेषु च सन्देह नियमानभ्युपगमात्। यावदाशङ्कमेव च तर्कप्रवृत्तिर्दर्शनात्। आशङ्का तु

व्याघातावधिका भवति। तदिदमुक्तं न्यायकुसुमाञ्जलौ [6]"व्याघातावधिराशङ्का तर्कश्शङ्कावधिर्मत" इति। अत नञ अध्याहारं कृत्वा यत् सूत्रार्थनयनमुपवर्षस्य, तत् पूर्वपक्षमतमन्वारुह्य उक्तमिति ध्येयम्। तदिदमुक्तं मीमांसापादुकायाम् -

[7]"**मानं धर्मे न चिन्त्यं दुरपलपतयेत्युत्थितस्याऽऽस्तिकस्य**
**प्रज्ञाचोरप्रसूत भ्रमपरिहृतये चिन्त्यमित्युत्तरं स्यात्।**
**चिन्त्ये याऽस्मिन् प्रयुक्ते प्रथनकथनतस्तत्परीष्टि र्निषेध्या**
**छेकोक्तिः साऽपि यस्मादकरणमिषतस्तत्परीष्टिं करोति॥"** इति।

## तस्येति सौत्रपदनिवेशप्रयोजननिरूपणम्

तस्येति पदं किमर्थं निवेशितं सूत्रे इति चेदत्र विचार्यते - तस्येति पदं नास्ति चेत् प्रमाणपरीक्षा कार्येति लभ्यते। सामान्यतः प्रमाणमेव लोकेऽस्ति वा न वेति परीक्षा स्यादिति लभ्यते। तत्तु न युज्यते, स्वोक्तिबाधादिदोषप्रसङ्गः। प्रमाणं नेति यत् पूर्वपक्षकथनं, तत्र प्रामाण्यस्वीकारे सामान्येन निषेधस्तु न सम्भवति। प्रामाण्यस्वीकारे तु पूर्वपक्ष एव अनुदयात्। अपि च स्वपरनिर्वाहकस्य प्रमाणस्य कस्यचित् सम्भवात् अनवस्थादिदोषोऽपि तत्र न सम्भवति। अतः सामान्येन प्रमाणपरीक्षणस्य अवसरो न सम्भवतीति धर्मस्य प्रमाणपरीक्षणं कार्यमिति। विवक्षया सूत्रकारः तस्येतिपदं सूत्रे निविवेश। वेदप्रामाण्यनिश्चये सत्यपि तत्परीक्षणं तु स्थूणानिखनन्यायेन स्थापनायेति मन्तव्यम्। अन्यथा प्रामाणिकानां सन्मार्गप्रवृत्तानां पादपश्चाद्भागं गृह्णन् उपरिसञ्चारं नास्तिको निरुन्ध्यात् इति मीमांसापादुकायां प्रोक्तम्। यथा -

[8]"**सामान्यात् न प्रमाणं क्षमममपलपितुं स्वोक्तिबाधादिदोषात्**
**तत्सिद्धिश्च प्रमाणात् स्वपरघटनतो नानवस्थाद्यतः स्यात्।**
**धर्मे ज्ञानं तु चिन्त्यं प्रथितमपि बहिर्वादसंक्षोभशान्त्यै**
**नो चेन्नास्तिक्यनिष्ठैः प्रमितिपथजुषामत्र पार्ष्णिग्रहः स्यात्॥"** इति।

## निमित्तपदार्थविचारः

अत्रैवं निमित्तपदार्थ विचार्यते। निमित्तं नाम प्रमाणमिति अत्र कथ्यते। न च निमित्तं नाम हेतुरिति धर्मस्य हेतु कारणं वा कर्मानुष्ठातैव भवति,

तन्निष्पादकत्वादिति वेदः धर्मस्य कारणं भवितु नार्हतीति वेद. धर्मे निमित्तं नेति वाच्यम्, स्वाध्यायाध्ययन जन्यधर्मज्ञानपूर्वकमेव सर्वोऽपि कर्मानुष्ठानं करोति । तथा च वेदजन्यज्ञानजन्येच्छा जन्यकृतिजन्यत्वेन धर्मस्य वेदनिमित्तकता निराबाधेति प्रत्येतव्यम् । एवमेव शास्त्रयोनित्वादित्यत्र योनिशब्दार्थोऽपि नेय ।

अपि च प्रथमाध्याये पादचतुष्टयेऽपि विध्यर्थवादमन्त्रस्मृत्याचार नामधेय वाक्यशेषसामर्थ्यानामेतेषा धर्मे प्रामाण्यं निरूपितम् । प्रामाण्यं नाम प्रमाणस्य भावः । प्रमाकरणं हि प्रमाणम् । अतः प्रमाणमेव निमित्तपदवाच्यमिति स्वीकर्तव्यम् । तथा चैतादृशः प्रयोगः लाक्षणिकस्सन्नपि प्राशस्त्यमावहति । वेद एव धर्मस्य मूलं भवति प्रसिद्धिं द्योतयति एतादृशः प्रयोगः । अत एवोक्तं मीमांसापादुकाकारैः -

[9]"**वेदो धर्मे निमित्तं स्वयमपि भविता तद्विधानात् तथापि**
**प्रामाण्यं हि प्रसाध्यं प्रथमसमुदिते लक्षणे पादभेदैः ।**
**तस्मात् धर्मप्रमायां करणमिति धिया तन्निमित्तत्वमुक्तं**
**भक्त्या चोक्तिः प्रशस्तिं प्रथयति महतीं मुख्यभावानुरूपाम् ।।"**

इति ।

## परीष्टिपदनिष्पत्तिप्रकारः

परीष्टि र्नाम परीक्षा । 'इषु गतौ' इत्यस्मात् धातोः अनिच्छार्थस्येति युचि विहिते [10]'परे र्वे' ति क्तिन्युचोः विकल्पस्मरणात् युचः विधौ पर्येषणेति रूपं, क्तिनः विधाने तु परीष्टिरिति रूपं सिद्ध्यति ।

एतदधिकरणविचारः सेश्वरमीमांसायां पद्यरूपेण समग्राहि - यथा -

[11]"**सर्वस्समञ्जसोऽर्थः स्यात् प्रमाणे परिशोधिते ।**
**अतः प्रमाणवृत्तान्त परिचिन्तनमर्थवत् ।।**

**धर्मप्रमाणचिन्तेति सामान्येनाभिधानतः ।**
**मन्त्रार्थवादस्मृत्यादि चिन्ताऽप्यन्तर्भविष्यति ।।**

**निषेधचोदनारूप धर्ममानस्य चिन्तने ।**
**निषेध्याधर्ममानस्य चिन्ताऽप्यन्तर्गतैव हि ।।**

ननु स्वरूपविश्रान्त ब्रह्मवाक्येषु केषुचित् ।
न धर्ममानता; तेषामिह न स्याद्विचिन्तनम् ।।

मैवम्; वेदार्थमात्रस्य जिज्ञासाप्रक्रमादिह ।
कृत्स्नवेदप्रमाणत्वमुपक्षेप्तव्यमादितः ।।

अतो धर्मप्रमाणस्य वक्तृदोषाद्यभावतः ।
मानत्वे ब्रह्मवाक्येऽपि सामान्यान्मानता स्थिता ।।

स्वरूपमात्रविश्रान्ति र्वाच्या शारीरके परम् ।
तदनुक्तावपि ह्यत्र प्रामाण्यं साधयिष्यते ।।

तावता विधिशेषत्व - स्वरूपातत्परत्वतः ।
उत्थानमाप्यते पश्चात् ; न तु मानत्वसाधनम् ।।" इति ।



## पादटिप्पणी

1. शाबरभाष्यम् 1-1-2
2 पू.मी. 3-1-1
3. पू.मी 4-1-1
4. मी.पा. 91
5. मी.पा 92
6. न्या.कु. 3-7
7. मी पा 93
8. मी.पा. 94
9. मी.पा. 95
10 वार्तिकम् पृ. 575
11. से.मी. 1-1-3



## ५. प्रत्यक्षादेर्धर्माप्रमाणत्वाधिकरणविचारः

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भनत्वात् - 1-1-4.**

### भाट्टमतेन पूर्वोत्तरपक्षवर्णनम्

अत्राहु र्भाट्टमतानुसारिणः - धर्मं प्रति किं निमित्तं भवतीति परीक्षणमवश्यं कार्यमिति पूर्वस्मिन्नधिकरणे प्राराधि। साम्प्रतं धर्मं प्रति किं चोदनैव निमित्तम् उत प्रत्यक्षानुमानादि प्रमाणान्तरमपि वेति विचार्य प्रत्यक्षादीनां धर्मं प्रत्यनिमित्तत्वं प्रसाध्यते। एतेन धर्मं प्रति चोदनैव प्रमाणमिति सिद्धान्तम् अस्वीकृत्य प्रत्यक्षादीनामपि प्रामाण्यसत्त्वात् कथं तेषामनिमित्तत्वं स्वीकार्यमित्याक्षेपप्रसक्त्या आक्षेपसङ्गतिः पूर्वाधिकरणेन साकं निरूपिता भवति।

अत्र सिद्धान्तस्त्वेवं भवति - विद्यमानोपलम्भनत्वात् प्रत्यक्षं धर्मं प्रत्यनिमित्तं भवति। विद्यमानोपलम्भनता तस्य कथमिति चेद्-ब्रूमः-सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म यत् तत् प्रत्यक्षम्। अस्यायं भावः - इन्द्रियाणामिति पदं सत्सम्प्रयोग इत्यत्र विद्यमानसत्सम्प्रयोगेति पदेन साकमन्वेति। एवं बुद्धिजन्मेत्यत्र विद्यमानेन बुद्धिपदेन सह पुरुषपदस्य अन्वयः कार्यः। संश्चासौ सम्प्रयोगश्चेति कर्मधारयो विवक्षितः सत्सम्प्रयोग इत्यत्र। तथा च इन्द्रियाणामर्थेन साकं सम्बन्धे सति पुरुषस्य जायमाना बुद्धिः या तत्प्रत्यक्षमिति सूत्रार्थो लभ्यते। यत एव सत्सम्प्रयोगजत्वं प्रत्यक्षस्य वर्ण्यते तत एव ज्ञायते यत् तस्य विद्यमानोपलम्भनत्वमपि इति। अत एव धर्माधर्मगोचरं प्रति अस्यानिमित्तत्वमपि सूपपादम्। प्रत्यक्षमूलत्वादेव अनुमानोपमानादीनामपि अनिमित्तत्वमपि सूत्रेणानेन

निरूपितमिति ज्ञेयम्। अतः धर्मे चोदनैव प्रमाणं नान्यदिति प्रतिपादितं भवति।

अत्र प्रत्यक्षं धर्माधर्मागोचरं विद्यमानोपलम्भनत्वात् प्रत्यक्षं विद्यमानोपलम्भनं सत्सम्प्रयोजत्वात्, प्रत्यक्षं सत्सम्प्रयोगजं प्रत्यक्षत्वात् इति प्रयोगत्रयमपि एतत्सूत्रं बोधयति। स्वकालीनार्थविषयबोधनसमर्थस्य प्रत्यक्षस्य अन्यकालीनस्य यागजन्यापूर्वस्य यागनिष्ठापूर्वसाधनत्वस्य वा ग्रहणे अत्यन्तमसमर्थत्वात् प्रत्यक्षादि धर्माधर्मयोः अनिमित्तं भवति। 'यागादिरेव धर्म' इति हि शाबरभाष्यम्। यागस्य प्रत्यक्षविषयत्वं सम्भवत्येव, तथापि यागादेः फलसाधनत्ववेषेणैव धर्मत्वस्वीकारात् तत्र विशेषणीभूतस्य फलस्य कालान्तर भावित्वात् विशिष्टरूपस्य अर्थात् फलसाधनताविशिष्टस्य यागस्य प्रत्यक्षत्वं दुरुपपादम्।

केचन सूत्रमिदं प्रत्यक्षलक्षणं तथा तस्य धर्मं प्रत्यनिमित्तत्वमिति अर्थद्वयं बोधयतीति वर्णयन्ति, तन्न शोभनम्, चोदनैव प्रमाणमिति धर्मं प्रति चोदनाया एव निमित्तत्वं नान्यस्येत्यनेन प्रतिज्ञातम्। तथा सति प्रतिज्ञातार्थस्य विचारमकृत्वा प्रत्यक्षलक्षणकथने का सङ्गतिः? अपि च अनुमानोपमानादीनामपि लक्षणकथनं सङ्गतं भवति, तेषामपि धर्मं प्रति अनिमित्तत्वस्वीकारात्। न च तेषां लक्षणपराणि सूत्राणि दृश्यन्त इति प्रत्यक्ष लक्षणपरं सूत्रं नेति ज्ञेयम्। अन्यथा अर्थद्वयविवक्षया वाक्यभेदोऽपि प्रसज्येत।

## मीमांसापादुकाकृन्मतेन अधिकरणविचारः

अत्राहुः मीमांसापादुकाकृतः - चोदनैव प्रमाणं धर्मे इति यत् प्रथमं प्रतिज्ञातं तस्य स्थापनार्थं प्रत्यक्षादीनां तत्र अनिमित्तत्वकथनाय सूत्रमिदं प्रवृत्तम्।

तत्र तावत् पूर्वः पक्षः प्रसरत्येवम् - 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति कुमारिलवचनानुसारं द्रव्यक्रियागुणादीनां धर्मत्वं मीमांसकानामभीष्टमेव। अत एव 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिषु श्रुतानां दधिपयसादीनां, 'स्वर्गकामो यजेत' इत्यत्र स्वर्गसाधनीभूतस्य क्रियात्मकस्य यागस्य 'यः कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैस्सदोमिनुयात्' इत्यत्र सदोगतनीचैस्त्वादिगुणस्य च धर्मत्वं स्वीकृतं पूर्वतन्त्रे। एवं च सति एतेषां द्रव्यक्रियागुणात्मकानां सर्वेषामपि धर्मत्वं प्रत्यक्षवेद्यमेवेति कथं तदतीन्द्रियमिति चोदनैकवेद्यत्वं धर्मस्य युक्तमिति।

अत्रोत्तर. पक्षः - एतत्तु छलमात्रं भवति। येन प्रकारेण धर्मपदवाच्यत्व द्रव्यक्रियागुणादीनां धर्मत्वं पूर्वतन्त्रे स्थापितं तेनैव प्रकारेण भवता पूर्वपक्ष प्रदर्शनीयः। परं तु तथाऽनुक्त्वा केवलं सिद्धान्तः विघटनीय इत्यभिप्रायमात्रेण पूर्वपक्षप्रस्तावे न कोऽपि परमार्थस्सिद्ध्यति। अतः भवत्कथनं छलाभिप्रायमिति ब्रूमः। धर्मपदनिरुक्तकाले धृतिसाधनं धर्म इत्यवोचाम। धृति र्नाम प्रीतिः फलं वा। सा प्रीतिः भगवन्निष्ठा। तथा च धृतिजनकतारूपेण फलसाधनतावेषेणैव द्रव्यक्रियागुणादीनां धर्मत्वं स्थापितमस्माभिः। तच्च प्रत्यक्षवेद्यं न, अपि तु अतीन्द्रियमिति तत्र चोदनैव प्रमाणं भवितुमर्हतीति अस्मादाकूतमप्रकम्प्यं भवति। तदुक्तं -

[1]"**धर्मस्तत्तत्क्रियादि श्रुतमिदमिह खल्मस्मदाद्यक्षवेद्यं**
**तस्माच्छास्त्रैकमानः स कथमिति यदि स्थूलमेतच्छलत्वात्।**
**धर्माख्यानं क्रियादौ धृतिजनकतया सा च नाध्यक्षवेद्या**
**दुर्दर्शार्थोपदेशान्निगमसफलता तेन सत्सूत्रसाध्या॥"** इति।

अत्र द्रव्यक्रियागुणादीनां धर्मत्वमुररीकृत्य तेषां प्रत्यक्षत्वात् तेनैव न्यायेन धर्मस्य प्रत्यक्षत्वं स्वीकार्यमिति पूर्वपक्षोत्थिति युक्तिः मीमांसापादुकामात्रवर्तिनी नान्येषु मीमांसाग्रन्थेष्विति अस्ति किंचित् महत्त्वं मीमांसापादुकया इति ज्ञेयम्।

## प्रत्यक्षावेद्यत्वं सिद्धसाध्योभयधर्मसमानमिति निरूपणम्

न चैवं पूर्वपक्षोत्थानं युक्तम्, सिद्धधर्मस्य ईश्वरस्यापि धर्मशब्दवाच्यत्वात् तस्य प्रत्यक्षत्वं कुत्रापि अदर्शनादिति साध्यधर्ममात्रबोधनपरं सत्सूत्रमिति वाच्यम्, साध्यधर्ममात्रमुद्दिश्य पूर्वपक्षप्रवर्तनेऽपि न कोऽपि दोषः। कथमिति चेत् - उच्यते - यागादीनां साध्यरूपधर्माणां प्रत्यक्षवेद्यत्वं स्वीकृत्य धर्मस्य प्रत्यक्षत्वमाशङ्कितम्। अनेन प्रत्यक्षत्वशङ्का कतिपय धर्ममात्रपरत्वेऽपि धर्मे वेद एव प्रमाणमिति यत् अवधारणमस्ति तद्भङ्गोपपत्तेः। यतः सर्वोऽपि वेदः प्रमाणमिति स्वीकारात्। अन्यथा 'रामो विग्रहवान् धर्मः' 'कृष्णं धर्मं सनातनम्' इत्युक्तरीत्या रामकृष्णादिरूपेण अवतीर्णस्य भगवतः धर्मत्व प्रत्यक्षवेद्यमेवेति कथं तत्र चोदनैव प्रमाणमिति पूर्वपक्षोत्थिति र्युक्तैवेति ध्येयम्। अतः पूर्वपक्षोत्थानं

सिद्धसाध्यधर्मोभयपरमिति कथनेऽपि न दोषः । अत एव अनन्तरस्मिन् औत्पत्तिकसूत्रे तस्य ज्ञानमुपदेश इत्यत्र प्रेरकवाक्यमिति तत्त्वोपदेशकवाक्यमपि उपदेशपदं बोधयति। चोदनापदं तु वेदमात्रबोधन परमिति प्राक् प्रादीदृशाम। न च 'चोदना नाम क्रियायाः प्रवर्तकं वचनमाहुः' इति प्रेरकवाक्यस्यैव तथात्वं युक्तमिति वाच्यम्, अन्यथा 'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टं इत्येवं जातीयकम् अर्थं शक्नोत्यवगमयितुम्'' इति शाबरवचनस्य वैयर्थ्यापत्तेः । न च प्रेरकवाक्याणि अतीतानागतार्थविषयबोधने क्षमतां प्राप्नुवन्ति । अतः सिद्धसाध्योभयपरं चोदनापदं सामान्यतो वेदपरमिति सिद्धम् । अत्र वृत्तिकारादीनामपि सम्मतिरस्तीति ऐकशास्त्र्याधिकारे निरूपितमस्माभिः । तदिदं प्रपञ्चितं मीमांसापादुकायां

[2]''**धर्मेऽप्रत्यक्षतोक्ति र्भवति च सुगमा सिद्धसाध्यानुवृत्ता**
**सत्सूत्रं साध्यमात्रप्रवणमिति च ते कल्पना निष्प्रमाणा।**
**ज्ञानं तस्योपदेशास्त्विति च सममिदं द्विप्रकारेऽपि धर्मे**
**सर्वं तात्पर्यवृत्त्या सुघटितमिह नः पश्यतां वृत्तिकारम् ।।''** इति।

न चेदं सूत्रं न सिद्धसाध्यधर्मोभयपरम्, यतः सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षमिति लौकिकानित्यप्रत्यक्षस्यैव कथनात्; ईश्वरप्रत्यक्षं तु नित्यमिति प्रत्यक्षसामान्यलक्षणे तत्र अव्याप्तिप्रसङ्गः, अतो न सिद्धधर्मः सूत्रकाराभिमत इति वाच्यम्, न चेश्वरं प्रति विचारशास्त्रं प्रवर्तते । अतो धर्मं जिज्ञासमानः पुरुषो भवति, न तु परमात्मा । अतः पुरुषस्य धर्मं जिज्ञासमानस्य बोधस्तु इन्द्रियाधीन एव भवतीति तदनुरोध सूत्रे लौकिकप्रत्यक्षस्यैव लक्षणं कथितमिति ज्ञेयम् । अन्यथा [3]''पश्यत्यचक्षुः स श्रृणोत्यकर्णः'' [4]''स्वाभाविकी ज्ञान बल क्रिया च'' [5]''सत्यं ज्ञानम्'' इत्यादि श्रुतिवर्णितार्थानां वैयर्थ्यप्रसङ्गः । सम्पूर्णो हि वेदः प्रमाणम् अतः एकदेशस्य वेदस्य प्रामाण्यं स्वीकृत्य अन्यत्र जैमिनेः अनादरभावनेति न वक्तुं युक्तम् । यतः धर्मजिज्ञासेत्यत्र सकलवेदार्थस्यैव विचारणीयत्वं प्रतिज्ञातमिति प्रथमाधिकरणे सुनिपुणमस्माभिरुपापादि । एवं च सति जैमिनिं निरीश्वरत्वेन प्रकल्प्य वेदान्तसिद्धान्तं निराकर्तुमीहते चेत् भवान् चार्वाक पन्थानमेव अवलम्बयतीति स्पष्टं प्रतीमः ।

तदिदम् उक्तम् -

[6]‘‘**धर्मं जिज्ञासमाने भवभृति करणायत्तबोधे प्रसिद्धे**
**तस्याध्यक्षः स नोति प्रथयितुमुदितं लौकिकाध्यक्षलक्ष्म।**
**नो चेत् पश्यत्यचक्षुः प्रभृति बहुविध श्रुत्यनीकावमर्दैः**
**लुण्टाकी हन्तलोकायतगतिरघृणा रुध्यतां चोदनाभ्यः॥’’** इति।

## सूत्रस्थपुरुषपदनिवेशस्य प्रयोजनप्रदर्शनम्

ननु सूत्रे सत्सम्प्रयोगे इन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमित्येव वक्तव्ये सति पुरुषस्येति पदनिवेशः किमर्थम्? न च पुरुषेतरस्य अचेतनस्य पूर्वोक्तं प्रत्यक्षज्ञानं जायते। तथा च पुरुषस्येति पदं व्यर्थमिति चेद्ब्रूमः। देहेन्द्रियमन प्राणविज्ञानेभ्योऽपि अतिरिक्तः जीव इति सूचयितुमेव पुरुषशब्दप्रयोगः कृत इति श्रीमद्वेदान्तदेशिकवर्याणां आशय.।अन्यथा देहादिषु आत्मत्वज्ञानमारोप्य प्रेक्षका. चार्वाकादीनां मतेषु प्रविशेयुः। तन्निरोधं सूचयितुमेव सूत्रकारेण पुरुषस्येति प्रायोजि। अपि च पुरुषस्य बुद्धिजन्मेति कथनात् इन्द्रियाणाम् अर्थानां ज्ञानस्य पुरुषस्य च परस्परं प्रतीयमानो भेदो वरीवर्तीति ज्ञाप्यते। अथ च ‘सत्सम्प्रयोगे’ इति कथनात् विषयाणामस्तित्वमपि सूच्यते। एतेन भोक्तृभोग्यभोगोपकरणजातमिदं जगत् परमार्थमित्यपि ज्ञापितम्। एतेन चार्वाकबौद्धाद्वैतवादिनां मतं निरस्तम्। तदिदं सूत्रघटकपदप्रयोजनं भाष्यादिग्रन्थेष्वपि अदृश्यमानं श्रीमता वेदान्तदेशिकवर्येण मीमांसापादुकायामेवमवोचि -

[7]‘‘**आत्मा देहाक्षबुद्धिप्रभृति समधिको धर्मचिन्ताधिकृत्यै**
**निर्धार्यस्त्वन्यथा चेत् सुरगुरुसमयस्वैरजल्पाः स्वदेरन्।**
**इत्थं निश्चित्य सूत्रे व्यधिकरणाविभक्त्यादिभिस्तत्तदर्थ-**
**व्यावृत्तो धर्मकर्ता तदुपचितफलभुक् सूचितस्सूत्रकारैः॥’’** इति।

न चेदं आत्मनः देहादिविलक्षणताप्रतिपादनाय पुरुषपदनिवेश इति तु व्यर्थम्, शास्त्रान्तरैरेव तदवगमात् वेदान्तवाक्यैरेवास्यावगम इति तु न युक्तमिति वेदान्तवाक्याणि विफलानि भवेयुरिति वाच्यम्, शास्त्रान्तरैरात्मन. देहातिरिक्तत्वं नित्यत्वमित्यादि अवगतमपि आत्मन परिमाणम्, ज्ञानानन्दस्वभाव ,

भगवच्छेषत्वम्, इत्यादयो धर्माः वेदान्तवाक्यैरेव प्रतीयन्त इति वेदान्तवाक्यान न वैफल्यम्। अपि च श्रुतौ प्रतिपादित एव आत्मनो देहातिरिक्तभाव. शास्त्रान्तरे तर्कतोऽनुगृह्णत इति श्रुत्यनुगृहीततर्कस्यप्रामाण्यं नस्समीहितमेव। अत एव [8]'एक आत्मनश्शरीरे भावात्' इत्यत्र अस्य विचारस्य अवसरोऽपि प्रापित. ब्रह्ममीमांसायाम्। अत एव च एतदधिकरणभाष्ये भगवच्छङ्करपादैः [9]"इह चेदं चोदनालक्षणेषु उपासनेषु विचार्यमाणेषु आत्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय" इत्युक्त्वा आत्मास्तित्वज्ञानं वेदान्तादवगतमपि न दोषाय कल्पत इति स्पष्टमुदीरितम्। अयमेवार्थः मीमांसापादुकायामेवं प्रपञ्चित. यथा -

**[10]"अन्यैरात्मावसाये भवति विफलता तत्र वेदान्तवाचां**
**नो चेत् देहादितोऽन्यः स कथमिह मतः, श्रूयतां सावधानम्।**
**यद्यन्यैरस्य बोधो विशदतावाप्तिराम्नायवाक्यैः**
**तैरेवास्यावसाये परमिह कथितस्तर्कतोऽनुग्रहः स्यात्॥"** इति।

## औपवर्षकृतस्य सौत्रसत्तत्पदव्यत्यासस्य औचित्यानौचित्यविचारः

भाट्टमतनिरूपणावसरे वृत्तिकाराभिमतं सौत्रसत्तत्पदयोः व्यत्ययनिरूपणमस्माभिः प्रदर्शितम्। तदिदं विचार्यते मीमांसापादुकायामेवम् - यथा - सत्तत्पदव्यत्यासेन सूत्रे पाठभेदे कृते सति अर्थेऽपि भेदः प्रतीयते। अर्थभेदे सति अधिकरणरचनोत्थितिरेवं वर्णनीया भवति - यथा - प्रत्यक्षादीनि प्रमाणानि न परीक्षितव्यानि इति प्रथममुक्त्वा भ्रमात्मकप्रत्यक्षस्यापि सत्त्वात् कथमपरीक्षेति शङ्कायां प्रमाभूतप्रत्यक्षलक्षणं प्रदर्श्यतेऽनेन सूत्रेणेति तदर्थं सत्तदो र्व्ययः कार्य इति सिद्ध्यति। यद्विषयं प्रत्यक्षं भवति, तत् सत्प्रत्यक्षं भवति। तदिदमाह सूत्रकारः तत्संप्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्मेति। एवं च सति व्याख्यातृ भेदेन व्याख्यानभेदे सति अवस्था भवति। तर्हि कस्य व्याख्यानस्य आदरः कार्य इति निर्धारणं कर्तव्यं भवति सुधीभिः। यस्तु श्रुतिस्मृतिप्रमाणानुगृहीतं व्याख्यानं करोति स व्याख्याता समादर्तव्य इति अभ्युपगन्तव्यम्। न च वृत्तिकारः श्रुत्यर्थबहिर्भूतं किञ्चित् व्याख्यातीति स तु सर्वैरपि समाद्रियते। क्वचित् सर्वादृतपाठेन साकं भेदे

प्रतीयमाने सति तत्पाठस्य तात्पर्यं सावधानमन्यत्र नेयं सुधीभिः। तदिदं प्रपञ्चितं-

[11]"**पाठे चार्थे च भेदं विदधति कतिचिद् वृत्तिकारानुशिष्टाः**
**स्यादत्रातिप्रसक्तिः क इह निपुण इत्येतदप्यत्र चिन्त्यम्।**
**प्रख्यातो वृत्तिकारो मुनिरनृतमसौ व्याचकारेति मन्दं**
**बाधे सत्यान्यपर्यं क्वचिदिति तु मतिर्मत्सरातङ्कमुक्ता।।"** इति।

अपि च वृत्तिकारस्तु महान् भवति। अत एव तद्व्याख्याने न अनौचित्यं प्रकल्पनीयम्। शबरादिरपि महानेव। तथापि तदादृत पाठे कीदृशं क्लेशमयं वृत्तिकारः अमन्यत इति विमर्शदृष्ट्या विभावनीयम्। तत्र मीमांसापादुका प्रदर्शयत्यमुं पन्थानम् - यथा - सत्संप्रयोगपदार्थवर्णनकाले भाष्ये सति वर्तमाने सम्प्रयोग इति प्रोक्तम्। अत्रेदं विमर्शनीयं यत् अवर्तमानानां सम्प्रयोग एव न सम्भवतीति सतीति कथनं व्यर्थमेव। न च सता वर्तमानेन विषयेण साकं इन्द्रियाणां सम्प्रयोगे सतीति कल्पने न कोऽपि दोषावकाश इति वाच्यम्, अवर्तमानेन विषयेण सह इन्द्रियस्य संयोगः कुत्रापि अदर्शनात् तथावर्णनमपि न साधु। अत एव सत्तत्पदयोः व्यत्ययं कृत्वा समीचीनप्रत्यक्षस्यैव लक्षणमत्र सूचितमिति स्वीकार्यम्। अथवा सत् सम्प्रयोग इति सम्प्रयोगशब्दात् विभक्तं स्वतन्त्रं पदं सत्पदं भवति। एवं तत्प्रत्यक्षमित्यत्र तु समस्तमेकं पदम्। तत्पदार्थः प्रत्यक्षपदार्थेऽन्वेति। तथा च इन्द्रियाणामर्थेन साकं संयुक्ते सति जायमानं तद्विषयकप्रत्यक्षं सत् समीचीनम् अर्थात् प्रमारूपं भवति तद् ज्ञानमिति। तथा च एतादृशरीत्या अर्थवर्णनेन वृत्तिकारपाठस्यात्यादरः कार्य इति मीमांसापादुकाकृदाशयः। स चायमेवं प्रकटितः-

[12]"**पाठादत्रौपवर्षादनुपचितफला ह्यन्यथा पाठक्लृप्तिः**
**स्वच्छन्दस्त्वात्तसारो विषयविषयिवत्सम्प्रयोगोक्तिलभ्यः।**
**यद् वृत्तं पूर्ववाक्ये न पठितमथ च न्यासि तद्वृत्तमन्यत्**
**पाठश्चार्षो न भेत्तुं क्षम इति विदुषां वृत्तिकारोऽनुवर्त्यः।।"** इति।

अयं च विषयः पूर्वमीमांसाग्रन्थेषु नोदीरित इति मीमांसापादुका विशिष्टां प्रथामावहतीत्यत्र न कोऽपि सन्देहः।

## वृत्तिकारोक्तः प्रमाणषट्कवादः किं निबन्धन इति निरूपणम्

नन्वेवं वृत्तिकारवचनस्य प्रामाण्यं स्वीकृतवद्भिः श्रीमद्वेदान्तदेशिकैः वृत्तिकाराभिमतं प्रमाणषट्ककथनं किमर्थं न स्वीकृतमिति चेदत्रोच्यते - नैतावता प्रमाणानां षोढा संख्यानं तदिष्टं भवति । तथा सति तदनुसारिभिरेव प्राभाकरैः अनुपलब्धेरपि प्रामाण्यं स्वीकृतं स्यात् भाट्टवत् । न च तथा स्वीकृतं प्राभाकरैः । अतः अत्र गोबलीवर्दन्यायेन समाधानं नेयम् । यथा गामानय बलीवर्दमानयेति प्रयोगमात्रेण न बलीवर्दस्य गोभिन्नत्वमिष्यते, तथा पृथक्पाठमात्रेण अर्थात् प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः प्रमाणानि षडिति कथनमात्रेण न प्रमाणभेदो भवति । यथा वा अन्वयिव्यतिरेकि केवलान्वयिभेदेन अनुमानवर्णनम्, तथा अत्रापि उपमानार्थापत्त्यनुपलब्धीनामनुमानप्रभेदः वाच्य इति । शिष्यबुद्धिवैशद्यार्थं वा अधिकोक्तिरित्यपि वक्तुं शक्यते । अत एवोक्तं तत्त्वमुक्ताकलापे

[13]**"मानत्रित्वे तु मन्वाद्यनुमतिविषये तत्र यत् कैश्चिदात्तैः**
**आधिक्यं क्वाप्यधीतं तदपि सुघटितं गोबलीवर्दनीत्या ।**
**उक्तार्थोदाहृतिर्वा भवतु बहुमुखी शिष्यमेधामहिम्ने**
**सर्वे च स्वेष्टतन्त्रेष्वनुकथनशतं निर्वहन्त्यैव मूहैः ।।"** इति ।

अथवा पृथगुक्तिः प्रमाणानां कस्य धर्मे प्रामाण्यं वर्तते कस्य नास्तीति विचारार्थमपि भवितुमर्हति । मनुस्तु प्राह -

[14]**"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।**
**त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ।।"** इति ।

अत एव मीमांसापादुकायां प्रोक्तं

[15]**"वृत्तौ षट् चेत् प्रमाणान्यगणिषत न सा मानसंख्या ततःस्यात्**
**त्यक्तं षष्ठं च कैश्चित् भवति च फलिनी गोबलीवर्दनीतिः ।**
**धर्मे मानान्तराणां गतिमिह नुदतो नात्र संख्याभिसन्धिः**
**मानानि त्रीणि शोध्यान्यमनुत च मनुः प्रेप्सतां धर्मसिद्धिम् ।।"** इति।

## अत्र श्रीमद्रामायणवचनसमर्थनम्

एतेन [16]'राम षड्युक्तयो लोके याभिस्सर्वं विमृश्यते' इति ीमद्रामायणवचनमपि व्याख्यातम् । तथा हि - साक्षात्परब्रह्मभूत ीरामचन्द्रकृतदाहेन दिव्यं रूपं प्राप्तस्य कबन्धस्य वचनमेतत् । युक्तिः हेतु. अपदेश ्माणमिति पर्यायाः । तथा च युक्तिः प्रमाणमिति प्रमाणानि षडिति वचनेनानेन ाभ्यते । उपमानार्थापत्त्यनुपलब्ध्यादौ इतरानुमानापेक्षया विद्यमाना महत्ता दर्शयितुमेव भगवति रामायणे औपवर्षवचने च षडिति प्रमाणानि कीर्तितानि । ाथवा युक्तिशब्दः न प्रमाणवाची, प्रकृतानुपयोगात् व्याख्यातृभिरन्यथा र्णनीयत्वाच्च । श्रीमद्रामायणव्याख्याकारैः सन्धिविग्रहयानासन धीभावसमाश्रयाख्यात् षट् राजयुक्तयः एव प्रतिपादिताः । अत एव अन्यसमाश्रग ार्य इति रामं प्रतिवदन्,

> [17]"**तासां विमर्शनं न्याय्यं मार्गेण हितयो र्द्वयोः ।**
> **परिमृष्टो दशान्तेन दशाभागेन सेव्यते ।।**"

ति उपरि कबन्धस्त्वाह । अस्यार्थस्त्वेवं वर्णितः सत्पथसंचारे - [18]"तदर्थस्तु - र्दशाया अन्तभागेन परिमृष्टः दुर्दशावसाने स्थित· दशाभागेन ान्तातिरिक्तदुर्दशाभागवता सेवनीयः । सदृशास्थित. सेवितोऽप्युपेक्षेत । र्दशावसानाभावे साधुरपि न समर्थ इति भावः । सुग्रीवदुर्दशाया ावसानकालोऽयम्, तत्पूर्वभागगतेन त्वयैव स सेवितव्यः । तद्दशावसाने तेन ते ाकार इति ।" इति । अतः प्रमाणत्रित्वकथनमस्मदभिमतं न कथंचिदपि ापहीयते । तदिदं सर्वं प्रपञ्चितम् एवम् - यथा -

> [19]"**नन्वेवं क्वापि रामायणपरिपठिता युक्तयष्षट् कथं स्युः**
> **मन्वादेस्त्रित्ववादोऽप्यथ भवतु परं न्यूनसंख्यानिवृत्त्यै ।**
> **मैवं तत्तद्विशेषैः पृथगनुपठितैरर्थवैशद्य सिद्ध्यै**
> **मानैस्तत्तद्विशेषाः सहपरिपठितास्सन्तु तत्रान्यथा वा ।।**" इति ।

## बौद्धधर्माणामुपादेयता निराकरणम्

प्रकृतमनुसरामः - यथा अस्माकं वेदप्रतिपाद्ये धर्मे निमित्तं चोदनैव भ तथैव बौद्धादिधर्मेऽपि वेति विचारणीयम् । यतः धर्मस्तु सर्व प्रत्यक्षानुमानादिविषयः, अपि तु आगमैकवेद्यः । तथा सति सौगताद्यागमान तत्र निमित्तत्वं कल्पनीयम् । अत्रेदं सूच्यते यत् बौद्धाद्यागमाः न प्रमाणम्, 'वेदं नाधीयीत' 'वेदो न प्रमाणम्' इत्यादि तेषां ग्रन्थेषु विद्यमा वेदमूलकत्वासम्भवात् भ्रान्त्यादिमूलकास्तेषाम् आगमा इति अत प्रक्षेपणीयास्तदागमा इति [20]'विरोधाधिकरणे' स्पष्टमुदीरितम् । अत एव तन्त्रवार्तिके [21]"शाक्यादि वचनानि तु कतिपयदमदानादिवचनवर्जं सर्वा समस्तचतुर्दशविद्यास्थानाविरुद्धानि त्रयीमार्गव्युत्थित विरुद्धाचरणैश्च बुद्धादि प्रणीतानि । त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यस्समर्पितानी वेदमूलत्वेन सम्भाव्यन्ते । स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रति प्रतिपन्नौ च धर्मविप्लुतमुपदेक्ष्यतीति कः समाश्वासः । उक्तं च

[22]"**परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।**
**आत्मानं योऽतिसंधत्ते सोऽन्यस्मैस्यात् कथं हितः ।।**" इति ।

इति । एवमन्यत्रापि प्रोक्तं वार्तिके - यथा -

[23]"**लोभादिकारणं चात्र बह्वेवान्यत् प्रतीयते ।**
**यस्मिन् संनिहिते दृष्टे नास्ति मूलमन्तरानुमा ।।**
**शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।**
**हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ।।**
**न च तै र्वेदमूलत्वमुच्यते गौतमादिवत् ।**
**हेतवश्चाभिधीयन्ते ये धर्मा दूरतः स्थिताः ।।**
**एत एव च ते येषां वाङ्मात्रेणापि नार्चनम् ।**
**पाखण्डिनो विकर्मस्था हैतुकाश्चैत एव हि ।।**"

इति । अतस्सिद्धं बौद्धादिधर्मा न प्रमाणमिति ।

तदिदमुच्यते मीमांसापादुकायामेवम् -

[24]"**प्रत्यक्षादि र्न हेतु र्जिन सुगतमुखैः कल्पितानां कथानाम्**
**इत्येतत्सिद्धमत्र श्रुतिरपि न हि तन्मूलमूह्यं विरोधात् ।**
**इत्यप्येतद्विरोधाधिकरणविदितं तेन मोहादिरन्यैः**
**अन्यै र्बाधोपरोधौ न तु निगमगिरामित्युपक्रान्तसिद्धिः ।।**" इति ।

## धर्मे निमित्तं चोदनैव न सुगताद्यागम इति सूत्रार्थः इत्यावेदनम्

ननु एवं सत्यपि द्रव्यक्रियागुणादीनां धर्मत्वं दुर्दर्शमप्यस्माक, न सर्वेषां तथेति युक्तमुत्पश्यामः - यथा रत्नतत्त्वपरिशीलनसमर्थानां रत्नतत्त्वं न दुर्ग्रहं भवति तद्वत् धर्मतत्त्वमपीति भाव्यम्। यथा वा कामातुरकामिनीसन्दर्शनादिष्विव भावना प्रकर्षो धर्मप्रत्यक्षे कारणं भवितुमर्हति । अथवा काकोलूकगृध्रादिषु परस्परं इन्द्रियप्रकर्षतारतम्यं दृश्यते। तेन च प्रत्यक्षतारतम्यं क्वचिद् विश्रान्तं तारतम्यत्वात् परिणामतारतम्यवदित्यनुमानं सिद्ध्यति । एतेन केचन कपिलसुगतादिप्रभृतयाः सर्वग्राहिणः प्रसिद्धा भवितुमर्हन्ति। अत एव सर्वज्ञत्वेन तेषां व्यवहारोऽपि युक्तः । अथवा योगि प्रत्यक्षविषयत्वं वा धर्मस्य युक्तं कल्पयितुम् । तथा च सुगतादिप्रत्यक्षविषयत्वात् धर्मस्य कथं चोदनैकप्रमाणकत्वं तस्योच्यत इति चेदत्रब्रूमः - धर्मः चोदनैकप्रमाणकः, न प्रत्यक्षविषयः । न च सहस्रशः परिशीलितेऽपि रत्नतत्त्वे चक्षुषा गुरुत्वं गृह्यते। गुरुत्वस्य अतीन्द्रियत्वात् चक्षुषस्तत्र सामर्थ्य-विरहात् । न च कामातुरकामिनीसन्दर्शनादिषु भावनाप्रकर्षः यथा प्रत्यक्षयति कामिनीम्, तद्वत्रापीति वाच्यम्, भावना हि संस्कारः, तज्जन्य ज्ञानस्य स्मृतित्वात् कथं प्रत्यक्षत्वं उपपद्येत तस्य। अत एव तत्र अनुभूताधिकं किंचित् नानुभूयते। न चैवं सति

[25]"**वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् ।**
**गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ।।**"

इत्यादिषु कथमधिकं साक्षात्क्रियत इति वाच्यम्, नैतत् प्रत्यक्षम्, अपि तु यथावस्थितस्य अन्यथावभासात् प्रत्यक्षाभास इति ब्रूम. ।

एवमेव तारतम्यत्वहेतोरप्यसाधकत्वं साधयामः। तथा हि - इन्द्रियाणां यो
विषय एव तारतम्यं प्रत्यक्षे स्यात् ; न त्वतीन्द्रियार्थ विषये। अत एव चक्षुरिन्
रसं स्पर्शं वा न गृह्णाति। एतेन बुद्धादीनां सर्वज्ञत्वसाधनमपि निमूलमिति सिद्धम

## योगिप्रत्यक्षस्य धर्मं प्रत्यक्षमूलत्वप्रतिपादनम्

न च योगिनोऽपि धर्मं प्रत्यक्षयन्ति। न च ते स्वानुष्ठानार्थं धर्मं प्रत्यक्ष कुर्वन्ति। नापि परानुष्ठानार्थम्। वेदार्थत्वेनैव धर्मप्रत्यक्षीकरणं तेषां युज्यते परप्रत्यक्षस्य परानुष्ठानार्थमनुपयोगात् परानुष्ठानार्थमपि ते धर्मं न प्रत्यक्षीकुर्वन्ति

वस्तुतस्तु अस्मदनुष्ठानार्थं न ते धर्मं साक्षात्कुर्वन्ति इत्येव अत्र आशयः यतः [26]'अजान् ह वै पृश्नीँ तपस्यमानान् ब्रह्मस्वयम्भू अभ्यानर्षत्, तदृषी मृषित्वम्' इति श्रुत्यनुरोधेन अतीन्द्रियद्रष्टृत्वं तेषां दर्शनाम्। अतः केवलम अस्माकं प्रत्यक्षमुररीकृत्यैव पूर्वोत्तरपक्षप्रस्तावः इत्यवधेयं सुधीभिः।

## योगिप्रत्यक्षविषयकमीमांसकमतनिरासः

पुराणप्रसिद्धानां योगिनामनङ्गीकारः मीमांसकानामिष्यते। ऋषिप्रतिपादका वाक्यानामर्थवादत्वेन विधेयार्थस्तुतिमात्रतया न तेषां तदतिरिक्तार्थबोध प्रामाण्यमिति तत्सिद्धान्तात्।

तदिदं मीमांसकमतं स्वसिद्धान्तच्छेदनपरमिति ब्रूमः। कथम्? इति चेत् उच्यते। अर्थवादानां स्वार्थे प्रामाण्यं नास्ति, अत एव योगिनः अनङ्गीकार इति भवत्सिद्धान्तः। तथा सति अर्थवादानां स्वार्थेप्रामाण्यविरहे 'अक्ताः शर्क उपदधाति' 'तेजो वै घृतम्' इत्यत्र घृतेन शर्कराणाम् अञ्जनम्, 'उच्चैः ऋचा क्रियते 'उपांशु यजुषा' इत्यत्र उच्चैस्त्वादीनां वेद धर्मत्वम्, 'यावतोऽश्वान् प्रतिगृह्णीयात इत्यत्र अश्वप्रतिग्रहेष्टेः दातृकर्तृकत्वमित्याद्यनेकभवदभिमतसिद्धान्तासिद्धिप्रसङ्गः तस्मात् योगिनां स्वीकारः आवश्यकः। तत्सर्वज्ञत्वमपि पुराणादिप्रसिद्ध मवश्यमङ्गीकार्यम्। योगिनां तु वेदसिद्धपदार्थदर्शनसामर्थ्यमेव वर्तत इति किंचिदनुपपन्नं नाम। इत्यास्तां तावत्।

तथा च धर्मे प्रत्यक्षादिरनिमित्तं भवतीति चोदनैव तत्र निमित्त भवतीति प्रतिपादनात् सुगताद्यागमा· अप्रमाणमेवेति ते सर्वथा उपेक्षणीया इत्यपि एतत्सूत्रं बोधयतीति आचार्याः श्रीमद्वेदान्तदेशिकवर्याः अभिप्रयन्ति। तथा चोक्तम् -

[27]**"प्रत्यक्षं सांख्यबौद्धप्रभृतिभिरुदितं भावनोत्थं न विद्मः**
**संस्काराणां प्रकर्षः स्मृतिमुपजनयेत् दृष्टमात्रे प्रकृष्टाम्।**
**तस्माद् धर्मे निमित्तं भवति न सुगताद्यागमःक्षिप्तमूलः**
**श्रद्धेया चोदनैवेत्यवधृतिरियमित्यत्र तात्पर्यसिद्धम्॥"** इति।

## सूत्रमिदं जगत्सत्यत्वसूचकमिति सूचनम्

सत्सूत्रेणानेन जगतस्सत्यत्वमपि प्रतिपादितम्। तथा हि - इन्द्रियाणां विषयेण साकं सम्प्रयोगे सति जायमानं ज्ञानं पुरुषस्य प्रत्यक्षमिति हि सूचयति सूत्रम्। अनेन इन्द्रियाणां विषयस्य ज्ञानस्य तदाश्रयस्य पुरुषस्य च पारमार्थिकी सत्ता निरूपिता भवति। न च तद् ज्ञानं व्यावहारिकमिति युक्तं वक्तुम्; तद्बोधकपदाश्रवणात्। अत. भोक्तृभोग्यभोगोपकरणात्मकम् इदं जगत् सत्यमिति सूत्रकृदभिमतमिति प्रतीम । एतेन जगतः मिथ्यात्ववादः अद्वैतमतकल्पितः निरस्तो भवति इति ज्ञेयम्। तदिदमुक्त मीमांसापादुकायाम् -

[28]**"प्रत्यक्षादिप्रमाणं स्वविषयनियतं दर्शयन् सूत्रकारः**
**प्रत्याचष्ट प्रवृद्धान् प्रमितिपरिभवे विश्वलुष्टाकवादान्।**
**पश्यन्तो वृत्तिमार्षीं तत इह शबरस्वामिमुख्याः समीचीं**
**चिन्ताव्याघातभीताश्चिदचिदनुगतां सत्यतां साधयन्ति॥"** इति।



## पादटिप्पणी

1 मी पा 96
2 मी पा. 97
3 श्वेताश्वतरोपनिषत् 3-19
4 श्वेताश्वतरोपनिषत् 3-19
5 तै. उ आनन्दवल्ली - 1
6 मी.पा. 98
7 मी पा 99
8. ब्र सू. 3-3-51
9. शांकरभाष्यम् 3-3-11
10. मी.पा. 100
11. मी.पा. 101
12. मी.पा 102
13. तत्त्वमुक्ताकलापः - बुद्धिसर - श्लो. 131
14 मनुस्मृति
15 मी.पा. 103
16 श्रीमद्रामायणम् 3-72-8
17. श्रीमद्रामायणम् 3-72-8
18 मी.पा. सत्पथसञ्चार - पृ 415
19. मी.पा. 104
20 पू.मी. 1-3-2
21. तन्त्रवार्तिकम् 1-3-2
22 तन्त्रवार्तिके उद्धृतमिदं प्रमाणवचनम्
23 तन्त्रवार्तिकम् 1-3-3
24 मी.पा 105
25. श्रीमद्रामायणम् 3-39-15
26. तै. आ 2-13
27 मी.पा. 106
28 मी पा 107

✡ ✡ ✡

# ६. वेदप्रामाण्याधिकरणविचारः

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेश·**
**अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्**
**मीमांसा सूत्रम् - 1-1-5**

### भाट्टमीमांसकमतेन औत्पत्तिकसूत्रार्थवर्णनम्

सत्सूत्रेण पूर्वं धर्मं प्रति प्रत्यक्षादीनामप्रामाण्य निरूपितम् । अत एव शब्दस्यापि पुरुषकृतस्य प्रत्यक्षादिमूलत्वेन अप्रामाण्यं सिद्धम् । तथा च चोदनैव धर्मे प्रमाणमित्येकः चोदनासूत्रेण प्रतिज्ञातोऽर्थः प्रसाधितो भवति । साम्प्रत चोदना प्रमाणमेव धर्मं प्रतीत्यपर· प्रतिज्ञातार्थः निरूप्यते ।

अत्र भाट्टाः - चोदना प्रमाणमेवेति प्रतिज्ञासिद्धये प्रथमं चोदना धर्मे प्रमाण भवितुमर्हति न वेति विचारणीयम् । अत्र पूर्वपक्षिणामशयस्त्वयं भवति - शब्दस्तु लोके प्रत्यक्षादि प्रमाणान्तरापेक्षस्सन् स्वयं प्रमाणपदवीं भजते । चोदनात्मकशब्दोऽपि तथैव वर्णनीयत्वात् चोदनायाः मूलभूतप्रमाणान्तरविरहात् धर्मं प्रति चोदनाया अनिमित्तत्वं प्राप्तम् । तथा च भावबोधक प्रमाणगम्योऽपि धर्मोऽभावरूपानुपलब्धिप्रमाणगम्य एवेति धर्मः निष्प्रमाणक इति पूर्वपक्षसार. । तदिदं निराकर्तुं सिद्धान्तिच्छायया औत्पत्तिकसूत्रं प्रवर्तते । इदमत्राकूतम् - लोके तावत् प्रमाणान्तरमूलानां प्रामाण्यम् ; अतन्मूलानां चाप्रामाण्यं दृश्यते । तथापि (ज्ञानगतं) प्रामाण्यं तु नेतरसापेक्षं भवति अपि तु स्वत· वर्तत इति वैदिक पन्था· । अत एव अनाप्तवाक्यस्य अप्रामाण्यं न मूलविरहात् भवति, अपि तु दृष्टमूलत्वादेवेति तत्र स्वाभाविकस्य प्रामाण्यस्यापवादो दृश्यते । अपौरुषेये तु वेदे नेयं कथा युक्ता ।

आप्तप्रणीतत्वं वेदस्य विरहेण अपौरुषेये वेदे अनाप्तस्पर्शनिमित्तदोषविरहा अप्रकम्प्यं प्रामाण्यं वेदस्य सुस्थं भवति।

वस्तुतस्तु वेदे पुरुषानुप्रवेशः त्रेधा सम्भाव्येत यथा - पदपदार्थसम्बन्धद्वारेण वाक्यवाक्यार्थसम्बन्धद्वारेण, ग्रन्थस्यैव वा भारतादिवत् पौरुषेयत्वाद्वा इति। एत त्रयमपि न वेदे दृश्यते। पदपदार्थसम्बन्धस्य नित्यत्वमस्मिन् सूत्रे प्रसाध्यते वाक्यार्थज्ञानस्य च पदार्थमूलत्वं वेदस्य च अपौरुषेयत्वं च अस्मिन्नेव पादे अ व्यवस्थापयिष्यते।

अतः औत्पत्तिकसूत्रे शब्दार्थयोस्सम्बन्धस्य नित्यत्वं सूचयित्वा चोदनाय प्रामाण्यं धर्मं प्रति प्रतिष्ठापयति सूत्रकारः। सूत्रस्यायमर्थः - शब्दस्य अर्थेन स सम्बन्धः औत्पत्तिकः - नित्यः स्वभाविक इत्यर्थः। लक्षणया उत्पत्तिशब्दः स बोधयति। अतः अवियुक्तः भावः इत्यर्थं जनयति उत्पत्तिशब्दः। तदुक्तं भा शाबरे - [1]''औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्ति र्हि भाव उच्यते लक्षणया अवियुक्त. शब्दार्थयो र्भावः सम्बन्धो न उत्पन्नयोः पश्चात् सम्बन्धः'' इति। स सम्बन्ध. प्रत्याय्यप्रत्यायक भावरूपः। 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इति य विधिवाक्यं तदत्र उपदेशशब्देन विवक्ष्यते। स च उपदेशः ज्योतिष्टोमयागादी ज्ञापको भवतीति तस्य ज्ञानमुपदेशः इत्युच्यते। तस्य धर्मस्य यागादेः ज्ञानं-ज्ञाप उपदेशः - विधिवाक्यं चोदना वेति सूत्रैकदेशार्थः। ज्ञायते येनेति करणार्थे व्युत्प ज्ञानशब्दः। तदाहुः वार्तिककाराः - [2]'ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः'।

एतावता प्रतिपादयता सूत्रकृता विधिवाक्यस्य करणदोषकृतम् अप्रामा निरसितमिति ध्येयम्। तदुक्तं वार्तिके - [3]'औत्पत्तिकगिरा दोषः कारण निवार्यते।' इति एवं बाधकज्ञानरूपमप्रामाण्यकारणमपि नास्तीति सूत्रय अव्यतिरेक इत्यादिना। ज्योतिष्टोमादिवाक्यस्य बाधकप्रत्ययान्तरं वाक्यं केना प्रमाणेन वयं न पश्यामः। अत एव अनुलब्धे-अलौकिके अर्थे-विषये तत्प्रम स्वत एव प्रमाणं चोदना, अनपेक्षत्वात् प्रमाणान्तरनिरपेक्षत्वादिति सूत्रकृ प्रतिपादितम्। पौरुषेयवाक्ये कारणदोष बाधकप्रत्ययादि सम्भवात् अप्रामाण्यश कदाचित् उदियात्, परं तु अपौरुषेये एतदुभयमपि विरहात् स्वतः प्रमाणमेव चोदने सूत्रकृदाशय। अमुमेव सिद्धान्तं बादरायणोऽपि मन्यत इति तस्य सम्मति

प्रदर्शयितुकामः बादरायणग्रहणमकार्षीत् सूत्रकारो भगवान् जैमिनिः। अत एवाहुः श्लोकवार्तिके कुमारिलभट्टपादा -

[4]"**स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु।**
**आप्तोक्तिषु नरापेक्षा नोभयं चोदनासु नः॥**" इति।

यदुक्तं पूर्वपक्षिणा अभावगम्यत्वं धर्मस्येति निष्प्रमाणको धर्म इति, तन्न मनोरमम्।

"**इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये।**
**आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम्॥**"

इति व्यासवचनेन पुण्यपापादिशब्देन धर्माधर्मयोः प्रसिद्धिः दृश्यते। एवं नास्तिकाः अहिंसामेव धर्ममाहुः। अन्ये प्राजापत्यादिकं तपः पीडात्मकत्वात् परपीडावदधर्ममेवाहुः। आर्यास्तु विधिनिषेधप्रमाणकौ धर्माधर्मौ इति संगिरन्ते। एतच्च यावत् शास्त्रमनाश्रितं प्रमाणं न भवति। एवं धर्माधर्मविषये परस्परं मतभेददर्शनात् धर्माधर्मयोः चोदनैकप्रमाणगम्यत्वं प्रसाध्यते मीमांसकैः। अतः प्रसिद्धस्य अभावगम्यत्वमनुपपन्नमिति चोदनाप्रमाणकत्वं धर्मस्य युक्तमेवेति चोदना धर्मे प्रमाणमेवेति च सूचयितुं सूत्रमिदं प्रवृत्तमिति न काऽपि क्षतिः। अतः अभावगम्यत्वं धर्मस्य न, अपि तु चोदनागम्यत्वमेवेति प्रत्येतव्यम्। अत एवाहुः शबरस्वामिनः सूत्रार्थोपक्रमे - [5]'अभावोऽपि नास्ति; यतः औत्पत्तिकस्तु - - - - - - अनपेक्षत्वात् " इति। तस्मात् अभावगम्यत्वनिराकरणाय धर्मे चोदनाप्रामाण्यमुपपादनीयम्। यथाहुः -

[6]"**तस्मादभाववक्त्रस्थौ धर्माधर्मौ न शक्नुयात्।**
**चोदना चेत् समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम्॥**" इति।

एवं शब्दार्थयोस्सम्बन्धस्य नित्यत्वकथनेन धर्मे चोदना प्रमाणमेवेति चोदनासूत्रे प्रतिज्ञातस्य द्वितीयार्थस्य निरूपणमकार्षीत् औत्पत्तिकसूत्रे भगवान् जैमिनिः। तत्र शब्दार्थसम्बन्धस्य नित्यत्वं, ज्ञानप्रामाण्यस्य स्वतस्त्वं चेति स्वाभिमतं एतद्द्वयमपि स्वगुरोः भगवतः बादरायणस्यापि सम्मतमिति गुरुनिष्ठगौरवबुद्ध्या गुरो र्नामापि निर्दिशति सूत्रकारो भगवान् जैमिनि

**बादरायणस्येति।**

एवमौत्पत्तिकसूत्रं प्रतिपादयामासुर्भाट्टाः।

## सेश्वरमीमांसामतेन अधिकरणविचारः

अत्राहुः सेश्वरमीमांसाकृतः - सत्सूत्रं यावत् धर्मस्य प्रत्यक्षादिप्रमाणकत्वं नास्तीति प्रसाधितम्। इतः परं पादशेषेण धर्मो निष्प्रमाणक इत्याशङ्क्य निराक्रियते। तत्र औत्पत्तिकसूत्रे चोदनायाः अप्रामाण्यं बहुभिः विकल्पैः प्रस्तूय तत्र कश्चिदेवांशः निराक्रियते, शेषं तु षष्ठसप्तमाष्टमाधिकरणेष्विति ज्ञेयम्। अयमत्र विचारः प्रवतर्त; यथा - चोदनानां धर्मे प्रामाण्यं सम्भवति वा न वा? यदि प्रामाण्यं चोदनानां सम्भवति तर्हि तच्च प्रामाण्यं किं प्रमाणान्तरसापेक्षं भवति उत न ? यदि प्रमाणान्तरसापेक्षं प्रामाण्यमिष्यते तर्हि प्रमाणान्तरस्य धर्मे अनिमित्तत्वं पूर्वमेव प्रसाधितमिति चोदना धर्मे प्रमाणं न भवितुमर्हति। यदि निरपेक्षत्वं स्वीक्रियते तर्हि चोदनाया· प्रामाण्यं सुप्रतिष्ठितं भवति।

अत्रायं पूर्वः पक्ष· - यथा प्रमाणान्तराणि धर्मे न प्रमाणम्, तथैव प्रमाणेषु अन्तर्भूतः शब्दोऽपि धर्मानिमित्तं भवतीत्येष्टव्यम्। यतः प्रमाणान्तरम् अपेक्ष्यैव शब्दः प्रमाणपदवीमारोहति। तथैव उपलम्भात्। 'अर्थं बुद्ध्वा शब्दरचना' इति हि न्यायविदः। अन्यथा अनाप्तोन्मत्तादिप्रयुक्तवाक्यानामपि प्रामाण्यप्रसङ्गः स्यात्।

तथा च शब्दस्य प्रमाणान्तरसापेक्षत्वेन प्रामाण्यस्वीकारस्य आवश्यकत्वात् प्रमाणान्तराणामनिमित्तत्वं धर्मे यथा प्राक् न्यरूरूपाम तथैव शब्दस्यापि अनिमित्तत्वं धर्मे निरूपितं भवति। निरपेक्षप्रामाण्यं तु शब्दस्य दुर्निरूपं भवति, नियमेन स्वप्रामाण्ये शब्दः प्रमाणान्तरसापेक्षतया दर्शनात्। अतस्सिद्धं धर्मे चोदना प्रमाणं नास्तीति।

अत्रायं सिद्धान्तः पक्ष· - अत्र पञ्चभिः विकल्पैः पूर्वपक्षं निराकरोति सेश्वरमीमांसाकारः - यथा - चोदनानामप्रामाण्यं वदतः, प्रमाणान्तरासम्भवे (1) पदानां पदार्थेन सम्बन्धायोगात् किं बोधनसामर्थ्यमेव न स्यादित्यभिप्रेतम् (2) उत सामान्यत· बोधनसामर्थ्यसत्त्वेऽपि प्रकृतार्थे चोदनावाक्यात् बोधो न जायत इति (3) उत जातोऽपि प्रमाणान्तरेण बाध्यत इति (4) उत अबाधितोऽपि वा

निरर्थक इति (5) उत सार्थकत्वेऽपि वा प्रामाण्यहेतुविहीन इति।

तत्र न प्रथमपक्षः क्षोदक्षमः - शब्दार्थसम्बन्धस्य नित्यत्वात्। तदाह सूत्रकार· 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति। औत्पत्तिक नित्य इति यावत्। उत्पत्तिस्तावत् स्वभाव.। तथा च स्वाभाविकः शब्दार्थसम्बन्ध इत्यर्थः फलति। अत्र उत्पत्तिशब्दार्थम् [7]'उत्पत्तिः - कञ्चित् कालमतिक्रम्य पत्तिः-प्राप्ति·; पूर्वकालासत्त्वविशिष्टसत्त्वम्' इति सेश्वरमीमांसाव्याख्याकारै· अभिनवदेशिकवीरराघवाचार्यैः सुनिपुणं व्यवारि।

## औत्पत्तिकशब्दार्थविचारः

अत्रेदं तत्त्वम् - [8]'औत्पत्तिक इति नित्यं ब्रूमः' इति शाबरभाष्यवचनानुसारेण औत्पत्तिकत्वं नाम नित्यत्वमिति प्रतीयते। परं तु स च अर्थः न वाच्यभूत इति प्रत्येतव्यम्। लक्षणयैव तथा बोधोपपत्तेः। तर्हि वाच्यार्थं परित्यज्य लक्ष्यार्थादरे किं तात्पर्यमिति चेत्-ब्रूमः-कौमारिलाः, प्राभाकराश्चमीमांसकाः शब्दस्य अर्थस्य च नित्यत्वं अनुमन्यन्ते। तयोः शब्दार्थयोः सम्बन्धमपि नित्यमिति एतत्सूत्रकथनमिति आशेरते ते। एते सेश्वरमीमांसकास्तु शब्दस्य अर्थस्य च नित्यत्वं नानुमन्यन्ते। अत एव तयोस्सम्बन्धस्य स्वाभाविकत्वं कथनीयमिति औत्पत्तिको नाम स्वाभाविक इति वर्णितम्। शब्दार्थयोः विद्यमानस्य प्रत्याय्य-प्रत्यायकभावलक्षणस्य सम्बन्धस्य स्वाभाविकत्वं तु लोकप्रसिद्धम्। न च तयोस्सम्बन्धः स्वभावसिद्धवाच्यवाचकभावसम्बन्धात् भिन्नः। स च सम्बन्धः ईश्वरसंकेतरूपः इति नैयायिकमतम्। तन्न मनोरमम्। यतः निरीश्वरवादिनामपि लोके व्यवहारदर्शनात् तदनुसारं कल्पनमेव युक्तत्वात्। अपि च पदपदार्थयोरेव सम्बन्धमनुमन्यन्ते तार्किकाः, न तु वाक्यवाक्यार्थयोस्सम्बन्धम्। वाक्यवाक्यार्थयोरपि सम्बन्धदर्शनात् (वाच्यवाचकभावरूपस्य सम्बन्धस्य दर्शनात्) तार्किकमतं न युक्तम्।

अपि च कौमारिलाः शब्दस्य द्रव्यत्वं नित्यत्वं च अङ्गीकुर्वन्ति। प्राभाकरास्तु शब्दस्य आकाशगुणत्वं, नित्यत्वं च स्वीकुर्वन्ति। वयं तु शब्द· अनित्य. अद्रव्यविशेषश्चेति कथयाम । शब्दस्य अनित्यत्वं देवताधिकरण-श्रीभाष्यादौ

स्पष्टम् । शब्दस्य अद्रव्यत्वं, सर्वभूताश्रितत्वं, अनित्यत्वं चेत्येतत्सर्वं तत्त्वमुक्ताकलापसर्वार्थसिद्धिन्यायसिद्धाञ्जनादि ग्रन्थेषु प्रपञ्चितं, विस्तरभिया नात्र प्रतन्यते।

## चोदनावाक्यात् बोधो जायत एवेति प्रदर्शनम्

नापि चोदनावाक्यात् बोधो नोत्पद्यत इति कल्पनं युक्तम्। तदाह सूत्रकारः 'तस्य ज्ञानमुपेदश' इति - तस्य - चोदनालक्षणस्य धर्मस्य ज्ञानं - निश्चायकं उपदेशः - चोदनारूपः - परमात्मोपदेश इति यावत् इति सूत्रार्थः । उपदेशस्तु इष्टानिष्टप्राप्तिपरिहारोपायविषयः । स च परमात्मोपदेश एव भवति । स एव चोदनाशब्दवाच्य· । तथा च धर्मस्य निमित्तं ज्ञापकम् वा परमात्मोपदेशभूतं सत् चोदनावाक्यमवतिष्ठत इति तात्पर्यं सिद्ध्यति सूत्रस्य । अतः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति चोदनावाक्यात् नियतबोधदर्शनात् चोदनावाक्यात् प्रत्यय एव न जायत इति चोदनायाः अप्रामाण्यनिर्वाहस्तु न युक्तिसहः।

## चोदनावाक्यजन्यबोधो निराबाध इति कथनम्

न च चोदनावाक्यात् प्रतीतोऽर्थः कदाचित् केनचित् प्रमाणान्तरेण बाध्यते। बाधकप्रमाणस्य अनुपलम्भात् । तदाह सूत्रकार. 'अव्यतिरेकश्च' इति । शुक्तिरजतस्थले यथा प्रबलप्रमाणेन भ्रमज्ञानं बाध्यते, न तथा चोदनावाक्यार्थो बाध्यते । न व्यतिरेक. अव्यतिरेकः । व्यतिरेकत्वं च प्रतीयमानादाकारात् विरुद्धाकारान्तरयोगित्वम् । तद्राहित्यं चाव्यतिरेकपदार्थः । अथवा व्यतिरेकः प्रमाणान्तरेण बाधितविषयत्वम् । तद्राहित्यमेव अव्यतिरेकः । स च उपदेशस्य विशेषणं भवति। चोदनावाक्यार्थस्तु प्रमाणान्तरेण बाधितविषयो नास्ति। न च ज्योतिष्टोमवाक्यार्थ· ज्योतिष्टोमयागस्य स्वर्गादिश्रेयस्साधनत्वरूपः अलौकिकार्थः प्रत्यक्षेण अनुमानेन वा बाध्यते। न च तद्विपरीतार्थबोधकं वाक्यमपि दृश्यत इति शब्दोऽपि बाधकप्रमाणं तत्र न भवति। अत एव अव्यतिरेक इति सूत्रकारेणोक्तम्। एवमेव सेश्वरमीमांसायां सूत्रार्थमुपपाद्य उक्तार्थस्य द्रढीकरणाय बहुविचारोऽपि प्रपञ्चितः श्रीमद्वेदान्तदेशिकवर्यैः ।

## मीमांसापादुकारीत्या अधिकरणविचारः

पूर्वोक्त निरूपणात् यत्र किञ्चित् वैशिष्ट्यं प्रतिभाति, तदेवात्र मीमांसापादुकानुसारं प्रस्तोष्यामः ।

चोदनासूत्रे चोदना एव धर्मे प्रमाणम्, चोदना धर्मे प्रमाणमेवेति अर्थद्वयं प्रतिज्ञातम् । तत्र प्रथमं प्रतिज्ञानं चोदनैव धर्मे प्रमाणमिति तत् सत्सूत्रे न्यरूपि । द्वितीयं त्वत्र उपपादयिष्यते । अतः चोदनायाः प्रामाण्यं नास्तीति आपतितस्य पूर्वपक्षस्य निराकरणमेवास्याधिकरणस्य प्रयोजनमिति आशेरते मीमांसापादुका-कृतः - यथा -

**[9]"प्रत्यक्षप्रत्यपेक्षान्वयतदितरयोरत्र भङ्गात् तदुत्थं**
**मानं नात्रानुमानं तदनुविहतितो वाक्यमत्राप्रमाणम् ।**
**इत्याशङ्कां विरोद्धुं परमिह विदधे सूत्रमौत्पत्तिकाद्यं**
**कर्ता शारीरकस्य स्वगुरुरपि वदत्येतदित्याह भक्त्या ॥"**

इति । चोदनायाः प्रामाण्यं वेदस्य अपौरुषेयत्वकृतमिति तत्र स्वगुरोः शारीरकशास्त्रप्रणेतुः बादरायणमहर्षेरपि अनुमतिरस्तीति जैमिनिः 'गुरुं प्रकाशयेद्धीमान्' इति स्मृत्यनुसारं 'बादरायणस्यानपेक्षत्वात्' इति सूत्रे, सप्रश्रयं गुरो र्नाम सङ्कीर्तयति । [10]"ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यादित्याय, स च वसिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये, स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवान् इति" इति न्यायरत्नाकरे[11] पार्थसारथिमिश्रैरपिजैमिनिमहर्षि. बादरायणमहर्षेश्शिष्य इति उट्टङ्कितम् ।

## दोषराहित्यं प्रामाण्यहेतुरिति प्रदर्शनम्

चोदनायाः प्रामाण्यं च स्वतः सम्भवति । ज्ञानानां च अप्रामाण्यं दोषजन्यत्वग्रह एव भवति । प्रामाण्यं तु तद्राहित्ये भवतीति सम्प्रदायः । न च लोके आप्तवाक्यस्य प्रामाण्यं तद्गतगुणाधीनमिति नियमेन दर्शनात् सर्वत्र प्रामाण्यग्रहे गुणज्ञानं हेतुः, अप्रामाण्यग्रहे तु दोषग्रह इत्येवास्तामिति वाच्यम्, वेदस्यापौरुषेयत्वात्

तज्जन्यार्थज्ञानस्य वक्तृगुणाधीनत्वविरहात् दोषाभाव एव सर्वत्र प्रामाण्यग्रहे हेतुरिति स्वीकार्यम्।

## ज्ञानगतप्रामाण्यस्य स्वतस्त्वविचारः

अस्मत्सिद्धान्ते कौमारिलप्राभाकरादिप्रस्थाने च ज्ञानगतं प्रमात्वं स्वत एवोत्पद्यते, ज्ञायते चेति स्वीक्रियते। अप्रामाण्यं तु परत इति सिद्धान्त.। तथा हि - यथा वस्तु वर्तते तथा तद्ग्राहकत्वं ज्ञानानां स्वभावः। यथा च चक्षुषः अङ्गुल्यवष्टम्भादिदोषाभावे ऋजुप्रभाप्रसरहेतुत्वम्। तथा च ज्ञानानां यथावस्थितार्थविषयकत्वं सामान्यम्। भ्रान्तस्यापि धर्मिणि अभ्रान्तत्वात्। अत. वह्नेः दाहकत्ववत् ज्ञानगतप्रमात्वमपि स्वतस्सिद्धम्। भ्रमादेरप्रमात्वं तु दोषवशात् युज्यते। किं च परमात्मज्ञाने प्रमात्वस्य प्रयोजकः दोषाभाव एवेति वक्तव्यम्। तत्र (परमात्मज्ञाने) यदि दोषाभावः प्रमात्वहेतुः, तर्हि सर्वत्र स एव भवत्विति न गुणो हेतुः प्रमात्वस्य। तथा च दोषाभावातिरिक्तकारणनिरपेक्षत्वमेव प्रामाण्योत्पत्तौ स्वतस्त्वं भवति। अतः यथा कारणदोषविरहेण नित्येश्वरज्ञानस्य प्रामाण्यं तथैव वेदवाक्यस्यापि निर्दोषवाक्यजनितत्वात् प्रामाण्यं सुस्थम्। अयं च सिद्धान्तः 'बादरायणस्यानपेक्षत्वात्' इति सूत्रोल्लेखानुसारं साम्प्रदायिक इति गम्यते। प्रामाण्यस्य स्वतस्त्ववादे अन्ये च विशेषविचाराः तत्त्वमुक्ताकलापे सेश्वर-मीमांसायां च दरीदृश्यन्ते, ये च बहुग्रन्थगर्भिता इति इतो विरम्यते अस्माभिः। अमुमेव प्रामाण्यवादसिद्धान्तं मीमांसापादुकायां

[12]"**निर्बाधास्सन्ति बोधाः कति कति जगति त्यक्तदोषप्रसङ्गाः**
**दोषोपेतेऽपि धर्मिप्रभृतिषु नियतः स्थापितः सत्यभावः।**
**तस्मादौत्सर्गिकत्वं मुनिरमत धियां मानभावस्य युक्त्या**
**वेदोत्पन्नेऽपि नित्येश्वरमतिनयतो दोषहान्यैव तत् स्यात्॥"**

इति।

प्रादीदृशत् श्रीमद्वेङ्कटनाथार्यः। एवमेव वेदवाक्यस्य प्रामाण्य वक्तृगुणनिरपेक्षितमिति निरदिशदाचार्य - यथा

[13]"**नित्ये वेदे न वक्तु र्गुण इति स कथं मानमित्यप्ययुक्तं**
**वक्तुस्सत्त्वे हि वाचामपवदनभिया तद्गुणोऽन्वेषणीयः ।**
**नित्यज्ञानं च हेतो र्न भवति गुणतः, स्वीकृतं तच्चमानं**
**तादृग्विज्ञानमात्मन्यवितथविषयं वर्णितं क्वापि बोधे ॥**" इति ।

एतदेव 'तत् प्रमाणं बादरायणस्य अनपेक्षत्वादि'ति जैमिनिः सूत्रयति ।

## औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति सूत्रभागस्य अभिनिरूपणम्

औत्पत्तिकसूत्रे शब्दार्थयोस्सम्बन्धः औत्पत्तिक इत्यभिप्रेतम् । तत्र शब्दशब्देन केवलं साधुशब्दा एव ग्राह्याः, न तु अपभ्रंशादयः । अपभ्रंशादिषु गावीगोणीत्यादिषु शक्तिभ्रम एव स्वीकारदर्शनात् । शब्दानां साधुत्वं नाम पाणिन्यादिव्याकरणाधीनसंस्कारविशिष्टत्वम् । एतेन कल्पितशब्दानामपि शब्दशब्देनात्र न ग्रहणं कार्यमिति प्राप्तम् । औत्पत्तिकशब्दस्य अर्थस्य च उत्पत्तिकालात् प्रभृति सम्बन्धस्तिष्ठतीत्यर्थस्सूचितः । आप्रलयावस्थायित्वमेव औत्पत्तिकत्वमिति ब्रूमः । शब्दाश्रयस्य भूतादेरपि तथात्वात् शब्दस्यापि तथास्वीकारः अवश्यापेक्षो भवति । अनेन शब्दस्य नित्यत्ववादिनः कौमारिलाः, प्राभाकराः वैयाकरणाश्च दूषिता इति मन्तव्यम् । तदिदमेवं समग्राहि मीमांसापादुकाकृता

[14]"**पाणिन्यादिप्रवाहैरसदितरतया स्थापितः शब्दराशिः**
**शब्दस्येत्युद्गृहीतो न खलु सहजसम्बन्धशाली तदन्यः ।**
**गावीगोण्यादिशब्दास्त्वलसजडमुखैरर्भकालापनीत्या**
**कीर्त्यन्ते तत्तदर्थेष्विति न खलु ततस्तत्र तच्छक्तिसिद्धिः ॥**"

इति । अतः शब्दार्थयोस्सम्बन्धस्य औत्पत्तिकत्वमनेन सूत्रेण प्रतिपादितम् इति प्रतीमः । अयं च सम्बन्धः वाच्यवाचकभावरूप इति प्राक् अवादिष्म । तत्र सम्बन्ध एव दुर्घट इति वादस्तु दुर्निरूप इति वयं ब्रूमः । अनुबन्धिचतुष्टयनिरूपणावसरे सम्बन्धकथनस्य प्रामाणिकत्वं प्राक् अस्माभिः प्रादर्शि । तद्वदत्रापि शब्दार्थयोस्सम्बन्धः प्रामाणिक इत्याशेरते मीमांसापादुकाकृतः-

[15]''बन्धश्चेद्बन्धशून्यः कथमिव घटयेत् बन्धवत्वेऽनवस्था
मैवं सम्बन्धमात्रस्थितिमपलपतः स्वोक्ति बाधादिदोषात्।
इष्टश्चेद्दूषकत्व प्रभृतिरपि मृषा सिद्धमिष्टं परेषां
दृष्टः कल्प्यः श्रुतो वा न तदपलपितुं शक्यते सम्प्रयोगः ॥''

इति।

## तस्य ज्ञानमुपदेश इति सूत्रखण्डार्थप्रदर्शनम्

अथ तस्य ज्ञानमुपदेश इति सूत्रशेषस्य अर्थः क इति चेदुच्यते। त वेदप्रतिपाद्यस्य धर्मस्य ज्ञानं निश्चायकं उपदेशः - चोदना, भगवदुपदेशो इत्यर्थः। वेदे प्रामाण्यं तदर्थे च धर्मत्वं च पश्यन्ति प्रमाणशरणाः महाजनाः। त चैवं महाजनपरिग्रहे सति धर्मस्य निश्चयहेतुः भगवदुपदेशरूपं चोदनावाक्यं कथ भवेत्? तदिदमाहुः -

[16]''वेदे तच्चोदिते च त्यजदुपधिमहालोकसङ्गृह्यमाणे
मानत्वं धर्मता च स्थितमपि कुरुतां नाम नित्यं तथाऽपि।
एतस्येत्येतदित्थं हितमहितमिदं त्वेवमित्यादि बोधः
तत्तद्वेदोपदेशप्रभव इति वदत्यत्र तस्यादिशब्दः ॥'' इति

## उपदेशशब्दार्थविचारः

उपदेशशब्दस्तु परमात्मोपदेशभूतं चोदनावाक्यं बोधयति। वेदस्तु भग उपदेशभूत एव। न च विष्णुस्मृतिः, पञ्चरात्रं, गीता इत्यादयोऽपि विष्णूक्तत्वसाम कथं स्मृतिशब्दप्रयोगः एतेषु ग्रन्थेषु युक्तः इति वाच्यम्, यथा वेदमुपदिशति त स्मृत्यादिकमपि तदा तदा उपदिष्टवान् भगवान्। न च तस्य सर्वद्र स्मृतिज्ञानमपेक्षितम्। तथापि क्वचित् स्मृतिशब्दप्रयोगः मन्वादिस्मृति विष्णुस्मृत्यादिग्रन्थे वेदोक्तार्थप्रतिपादकत्वसाम्यात् भवति। अपि च स्मृतिग्र विद्यमानानि वाक्यानि स्वोक्तिद्रढीकरणाय वेदोक्तेः स्मरणं दृश्यते। न च तथा अन्यस्य वचनस्य स्मरणमुपलभ्यते। अत एव भगवदुक्तिसाम्ये विष्णुस्मृत्यादिग्रन्थेषु स्मृतिशब्दप्रयोग. सङ्गाघटीति। अपि च स्मृत्यादिग्रन् अभिन्नक्रमनियति वाक्यानां विद्यते। वेदे तु सर्वदा समानक्रमनियतिर्दृश्यत

वेदात् स्मृतिग्रन्थस्य विलक्षणतादर्शनात् । एतच्च श्लोकद्वयेन निरूपितं मीमांसापादुकायाम् - यथा -

[17]"**नित्यप्रत्यक्षसिद्धं निगममितरदप्याह चेत् विश्वकर्ता**
**स्मर्तृत्वं तस्य न स्यात् क्वचिदितरसमं तद्गिरां च स्मृतीनाम् ।**
**मा भूदेतत् तथाऽपि स्मरतिरिह भवेत् क्षेत्रसामादिनीत्या**
**वेदार्थव्यञ्जकत्वात् स्मृतिरिति च वचस्तेन सञ्ज्ञाघटीति ।।"** इति ।

[18]"**किञ्चाम्नायान् अभिन्नक्रमनियमतयाऽध्यापयेच्छात्रपूर्वान्**
**गीतादिग्रन्थराशिं क्रमविघटनया तत्र तत्र प्रयुङ्क्ते ।**
**तस्माद्विष्णुस्मृति र्या तदितरदपि यन्नित्यसर्वज्ञशास्त्रं**
**प्रख्यातं भारतादौ भवति तदखिलं वेदराशे र्विभक्तम् ।।"**

इति च । तथा च 'श्रुति.स्मृति र्ममैवाज्ञा' 'तस्माच्छास्त्रं प्रमाणं ते' इत्यादिप्रमाणसिद्धं वेदतदनुरोधिस्मृत्यादि शास्त्रमेव अत्र उपदेशशब्देन कथ्यत इति सिद्ध्यति । वेदविरोधः यत्र स्मृतिग्रन्थेऽपि लक्ष्यते तत्र स्मृति र्न प्रमाणपदं भजत इति "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति प्रमाणसिद्धम् । एवं च सति कथं नितरां श्रुतिविरुद्धस्य बौद्धादिग्रन्थस्य प्रामाण्यं स्वीकर्तुं योग्यं भवति ?

## जैनग्रन्थानादरे युक्तिप्रदर्शनम्

अत एव जैनग्रन्थस्यापि अनादरः कार्यः वेदोक्तविरुद्धार्थप्रतिपादकत्वादिति मीमांसापादुकायां निरूपितम् । तदुक्तम् -

[19]"**वश्याकृष्ट्यादिषट्कप्रतिकृतिलपनप्रस्तरस्फोटनाद्यं**
**दृष्टं जैनादिशास्त्रेष्विति कुहकपथः क्षुद्रविस्रम्भयोग्यः ।**
**बाधे दोषे च दृष्टे बडिशवदनवर्त्यामिषन्यायविद्भिः**
**मन्वाद्याप्तोपदेश प्रणिहितमतिभिस्तेषु वाचाऽपि नार्चा ।।"** इति ।

[20]"**त्यक्तानां वेदनिष्ठैरगतिपरवतां त्यागडम्भास्थितानां**
**मूढानां क्षुद्रतर्कैर्मुनिसमघटिकाभोजनौत्सुक्यभाजाम् ।**
**तत्तद्बाह्यागमेषु भ्रमदनुगधियां भण्डसम्मोहितानां**
**स्वैराचारार्थिनां च स्वकहृदयविसंवादशारः प्रवेशः ।।"** इति च ।

अत्रेदमाकूतम् - वशीकरणम्, आकर्षणम्, आवेशनम्, स्तम्भनम्, उच्चाटनं, मारणमिति मांत्रिकलोकप्रसिद्धम् । एतदेव जैनादिग्रन्थेषु समादृतं भवति । तै. आदित्यस्तम्भनं पाषाणपाटनं शाखाभङ्गः, भूतावेशः, प्रतिमाजल्पनं, धातुवादश्चेति षट् उपायाः कीर्त्यन्ते । एतान् स्वीकृत्य अहिंसायाः प्राधान्यं वदतां तेषां प्रवृत्तौ मत्स्यग्रहणप्रवृत्तैः मांसनिक्षेपवत् आस्तिकजनवशीकरणेन हिंसनमेव परममुद्देश्यं वर्तते। अत एव मन्वादिकृतस्मृतिशरणाः वैदिकाः वाङ्मात्रेणापि तान् नार्चयेयुः । तदुक्तं[21]"हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" इति।

अपि च जैनमते प्रविष्टाः कीदृशा? इति चेद् ब्रूम· - वैदिकमतभ्रष्टाः, गत्यन्तराभावात् त्यागडम्भादिमार्गेरताः, कुतर्काधीनमोहभाजः, सप्तघटिकापरिमिति काले अत्यन्तं शीघ्रमेव भोजनावाप्तिरिति तत्रोत्सुकताभाजश्च ये भवन्ति ते एव जैनमते प्रविशन्ति । एते तु निर्लज्जाः स्वेष्टसिद्धिपूरणं यावत् स्वमतमनुवर्तमानाः अन्यैरूपेक्ष्यमाणत्वेऽपि तत्र तत्र वेदनिन्दां कुर्वन्तः चरन्ति । एतादृशस्य जैनस्य ग्रन्थः कथं उपदेशशब्दवाच्यो भवितुमर्हेत्? [22]'कुहकवञ्चिताः तान् परिगृह्णन्ति' इति द्वितीयस्तबकतृतीयकारिकाव्याख्यावसरे न्यायकुसुमाञ्जलौ एतान् वञ्चकत्वेन वर्णयन्त्युदयनाचार्याः ।

न च बौद्धादिग्रन्थानामप्रामाण्ये सति कथं भगवान् बुद्धावतारं कृत्वा तन्मतं प्रवर्तयामासेति वाच्यम्, साधुपरित्राणार्थं असुरान् मोहयितुकामः भगवान् स्वयं बुद्धावतारं स्वीकृत्य वैदिकमतात् अन्यत्र असुरान् पातयित्वा मोहयामास । तथैव पुराणादिवचनदर्शनात् । अतस्सिद्धं चोदनावाक्यं भगवदुपदेशो वा उपदेशशब्दवाच्यो भवति, नान्यदिति ।

## 'अव्यतिरेकश्चार्थेऽनुपलब्धे' इति सूत्रशेषार्थनिरूपणम्

तथा च चोदनावाक्यं भगवदुपदेशो वा धर्मं प्रति निमित्त भवतीति सिद्धम् । तच्च न शुक्तिरजतादिवत् कदाऽपि बाधितं भवति । अत्यन्तम् अनुलभ्यमानेऽर्थे शास्त्रस्यैव प्रामाण्यस्वीकारौचित्यात् । धर्मोऽयं न लौकिक. । तत्र शास्त्रमेव प्रमाणं भवितुमर्हति । तच्च न बाधितं भवति। ज्योतिष्टोमादियागः स्वर्गादिश्रेयस्साधन भवतीत्यत्र न किंचिद् बाधकं प्रमाणं उपलभामहे । अत एव सूत्रितं

'अव्यतिरेकश्चार्थेऽनुपलब्धे' इति । न च 'यजमानः प्रस्तरः' 'आदित्यो यूप. इत्यादिप्रयोगः प्रत्यक्षबाधितो दृश्यत इति वाच्यम्, गौणीवृत्त्या तत्र अर्थवर्णनात् तच्च वर्णनं तत्सिद्धिपेटिकायां कृतं पूर्वमीमांसायाम् । अतो न विरोध. तदिदं प्रा मीमांसापादुकाकारः

[23]"**बाधे वेदोदितानां भवति विफलता सिद्धिरस्त्यन्यतश्चेत्**
**नैष्फल्यं वेदवाचां दिनकरकिरणैः दर्शिते किं प्रदीपैः ।**
**तस्मात् बाधोपलम्भव्यपनयनवचः सार्थकं वेदवेद्ये**
**द्वेधा बाह्यान् प्रवृत्तान् दमयितुमनसः सङ्ग्रहो ह्येषसारः ॥"**

इति । तत् प्रमाणं बादरायणस्यानपेक्षत्वादित्यस्यार्थनिरूपणं पूर्वमेव कृतस्माभि· तस्मात् चोदनाजनितप्रत्ययः श्रेयस्साधनार्थप्रकाशरूप· कारणदोषबाधकप्रत्यया भावात् अनपोदितप्रामाण्यः अवतिष्ठते इति सिद्धम् ।

## चित्रादिचोदनासु आक्षेपपरिहारौ

नन्वेवं सति [24]'चित्रया यजेत पशुकामः' इत्यादिवाक्यानां ऐहिकफलान प्रत्यक्षादिभिरसंवादेन विसंवादेन च प्रामाण्यं न घटते । अत एव [25]'शब्दस्तु न प्रमाणम् । कुतः? अनिमित्तं विद्यमानोपलम्भनत्वात्' इति शाबरभाष्ये शब्दस्य धर्मं प्रति अनिमित्तत्वमाशङ्कितम् । अस्यायं भावः इन्द्रियाणि हि विद्यमानमर्थमुपलभन्त एव । न च चित्रेष्ट्यनन्तरम् उत्पन्ना पशवश्चक्षुषा उपलभ्यन्ते यदा चोपलभ्यन्ते न तदा चित्रेष्टिरिति चित्रावाक्यं प्रत्यक्षविसंवादादप्रमाणम् । चित्र न पशुफला स्वाव्यवहितोत्तरकाले स्वफलाजनकत्वात् स्नानभोजनादिवत् । यत् यस्य साधनं तत् स्वकाल एव तत् (फलं) साधयति यथा मर्दनम् । मर्दनादि स्वकाले एव सुखादि साधयति। न तथा चित्रादिकम् । एवमत्र अनुमानान्तरमप्यूह्यम् - यथ 'चित्रया यजेत' इत्यादिवाक्यं न प्रमाणं योग्यानुलब्धिबाधितार्थकत्वात् नद्यास्तीरे पञ्चफलानि सन्तीति विप्रलिप्सु वाक्यवदिति । यद्यपि अनुपलब्धेऽर्थे शब्द प्रमाणमिति स्वर्गादिफलविशिष्टचोदना प्रमाणं स्यात् तथापि पशुकामचोदनाः कर्मानन्तरमेव पश्वादीनामनुपलब्धिः यत्र तत्र चोदनायाः प्रामाण्यं न प्रतितिष्ठति किं च ऐहिकफलविषये बाधितार्थकस्य वेदस्य आमुष्मिकस्वर्गादिफलविषयेऽपि

प्रमापकत्वं न सम्भवतीति सिद्धम्। तदुक्तं शाबरे भाष्ये [26]'एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे।' इति। किं च ज्योतिष्टोमादि यागक्रियायाः विनष्टत्वेऽपि जन्मान्तरभाविस्वर्गं प्रति अपूर्वद्वारा ज्योतिष्टोमादेः साधनत्वं युक्तं समाश्रयितुम्। अपूर्वं तु चिरस्थायीति कारणस्याविनाशात् सम्भवति कालान्तरे (जन्मान्तरे) स्वर्गावाप्तिः। पश्वादयस्तु अनन्तरमपि सम्भवन्तीति तत्साधनत्वेन चोद्यमानानां चित्रादीनां शास्त्रार्थावधारणसमये अपूर्वद्वारसमाश्रयणे निदानं न किंचिदपि वर्तत इति स्वरूपेणैव फलसाधनत्वं चित्रादे र्वक्तव्यम्। तथा च अनन्तरमेव फलेन भवितव्यम्। तदुक्तं वार्तिके -

[27]"**कालान्तरानुपादानात् कर्मस्वाभाव्यतोऽपि च।**
**चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम्।।**"

इति। परं तु चित्रेष्ट्यनुष्ठानानन्तरं पश्वादि फलप्राप्तेरदर्शनात् चोदना न प्रमाणपदवीं भजते।

## चित्राक्षेपस्य परिहारः

अत्रेत्थं समाधीयते - न हि चित्रादिचोदनासु बाधितः प्रत्ययो दृश्यते। चित्रया यजेत पशुकाम इत्यत्र पशुफलं प्रति चित्रेष्टेस्साधनत्वमेव बोधितम्, न तु कर्मानन्तर्यमपि। न च मर्दनदृष्टान्तेन आनन्तर्यमपि विवक्षितमत्रेति वाच्यम् लोकेऽपि कानिचित् कर्माणि विप्रकृष्टफलानि दृश्यन्ते। न हि उप्तमात्रेण कृष्यादौ फलोदयो दृश्यते। कानिचित् कर्माणि देशकालाद्यपेक्षत्वेन विलम्बेन फल साधयन्ति। कानिचिच्च विरुद्धफलेन कर्मान्तरेण लब्धवृत्तिना अर्धभुक्तेन प्रतिबन्धात् स्वफलम् अददती अवतिष्ठन्ते। अतः क्रियानन्तरमेव फलमिति न नियमः। तथ च कालान्तरेऽपि कर्माभावेऽपि फलोदये अनुपपत्तिविरहात् तत्र श्रुतकर्मफलयो हेतुसाध्यभावस्य निर्वाहाय द्वारकल्पनमवश्यं कर्तव्यं भवति। यथ स्वर्गफलचोदनासु अपूर्वस्य कल्पनम्, तद्वदत्रापीति भाव्यम्। आनन्तर्यं चोदनय नात्र चोदितमिति श्लोकवार्तिकमपि प्रमाणयति। यथा -

[28]"**आनन्तर्यश्रुतिश्चात्र सामर्थ्यादपि नेष्यते।**
**नाविशेषा फलोत्पत्तिः कर्मणा नोपपद्यते।।**

कर्मणां चापि वैचित्र्याद् देशकालाद्यपेक्षणात् ।
कस्यचिच्चार्धभुक्तत्वात् कर्मान्यत् प्रतिबध्यते ।।

तेनानन्तर्यनिष्पत्तिः फलस्येहाप्रमाणिका ।
प्रत्यक्षादिविसंवादो न शब्दे दोषमासजेत् ।।

आनन्तर्यविसंवादो नाविशेषप्रवर्तिनीम् ।
चोदनां बाधितुं युक्तः स्फुटात् विषयभेदतः ।।'' इति ।

यत्तूक्तम् अपूर्वकल्पनं चित्रादिचोदनासु न युज्यत इति तदपेशलम् - चित्रेष्टिकर्मानुष्ठानानन्तरं फलस्य अदर्शनात् स्वयं शास्त्रार्थनिश्चयदशायां द्वारकल्पनोपपत्तेः । अथवा चित्रादिकर्म साक्षादेव पशुफलं प्रति साधनमिति कश्चित् कर्म अनुष्ठाय फलाय तिष्ठति । विलम्बेन फले प्राप्ते सति स निश्चिनोति यत् अत्र साक्षात् चित्राकर्म न फलसाधनं, परं तु अपूर्वद्वारा फलसाधनमिति । तच्च अपूर्वं भगवत्प्रीतिरेवेति अस्माकं सिद्धान्तः । यथा राजसेवायां राज्ञः प्रीतिः द्वारभूता सती भृत्यस्य अभीष्टं साधयति, तद्वदत्रापीति भाव्यम् ।

अपि च शास्त्रार्थग्रहणकाल एव अर्थात् 'चित्रया यजेत पशुकाम' इति वाक्यार्थग्रहणकाल एव पशुफलं प्रति चित्रायागस्य साधनताध्यवसायकाले द्वारभूतस्य अपूर्वस्यापि कल्पनं करोति अनुष्ठाता । तथा हि - चित्रायागस्तु न क्षणमात्रसाध्यो यागः । अपि तु पूर्वापरानेकाङ्गविशिष्टतया यागस्तु बहुकालसाध्यः । तत्र क्रामिकानामङ्गानां तेषां मिथो वा अङ्गिना सह वा मेलनं कथं भवितुमर्हति? तेषामङ्गानां क्षणिकत्वेन तदा तदा नाशात् । तस्मात् अदृष्टद्वारमन्तरेण पशुफलोत्पत्त्यसम्भवः । अपि च पश्वादिफलापेक्षा भोगार्था भवति । स च भोगः यागसाध्यो यावान्, तावति यागस्य कारणत्वोपपत्तिः तावत्कालानुवृत्तापूर्वास्वीकारे न भवति । तच्च अपूर्वं भगवत्प्रीतिरेव । [29]'फलमत उपपत्तेः' [30]'श्रुतत्वाच्च' इत्यादौ भगवत्प्रीतेरेव अपूर्वशब्दवाच्यत्व कथनात् । न च भगवत्प्रीतिः तदानीं किमर्थं चित्रायागसमनन्तरमेव फलं न ददातीति वाच्यम्, देशकालावस्थादिनियतत्वेन फलदानोपपत्तेः, राजप्रीत्यादिवत् । प्रतिबन्धरहितं सगुणं कर्म यदा भवति तदा समनन्तरमेव फलदर्शनं युक्तम् । यथा 'कारीर्या वृष्टिकामो यजेत' इत्यत्र

वृष्टिफलप्राप्तिः। यदि क्वचित् फलं न दृश्यते, तत्र कर्मकर्तृसाधनानां वैगुण्यमाश्रीयत इति न किंचिदपहीयते। अतः चित्राचोदना न अप्रमाणम् इति सिद्धम्। अयमेवार्थ मीमांसापादुकायां चतुर्भिः पद्यैः सुनिपुणं वर्णितः - यथा -

[31]"चित्रादीनां समाप्तौ न भवति पशुवृष्ट्याद्यभीष्टं नियत्या
स्वर्गादेः का कथा स्यादिति किल कलयन्त्यत्र लोकायतस्थाः।
दृष्टोपाये फलानामनियतिवदिहाप्यस्तु किं न स्वतः स्यात्
धर्माणां कर्मकर्तृप्रभृतिविगुणता तत्फलानाप्तिहेतुः ॥"

[32]"यागस्वर्गादिमध्ये यदि भवति किमप्यास्तिकानामपूर्वं
चित्रापश्वादिमध्ये न तदिह घटते तत्क्षणोत्पत्तियोगात्।
नो खल्वन्यत्र देहे परमिह पशुवृष्ट्यादिलाभाय यत्नः
बाधे चैवं समस्ता श्रुतिरनृतवचस्तन्न बाधव्यपोहात् ॥"

[33]"सद्यः सिद्धिर्यदा स्यादिह, न खलु तदा बाधशङ्कावकाशो
विघ्नैस्सिद्धौ विलम्बः कृषिवदिह भवेदन्यथाऽतिप्रसङ्गात्।
तेनैवापूर्वमन्तर्भवति नरपतिप्रीणनन्यायदृष्ट्या
वैगुण्योत्थे विलम्बे विहति विहतता शेषमप्येवमूह्यम् ॥"

[34]"नानाभूतैर्निजाङ्गैः क्रमसमुपनतैरङ्गिसिद्धावपूर्वं
तत्तन्निष्पादनीयं करणसमुदयात् पूर्वमेवाभ्युपेत्यम्।
भोगश्चित्रादिसाध्यो बहुदिवससमासदर्थनीयश्च मध्ये
त्यक्त्वाऽपूर्वं न सिद्ध्येदपि च सुनियताऽदृष्टहेतूपनीतिः ॥"

इति। अतस्सिद्धं यथा अनुपलब्धेऽर्थे उपदेशः प्रमाणं भवति, तथैव प्रत्यक्षोपलम्भेऽपि प्रमाणमिति।

## चित्राफलमैहिकम् आमुष्मिकं वेत्यत्र अनियम इत्युपपादनम्

इदं तु तत्त्वम्। चित्रादिचोदनासु आनन्तर्यं न विवक्षितम्। तता सति चित्राफल किमिहैव जन्मनि सम्भवति उत जन्मान्तरे इति चेदत्र न कश्चिदस्ति नियम नैयायिकास्तु चित्राफलम् ऐहिकमेव न आमुष्मिकमिति वर्णयन्ति। यदि क्वचि

तत्कर्मकारिणां फलं नोपलभ्यते, तत्र कर्मकर्तृसाधनादिवैगुण्यं निदानमिति ते वर्णयन्ति । अत एवोक्तं न्यायदर्शने [35]'न कर्मकर्तृसाधनवैगुण्यात्' इति । मीमांसाकास्तु पक्षमिमं नाङ्गीकुर्वन्ति । ऐहिकफलत्वमेव चित्रादीनां स्वीकारे अकृतकर्मणामपि पश्वादिफलं यत्र सेत्स्यति तत्र फलस्य निर्निमित्तत्वापत्तिप्रसङ्गः । अतः जन्मान्तरसम्भवोऽपि पश्वादिफलस्य स्वीकारः अनिवार्यः । न चैवं स्वर्गादिफलस्यापि चित्रादिफलवत् कालविशेषाश्रवणेन अनियमः स्यादिति वाच्यम्, षष्ठाद्ये स्वर्गादेरामुष्मिकत्वसाधनात् । तदुक्तं चित्रक्षेपपरिहार श्लोकवार्तिके - [36]'स्वर्गस्यामुष्मिकत्वं तु षष्ठाद्ये स्थापयिष्यते ।' इति । न च योगसिद्ध्यधिकरणे पश्वादिफलस्यापि ऐहिकत्वमेव प्रसाधितमिति वाच्यम्, तत्र आमुष्मिकत्वमेव पशुफलस्य स्यादिति पूर्वपक्षमुपस्थाप्य ऐहिकत्वमपि तस्य सम्भवतीति निर्णयात् अनियम एव तस्य उक्तः । अत एव चित्राक्षेपपरिहारश्लोकवार्तिके कुमारिलभट्टपादाः चित्रादिफलस्य ऐहिकत्वमामुष्मिकत्वं चेति अनियममुपापीपदन् । यथा -

**[37]"यदा कदाचित् भवदेतदिष्यते फलं हि पश्वादि न साम्परायिकम् ।**
**तथा स्थितस्यैव हि तस्य साधनं विधीयते योऽपि भृशं त्वरान्वितः ।।**
**साधारणं यत्तु फलं बहूनां स्वभावतस्तादृशमेवचेष्टम् ।**
**सर्वस्य वाऽऽसन्नतयैव काम्यं वृष्ट्यादि तच्चैहिकमेव युक्तम् ।।**

**कमिपदमविशिष्टं यद्यपि श्रूयते वा भवति फलविशेषो नान्यथा काम्यते हि ।**
**फलति यदि न सर्वं तत् कदाचित् तदैव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते ।।"**
इति ।

(एवं चित्राक्षेपपरिहारग्रन्थः पूर्वमीमांसायां निरूपितः । इतः परं शाबरभाष्ये सम्बन्धाक्षेपवाद इति प्रकरणमेकं निवेशितम् । स च वादः मीमांसापादुकायामपि 'बन्धश्चेत् बन्धशून्य' इति श्लोकेन उपस्थापितः यस्त्वस्माभिः प्रागेव प्रादर्शि ।)

## यजमानः प्रस्तर इत्यादौ गौण्या निर्वाह - इति प्रस्तावः

नन्वास्तां तावत् चित्रादिचोदना. प्रमाणम्, तथापि अचेतनमुद्दिश्य चैतन्यव्यवहारोऽपि यत्र वेदे दृश्यते तादृशवाक्यानां प्रामाण्यं दुर्घटम् । यथा [38]'श्रृणोत

ग्रावाणः, विदुषो नु' इति ग्राव्णां अचेतनानां श्रवणरूपं ज्ञानकार्यं बोधयति। एवं प्रस्तरम् उद्दिश्य 'यजमानः प्रस्तर' इति निर्दिशति। गोकर्तृकं सत्रयागानुष्ठानमपि [39]'गावो वा एतत् सत्रमासत' इति श्रुतिः कथयति। एतादृशानां प्रत्यक्षविरुद्धानां वाक्यानां सत्त्वेन वेदः न प्रमाणमिति चेत् - अत्र ब्रूमः - आप्तोक्तेषु सिंहो माणवकः, गङ्गायां घोषः, इत्यादिषु लौकिकेषु प्रयोगेषु यथा लक्षणागौण्यादिवृत्त्या निर्वाहः क्रियते, तथैवात्रापीति भाव्यम्। एतादृशानामर्थवादानामौपचारिकत्वं तत्सिद्धिपेटिकायां प्रथमचतुर्थपादे निरूपितम्। तत्र अस्माभिः वृत्तेः द्वैविध्यं स्वीकृतम् - अभिधोपचारभेदात्। अभिधा वृत्तिः सिंहशब्दस्य मृगेन्द्रे वर्तते। मुख्यार्थबाधे सति तदासन्ने वृत्तिः उपचारः। तदासत्तिश्च मुख्यार्थसम्बन्धः, तद्गुणसम्बन्धश्चेति द्विविधा भवति। तत्र प्रथमेन प्रवृत्तिः यत्र स लक्षणेति कथ्यते। यथा गङ्गायां घोष इत्यत्र प्रवाहविशेषरूपवाच्यसम्बन्धिनि तीरे। द्वितीयेन प्रवृत्ति गौणी - यथा सिंहो माणवक इत्यत्र सिंहादिशब्दस्य शौर्यादिगुणयोगिनि माणवके। इतोऽप्यत्र विस्तरः - न्यायपरिशुद्धितत्त्वमुक्ताकलापादिषु द्रष्टव्यः। तथा च यत्र अर्थवादेषु प्रत्यक्षादिविरोधः तत्र सर्वत्रापि औपचारिकार्थग्रहणेन उपपत्तिः भवतीति न वेदाः अप्रमाणम्। तदुक्तं -

[40]"**ग्राव्णां चैतन्यकृत्यं श्रवणमभिदधे सत्रचर्या पशूनाम्**
**अन्येऽपि ह्यर्थवादप्रभृतिषु विहतास्तत् कथं मानतेत्थम्।**
**व्याघातो यत्र दृष्टः श्रुतिषु बहुविधस्तत्र चाप्तोक्तनीत्या**
**मुख्यादन्यत्र वृत्तेः प्रमितिकरणता स्थापनीया यथार्हम्॥**" इति।

## स एष यज्ञायुधीवाक्यार्थनिर्वाहः

एवं प्रत्यक्षविरुद्धार्थकोदाहणान्तरमपि प्रकरणेऽस्मिन् शाबरभाष्यादिषु ग्रन्थेषु प्रदर्श्य परिहारस्तत्र प्रदर्शितः। यद्यपि एतत् मीमांसापादुकायां न निरूपितं तथापि सेश्वरमीमांसायां निरूपितमिति तदत्र प्रस्तूयते। तथा हि - 'आहिताग्नेराहिताग्निम् अग्निभि र्दहन्ति यज्ञपात्रेश्च' इति अन्त्येष्टिः विहिता। तत्र 'दक्षिणहस्ते जुहूमासादयति' इत्यादिवाक्यैः यज्ञपात्राणामहिताग्निशरीरे स्थापनात्मकं चयनं विहितं वर्तते। तदनन्तरं 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति

श्रूयते। अत्र स एष इति शरीरमेव बोध्यते। तथा च दह्यमानं शरीरं कथं स्वर्गं लोकं यातीति श्रुतिः कथयतीति वाक्यमेतत् अप्रमाणं, प्रत्यक्षविरुद्धत्वात्। इति पूर्वः पक्षः।

अत्रैवं प्रतिविधीयते। मुख्यार्थबाधस्तु अत्र दृश्यत एव। तथापि तात्पर्यविषयीभूतस्य अर्थस्य अविरुद्धत्वात्। तथा हि – अत्र दह्यमानस्य शरीरस्य स्वर्गफलसिद्धि र्न निरूप्यते, अपि तु चेतनविशेषस्य यजमानस्य विधिवाक्यसिद्धा स्वर्गावाप्तिः अनूद्यतेऽत्र। न च आत्मनोऽकर्तृत्वात् यजमानशब्दवाच्यत्वं नास्तीति वक्तुं शक्यम्। [41]'कर्ता शास्त्रार्थवत्त्वात्' [42]'परात्तु तच्छ्रुतेः' इत्यादिषु सूत्रेषु परमात्माधीनकर्तृत्वं जीवस्य वर्तत इति निरूपणात् न दोषः। अतो विशेष्यवाचिनि यजमानशब्दे चेतनमभिदधाने यज्ञायुधिशब्दः शरीरविषयोऽपि चेदनाधिष्ठितपरित्यक्तसंघातमेव अभिप्रैति। अत एव 'एष' इत्यपरोक्षनिर्देशोऽपि न विरुद्धः। तस्मात् सिद्धमर्थवादेषु यत्र प्रत्यक्षविरोधो दृश्यते तत्र औपचारिकार्थग्रहणेन निर्वाहः कार्य इति सर्वोऽपि वेदः प्रमाणमिति॥

# आत्मवादः

## देहातिरिक्तात्मनः समर्थनम्

ननु स्वर्गादिफलं जन्मान्तरभावीति कथनमयुक्तम्। देहाद्यतिरिक्तस्य आत्मनः अस्वीकारात्। देहमनःप्राणादीनामेव आत्मत्वात् तेषामत्रैव नाशात् स्वर्गादिफलभोक्तृत्वं तेषामसम्भवात् चोदना निष्फलेति चेत् -

अत्रोच्यते। देहेन्द्रियमनः प्राणधीभ्यो विलक्षणः जीव.। तदुक्तमात्मसिद्धौ श्रीमद्यामुनाचार्यैः

[43]'देहेन्द्रियमनः प्राणधीभ्योऽन्योऽनन्यसाधनः'। इति। अस्यायं भाव· - प्रत्यक्षं तावत् देहेन्द्रियमनः प्राणधीभ्यो विलक्षणं तत्त्वमेव आत्मत्वेन प्रकाशयति। अहमिति यद्ज्ञानं भवति, तदर्थः न देहो भवति। शिरः पाण्याद्यवयवेषु किं प्रत्येकं चैतन्यम् उत समुदाये इति विकल्पानुपपत्तेः। यदि शिरः पाण्यादिषु अवयवेषु प्रत्येकं चैतन्यमभिमतम्, शिरोऽहम्, पाणिरहम् इत्यादि

सामानाधिकरण्यादर्शनात्। प्रत्युत मम शिर·, मम हस्तः इति मम वस्त्रम् इति वत् व्यतिरेकप्रत्ययदर्शनात्। अपि च प्रत्येकं चैतन्यस्वीकारे शरीरभेदेन अभिप्राय-भेदप्रसङ्गात् किमपि कार्यं निर्वतेत। यथा विरुद्धाभिप्रायानेकराजाधिष्ठितदेशे कस्यापि कार्यस्य सम्पादनं न भवति, तद्वदत्रापीति भाव्यम्। न च अविरुद्धाभिप्रायानेकराजाधिष्ठितदेशवत् परस्परमविरोधसम्भव इति वाच्यम्, परस्पराविरोधनियमानुपपत्तेः। अनादौ संसारे कदाचित् विरोधस्यापि सम्भवात्। नापि समुदायपक्षः श्लाघीयान्। अहमर्थस्य चेतनत्वात् पाण्यादिसमुदायस्य शरीरस्य चैतन्यसमवायायोगात्। किं च प्रत्येकम् असतः चैतन्यस्य समुदाये सम्भवकथनं अत्यन्तपरिहासास्पदं भवेत्। न च तन्त्वादिषु अविद्यमानं रूपं तत्समुदाये पटे दृश्यते। न चावयवाः प्रत्येकं चेतयन्ते, प्रत्येकमहम्बुद्धेरदर्शनात्। एकस्मिन् शरीरे एकस्यैव चेतनस्य उपलम्भात्। अपि च विमतम् शरीरम् अचेतनम्, सङ्घातत्वात्, रूपवत्वात्, बाह्येन्द्रियग्राह्यत्वाद्वा घटवत् इत्यनुमानेनापि देहस्य चैतन्यासम्भवं साधयितुं युक्तम्। न च प्रत्यक्षैकप्रमाणवादिनं चार्वाकं प्रति अनुमानेन प्रसाधनं न युक्तमिति वाच्यम्, लोकायतमित्यत्र आयतशब्दविवक्षितमनुमानमपि प्रत्यक्षान्तर्भावेन कैश्चित् चार्वाकैः गृह्यत इति तं प्रति अनुमानोक्ति र्न विहन्येत। एवमिन्द्रियाण्यपि न आत्मा भवितुमर्हन्ति। एकेन इन्द्रियेण गृहीतं विषयं इन्द्रियान्तरेण प्रतिसन्धातुमशक्यत्वात्। एवं चक्षुरिन्द्रियेण प्रागनुभूतमपि पदार्थमन्धो भूत्वाऽपि स्मरणदर्शनम्। एवं मनसा स्मरामीति प्रत्ययदर्शनात् करणभूतं मनः न आत्मपदवाच्यं भवितुमर्हति। तदिदं सर्वं मीमांसापादुकायाम्

[44]"**एकः सर्वेन्द्रियाणां विषयमनुभवन् बुद्धितश्चातिरिक्तः**
**सत्सूत्रे भाति हस्ताद्यपघनघनतोमप्यर्थतस्तुल्यनीत्या।**
**तस्मात् स्वर्गादि दृष्टेतरदपि हि फलं देहभेदात् स भोक्ता**
**बाधे चैवं विधूते भवति फलवती चोदनाऽतीन्द्रियार्था॥"**

इत्यत्र उट्टङ्कितम्। देहाद् विलक्षण एव आत्मेति 'पुरुषस्य बुद्धिजन्म तत् प्रत्यक्षमि'ति सत्सूत्रेणापि षष्ठीविभक्तिनिर्देशपुरस्सर सूचितम्।

कि च स्वाप्नानुभव सर्वेषामपि वर्तते। तत्र व्याघ्रादिरूपेणापि आत्मानं मन्यते। तथा च शयानस्य देह स्वाप्निकदेहात् भिन्न इति देहात्मवादे वक्तव्य

भवति। शयानस्य देहस्य स्वप्ने व्याघ्ररूपेण अप्रत्ययात्। अत. यदि व्याघ्रादिदेह एव अहमर्थः स्यात् तर्हि तस्य स्मरणं जाग्रदवस्थायां न सम्भवेत्। उभयोरपि देहयोः परस्परं भेदात्। एवं शैशवे देहे अनुभूतस्य पदार्थस्य स्मरणं यौवनदेहे न सम्भवेत्। परं तु तथा स्मर्यते अस्माभिरिति देहात्मवाद. दुरुपपादः। तथा च शैशवयौवनभेदेन अयुगपदनेकशरीरत्वं, पाणिपादादिभेदेन युगपदनेकशरीरत्वं च आत्मनः क्लृप्तम्। अतः देहात् विलक्षण एव आत्मा। अन्यथा एकस्मिन्नेव देहे अनेकात्मवादप्रसङ्ग.। तथा चोक्तं मीमांसापादुकायां —

[45]**"स्वप्ने देहान्तरेणाप्यनुभवति सुखाद्येषु पश्चात्तु जाग्रत्**
**स्वाप्ने देहे व्यतीते स्मरति किमपि तच्छैशवादौ स तद्वत्।**
**नानाभूतेषु पाणिप्रभृतिषु च परामृश्यतेऽसावभिन्नः**
**तद्वन्नानाशरीरो युगपदयुगपच्चैष भुङ्क्ते फलानि॥"** इति।

## ज्ञानं नात्मेति प्रतिपादनम्

न च संविदेवास्तु आत्मेति वाच्यम्, योऽहं दुःखम् अन्वभवं, स एवाहं संप्रति सुखमनुभवामीति प्रतिसन्धानानुपपत्तेः। उक्तप्रतिसन्धाने ज्ञातृत्वस्थिरत्वयो विषयीकरणात्। अपि च ज्ञातृत्वं चास्य आत्मनः स्वाभाविकमिति [46]'ज्ञोऽत एव' इत्यत्र प्रतिपादितम्। तत्र 'अथ यो वेद इदं जिघ्राणि इति स आत्मा' [47]'विज्ञातारमरे केन विजानीयात्' 'जानात्येवायं पुरुषः' [48]'एष हि द्रष्टा श्रोता' इत्यादि श्रुतिवचनानि समादृतानि प्रमाणत्वेन। एवमेवात्मनः परमपुरुषायत्तं कर्तृत्वमप्यस्तीति 'परात्तु तच्छ्रुतेः' इत्यत्र निरूपितम्। एतत् सर्वं ज्ञानस्य आत्मत्वपक्षे अत्यन्तमनुपपन्नं भवति।

अपि च ज्ञानं ज्ञेयशून्यमिति विज्ञानवादिनां कथनं दुर्निरूपम्। ज्ञानमेव नीलपीताद्याकारत्वेन घटाद्याकारत्वेन च भासत इति बाह्यविषयमपलपन्ति ते। तन्न हृदयङ्गमम्। तथा सति परस्य ज्ञानविशेषमधिगम्य जायमानाया. प्रवृत्तेरनुपपत्तिप्रसङ्ग· स्यात्। एवं ज्ञेयं न स्वयम्प्रकाशं भवति। घटपटादेः ज्ञेयवस्तुनः स्वयम्प्रकाशतास्वीकारे स्वसत्ताकाले नियमेन भानापत्तिस्तेषाम्। तथा च ज्ञाता ज्ञानज्ञेयव्यतिरिक्त एव भवतीतिसिद्ध्यति। ज्ञानाश्रयत्वं तु आत्मन एव भवति, न

तु ज्ञानस्य ज्ञेयस्य च। एवं ज्ञानज्ञेयज्ञातॄणां स्वभावं प्रदर्श्य ज्ञानाश्रयस्य आत्मत्वं प्रसाधयति मीमांसापादुकाकारः

[49]"**न ज्ञानं बाह्यशून्यं किमपि परमतिप्रत्ययात् स्वप्रवृत्तेः**
**न ज्ञेयं स्वप्रकाशं प्रकटतदितरावस्थयोस्तस्य सत्त्वात्।**
**न ज्ञाता चेतरः स्यात् बहुविषयिगणग्राह्यधीस्तोमवत्वात्**
**त्रिभ्यस्सिद्धे त्रिकेऽस्मिन्नवहितमतिभिर्भाव्यमित्यत्र भावः ।।"**

इति।

## ज्ञेयापलापिमतनिरासः

एतेन ज्ञानं ज्ञेयं ज्ञाता चेति एतत् त्रयमपि परमार्थमिति सिद्धम्। परं तु ज्ञानमात्रं परमार्थं न ज्ञेयज्ञात्रोस्सत्ता विद्यत इति योगाचारशांकरादयः निरूपयन्ति। तत्र योगाचारमते ज्ञानं क्षणिकं, शाङ्करमते तु नित्यमित्येतावानेव तयो र्मतयोः भेदः। एतन्मतद्वयमपि न समीचानं भवति। ज्ञेयज्ञात्रोः निरासः क्रियते चेत् निषेधनिषेध्ययोरपि निरासः कृतः स्यादिति स्ववचनव्याघातादिदोषप्रसङ्गः। तथा च एतेषां वादाहवे प्रवेशार्हतैव दुर्घटेति अभिप्रयन्ति मीमांसापादुकाकृतः - यथा -

[50]"**नित्यं विज्ञानमेकं क्षणभिदुरमुतास्थाय शेषं विमृद्नन्**
**स्वव्याघातादिदोषैरपहृतविषयो दोषतैषां त्वखण्ड्या।**
**मर्यादा स्वा परा वा न खलु नियमयेत् तादृशैरर्थसिद्धिं**
**मूलाच्छिद्वादक्लृप्तौ मुखरितपटहो मोहमूर्धाभिषिक्तः।।"**

इति। अतस्सर्वापलापः (ज्ञेयापलापः) न समीचीन इति सिद्धम्। एवमात्मवादो निरूपितः। विस्तरस्तु न्यायसिद्धाञ्जनादिषु द्रष्टव्यः।

## प्रमाणत्रयसिद्धिनिरूपणम्

एवं ज्ञेयापलापो निरस्तः। उपदेशपदेन शब्दस्य प्रामाण्यमभीष्टमस्माकम्। तन्न सम्भवति। प्रत्यक्षस्यैव प्रमाणत्वस्वीकारादिति चेदत्र ब्रूमः - शब्दः प्रत्यक्षविषयो नास्ति वा? शब्दार्थः न जायते वा शब्दात् जायमानः अर्थः बाधितो वा? एतत्त्रयमपि भवता वक्तुं न शक्यते। शब्दस्य श्रोत्रेन्द्रियग्राह्यत्वात्

प्रत्यक्षविषयत्वं शब्दस्य सुसाधमिति न प्रथम· पक्षः। शब्दात् अर्थस्य जायमानत्व-दर्शनात् द्वितीयः पक्षोऽपि न युक्तः। कुत्राऽपि बाधादर्शनात् शब्दात् प्रमितोऽर्थः प्रमाणमेव भवतीति तृतीयपक्षोऽपि न साधीयान्। अत्र शब्दशब्दवाच्यः साधुशब्द एव नान्यः इति प्रागेवास्माभिरवोचि। अतः शब्द. प्रमाणमेव। एवं हेतुः तन्निष्ठा व्याप्तिः अन्वयव्यतिरेकभेदरूपा तज्जन्यं फलमनुमितिरूपं, तेन च हानोपादानादिरूपा प्रवृत्तिरस्माकं नियमेन दर्शनात् अनुमानमपि न अपलापयोग्यं भवति। तदुक्तमाचार्यपादैः

[51]"**प्रत्यक्षः शब्दराशि र्मतिरपि हि ततो दृश्यते नात्र बाधः**
**क्लृप्तिश्चातिप्रसक्त्यै कथमिह विमुखी मानता जानतां वः।**
**लिङ्गं व्याप्तिस्तदुत्थानुमितिरपि तथा तेन चेष्टास्तवेष्टाः**
**तस्मादेकं प्रमाणं परिगणितवतोऽकृष्टपच्यं ततोऽन्यत्॥**"

इति। अनेन प्रत्यक्षानुमानशब्दाः प्रमाणमिति प्रमाणत्रयमेव विशिष्टाद्वैताभिमतमिति प्रतीयते। तथैव च न्यायपरिशुद्धितत्त्वमुक्ताकलापादिषु निरूपणात्।

## विशिष्टाद्वैतमतानुसारेण प्रमात्वनिर्वचनम्

ननु प्रमा करणं हि प्रमाणम्। तत्र प्रमात्व कीदृशमभिमतं विशिष्टाद्वैतिनां मते इति चेत् - अत्र ब्रूमः। श्रीमतिभाष्ये जिज्ञासाधिकरणे [52]'यथार्थं सर्वविज्ञानं इति वेदविदां मतम्' इति भगवद्रामानुजपादैरभाषि। तथा च सर्वमपि ज्ञानं यथार्थमिति प्रतीयते। तथा सति प्रमाऽप्रमेति भेद· किंनिमित्तकः इति चेत् प्रवृत्ते. बाधितत्वाबाधितत्वनिबन्धन. प्रमाऽप्रमेति व्यवहार इति स्वीकारात्। तदुक्तं तत्त्वमुक्ताकलापे —

[53]"**नाथैरुक्ता यथार्था विमतमतिरिति न्यायतत्त्वे तदेतत्।**
**भाष्येऽनूक्तं तदत्र व्यवहृतिरुभयी बाधिताऽबाधिताख्या॥**"

इति। अस्यायमर्थः ज्ञानजन्या प्रवृत्ति बाध्या अबाध्येति च द्विविधा। प्रवृत्ते. बाध्यत्वं नाम वैफल्यमेव। एवं प्रवृत्तेः अबाध्यत्वं नाम साफल्यमेव। तथा च बाध्यव्यवहारहेतु. ज्ञानमप्रमा, अबाध्यव्यवहारहेतुर्ज्ञानं प्रमा इति लक्षणे पर्य-वस्यत। बाध्यप्रवृत्तिजनक ज्ञानमप्रमा, अबाध्यप्रवृत्तिजनकं ज्ञानं प्रमेति तदर्थः।

एवं न्यायपरिशुद्धावपि प्रमाया लक्षणं प्रादर्शि श्रीमद्वेदान्तदेशिकाचार्यैः - यथा - [54]"यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा" इति। तत्र यथावस्थितत्वं नाम तद्वति तत्प्राकारकत्वम् । इदं व्यवहारस्य विशेषणं भवति। व्यवहारो नाम प्रवृत्तिः। तथा च प्रवृत्तेः बाध्यत्वं यत्र तत् अप्रमा, प्रवृत्तेरबाध्यत्वं यत्र तत् प्रमेति च गम्यते। शुक्तिरजतज्ञानेऽतिव्याप्तिवारणाय यथावस्थितेति व्यवहारेति च लक्षणे निवेशितम्। तस्मात् अबाध्यप्रवृत्तिजनकज्ञानं प्रमेति सिद्धम्।

## प्राभाकराभिमतप्रमालक्षणप्रस्तावः, तन्निरासश्च

प्राभाकरास्त्वेवमाहुः - अनुभूतिः प्रमा। स्मृतिव्यतिरिक्ता च संविदनुभूतिः। स्मृतेः व्यवच्छेदाय प्रमालक्षणे अनुभूतिपदं निविष्टम्। तदुक्तं प्रकरणपञ्चिकायाम् - 'सा स्मृतेरन्या' इति। 'पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते' इति शालिकनाथवचनानुसारं संस्कारमात्रजन्यं ज्ञानं स्मृतिरित्युच्यते।

**[55]"भातस्य कस्यचित् पूर्वं भासमानस्य साम्प्रतम्।**
**सोऽयमित्यनुसन्धानं प्रत्यभिज्ञानमुच्यते॥"**

इति प्रकरणपञ्चिकानुरोधं प्रत्यभिज्ञाया अपि संस्कारजन्यत्वेन अतिप्रसक्तिवारणाय मात्रपदं प्रविष्टम् । सोऽयमिति प्रमाणभूतस्य प्रत्यभिज्ञालक्षणज्ञानस्य संस्कारमात्रजन्यत्वं नास्ति तत्रेन्द्रियस्यापि कारणत्वात् न तत्राप्रामाण्यापत्तिः। तत्र हि तत्तांशे संस्कारस्यैव व्यापारो भवति इदन्त्वांशे चेन्द्रियस्यैव व्यापारो भवतीति प्रत्यभिज्ञा न केवलमिन्द्रियजन्या, नापि संस्कारमात्रजन्या सा भवतीति यावत्। अतः संस्कारातिरिक्तकारणजन्यं ज्ञानम् अनुभूतिरिति प्रमालक्षणं सिद्धम्।

[56]'यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये' इति वचनानुसारं सर्वज्ञानयाथार्थ्यवादिनामेतेषां मते शुक्तिरजतादिस्थले निर्वाहस्तु भ्रमस्य एवं भवति-यथा-तत्र ग्रहणस्मरणरूपं ज्ञानद्वयं जायते। इदमिति ज्ञानं अनुभवरूपं, रजतमिति तु स्मरणरूपम् । रजतज्ञानस्य अनुभवरूपत्वाभावात् न प्रमात्वापत्तिस्तस्य। इदमिति ज्ञानस्य तु अनुभवरूपत्वात् प्रमात्वमिष्टमेवेति न कोऽपि दोषः। पूर्वज्ञानापेक्षणात् स्मृतेरप्रमात्वं, तदनपेक्षणात् धारावाहिकज्ञानस्य

प्रमात्वमिति च अङ्गीक्रियते।

तदिदं प्राभाकरमतं न साधु - अनुभूतित्वमात्रं न प्रमात्वं भवति। तच्च भ्रमप्रमासाधारण्यात् भ्रमेऽतिव्यापनात्। अतः अबाधिता या अनुभूतिः सैव संविदनुभूतिरिति वक्तव्यम्। तथा सति 'तत्त्वानुभूतिः प्रमा' इति उक्तं भवति। तच्च यथार्थव्यवहारानुगुणं ज्ञानमेव। अप्रमादूरमुक्तास्तु प्राभाकरा. तदिदं लक्षणं परित्यज्य केवलमनुभूतित्वं प्रमात्वमिति कल्पयित्वा सर्वज्ञानयाथार्थ्यं साधयन्ति। तदिदं लोकव्यवहारविरुद्धम्। न हि कश्चित् लोके शुक्तिं दृष्ट्वा रजतत्वेन गृहीतं इदं रजतमिति ज्ञानं प्रमात्वेन प्रत्येति। अत एवाह मीमांसापादुकाकारः -

[57]"**किंचित् सूत्रे प्रमाणं किल नियमतया किंचिदिष्टं ह्यमानं**
**मानामानव्यवस्थात्यज इह विविधाः प्रापितास्तेन हानम्।**
**निर्बाधैव प्रमेत्यप्यवगमितमिदं तेन तत्त्वानुभूतौ**
**माने ग्राह्योऽनुभूतिः प्रमितिरिति वदन्त्यप्रमादूरभूताः॥**"

इति। किं च सत्सूत्रे धर्मं प्रति प्रत्यक्षादि प्रमाणं न भवति विद्यमानोपलम्भनत्वादिति यत् सूत्रकारेण कथितं तदिदं प्राभाकरमते न सङ्गच्छते। अप्रमाया एव अस्वीकारात् तैः। अतस्सूत्रविरुद्धमपि प्राभाकरमतं प्रतीयते।

अपि च वेदः धर्मे प्रमाणमित्यस्य गुरुमतरीत्या एवमर्थः वर्णनीयो भवति - यथा- प्रमाणं नाम प्रमाकरणम्; तथा च अर्थविषयकानुभूतिजनको वेद इति। वेद. न प्रमाणमिति ये नास्तिकाः कथयन्ति तेऽपि तस्य अनुभूतिजनकत्वं स्वीकुर्वन्तीति नास्तिकमताविशेषः स्यात् प्राभाकरमतस्य। अपि च अनुभूतित्वमात्रं प्रमात्वं भवति चेत् बौद्धादिनास्तिकमतवाक्येऽपि तस्य सत्त्वात् तस्यापि प्रमात्वापत्तिः। अपि च स्मृतेः प्रमात्वनिरसनाय ज्ञानं प्रमेत्यनुक्त्वा अनुभूतिः प्रमेत्युक्त भवता। स्मृतिस्तु पूर्वानुभूतं ज्ञानमपेक्षत इति न प्रमा। धारावहनबुद्धिस्तु प्रमैव अन्योन्यनिरपेक्षत्वात् इति च गुरुमतरचना। एवं च सति प्रत्यक्षानुभवस्य सापेक्षत्वात् अनुमानस्याप्यप्रामाण्यापत्तिः। एवमेव शब्दादीनामपि अप्रामाण्यप्रसङ्ग·। अत एव अनुभूतिः प्रमेति प्राभाकरमतं न साधु। तदिदमुक्तं -

[58]"वेदस्यार्थानुभूतिप्रजनन शकनस्थापने किं फलं स्यात्
किं वा बुद्धार्हताद्यैः परुषमभिहितं प्रत्युतेष्टं हि शिष्टम्।
मन्वानः पीतशङ्खभ्रममनुभवनं तद्व्यवच्छेदसिद्ध्यै
विन्यस्यन् भेदकोक्तिं विहरतु विमतव्यूह भेदे वियातः ॥" इति।

## अत्र स्वाभिप्रायनिवेदनम्

अत्रेदमवधातव्यम्। तदिदं दूषणं प्राभाकरस्य न भवति। यतः भ्रमप्रमाव्यवहारः लोकसाधारणः इति तयो र्निवाहस्यापि कर्तव्यत्वात्। तत्र भ्रमव्यवहारनिर्वाहस्त्वित्थं भवति — शुक्तिरजतादिभ्रमस्थले हि न एकं विज्ञानं भवति। अपि तु ज्ञानद्वयं जायते। तच्च ग्रहणस्मरणरूपम्। इदमिति अनुभवरूपमिति तस्य प्रमात्वमिष्टमेव। स्मरणरूपत्वेन रजतज्ञानस्य अनुभूतित्वाभावात् अप्रमात्वमिति न किंचिदत्रापहीयते। स्मृतिस्तु संस्कारमात्रजन्यत्वेन अनुभूतिभिन्ना पूर्वानुभूतां प्रतीतिमनुरुद्ध्यमाना च सती न स्वातन्त्र्येण अर्थं परिच्छिनत्ति इति न प्रमाणम्। अनुमाने तु पूर्वज्ञानविशिष्टज्ञानं तु संस्कारभ्रंशात् हेत्वपेक्षं सत् प्रागननुभूतं विषयं परिच्छिनत्तीति अनुमानस्य प्रामाण्यं सुकरमेव। अपि च याथार्थ्यमात्रं न प्रामाण्यनिमित्तं, तस्य भ्रमप्रमोभयसाधारणत्वादिति अनुभूतित्वमेव प्रमात्वमिति हि गुरुमतम्। एतत्तु प्रायः सर्वेऽपि दार्शनिकाः साक्षाद् भङ्ग्यन्तरेण वा स्वीकुर्वन्तीति विदितमेतत् गवेषणकुशलानाम्। परं तु अन्ये तु भ्रमस्यापि स्वीकारात् ज्ञानवैविध्यानुसारं प्रमालक्षणं कथयन्तीत्येतावानेव विशेषः। अत एव 'यथार्थानुभवः प्रमा' 'तत्त्वानुभूतिः प्रमा' 'अबाधितानुभवः प्रमा' इत्यादीनि लक्षणानि इतरैः दार्शनिकैः समादृतानि। स्मृतेरप्रमात्वमपि सर्वदार्शनिकेष्टमेवेति वदामः। अतः प्राभाकराभिमतं न प्रमात्वं दोषावहमित्येव प्रतीमः।

## ख्यातिविचारः

अथ दार्शनिकक्षेत्रे भ्रमज्ञाननिर्वाहार्थं ख्यातिवादः महता प्रयासेन प्रस्तावितो दृश्यते। तदिदमत्र अत्यन्तं सङ्ग्रहेण किंचित् प्रस्तूयते।

इदं रजतमित्यत्र अख्यात्या निर्वाहः क्रियते गुरुमते। तत्र ग्रहणस्मरणरूपं ज्ञानद्वयं स्वीक्रियते। इदमिति पुरोवर्तिवस्तुमात्रस्य ग्रहणम्। दोषवशात् तन्निष्ठं

शुक्तित्व न गृह्यते। तच्च वस्तु आपणादिस्थितपूर्वदृष्टरजतसदृशमिति तद्ग्रहणानन्तरं पूर्वरजतानुभवजन्यसंस्कारोद्बोधात् रजतस्मृतिः जायते। तस्यां स्मृतौ दोषवशात् तत्तांशो न भासते। तत्र ग्रहणस्मरणविषययोः पुरोवर्तिरजतयोश्च भेदो न जायते। तथा च एतादृशभेदाग्रहसहकारेण भिन्ने अपि ग्रहणस्मरणे रजतमित्यभेदव्यवहारं रजतार्थिनः प्रवृत्तिं च सम्पादयतः। तत्र नेदं रजतमिति पुरोवर्तिरजतयोर्भेदे बाधकज्ञानेन गृहीते सति भेदाग्रहो निवर्तते। तन्निवृत्त्या अभेदव्यवहारो बाध्यते। तथा च बाधितव्यवहारहेतुत्वमेव भ्रमत्वं न बाधितविषयकत्वम्। ग्रहणस्मरणयोः उभयोरपि अबाधितविषयकत्वात् यथार्थत्वमेव। अतस्सर्वं ज्ञानं यथार्थमिति प्राभाकराभिमतमपि निर्दुष्टं भवति। एवं भ्रमज्ञाननिर्वहनात् एते अख्यातिवादिनः इति समाहूयन्ते।

## तत्र न्यायमतनिरूपणम्

अन्यथाख्यातिपक्षं नैयायिकाः भाट्टाश्च स्वीकुर्वन्ति। अन्यत्रैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानम् अन्यथाख्यातिः। शुक्तिरजतस्थले शुक्त्या इन्द्रियसम्प्रयोगानन्तरम् 'अयं शुक्लभास्वर' इति ज्ञानं ततः उद्बुद्धसंस्कारात् रजतस्मरणं पुरोवर्तिरजतयो र्भेदाग्रहः इत्येतावत्पर्यन्तमख्यात्यन्यथाख्याति-पक्षयोस्समानम्। ततः 'इदं रजतम्' इत्याकारकं रजतत्वाभाववद्विशेष्यकं रजतत्वप्रकारकं विशिष्टज्ञानमुत्पद्यते, तत एव प्रवृत्तिरिति नैयायिकभाट्टादयः तादृशविशिष्टज्ञानकारणत्वेनाभिमताभ्यां भेदाग्रहसहिताभ्यां पुरोवर्तिवस्तु-प्रत्यक्षरजतस्मरणाभ्यामेव प्रवृत्त्यादिनिर्वाहे 'तद्धेतोरेव तदुत्पत्तौ मध्ये किं तेन इति न्यायेन विशिष्टज्ञानमनपेक्षितं मध्ये इति प्राभाकरमतम्।

एवं रीत्या गुरुमते लाघवसत्त्वेऽपि प्रतीतिस्वारस्यं तु अन्यथाख्यातिवाद एव दरीदृश्यते - यथा - 'शुक्तिशकलमेव मया रजततया गृहीतमि'ति। एवम्

[59]**'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः।'**

[60]**''योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।**
**अयथावत् प्रजानाति बुद्धिस्सा पार्थ राजसी॥''**

इत्यादि अभियुक्तोक्तिस्वारस्यमपि वर्तते। एतदेव मन्वान

श्रीमद्वेदान्तदेशिकवर्याः -

[61]'स्वारस्यमन्यथाख्यातौ अख्यातौ लाघवं स्थितम्' इत्यवोः न्यायपरिशुद्धौ ।

## तत्र विशिष्टाद्वैतमतम्

विशिष्टाद्वैतिनोऽपि सर्वस्यापि ज्ञानस्य याथार्थ्यम् उररीकुर्वा‍ यथार्थख्यातिमुपस्थापयन्ति भ्रमज्ञाननिर्वाहाय। शुक्तिरजतस्थले भ्रमनिर्वाहस्तु इ भवति - शुक्तावपि रजतावयवानां विद्यमानत्वात् विद्यमानानामेव रजतावयवान इदं रजतमिति ग्रहणं सूपपादम् । अतो यथार्थमेव तत् ज्ञानम् । न च शुक्त्य रजतावयवसत्त्वे सदा रजतग्रहणं स्यात् प्रवृत्तिश्च सर्वदा भवेत्, बाधश्च नोपपद्य इति वाच्यम्, शुक्तिरजतस्थले शुक्त्यंशाग्रहणे दोष एव हेतुः । शुक्ति धर्मप्रचुरग्रहणाभिभूतत्वाभावात् अदृष्टवशाच्च रजतग्रहणम् । शुक्तिभूयस्त्व रजताल्पत्वे च शुक्तिज्ञानस्य बाधकत्वं रजतज्ञानस्य बाध्यत्वमितिनिर्वाहः कृत किं च ज्ञानस्य बाध्यत्वं न स्वरूपतः, न च विषयतः, किं तु बाध्यप्रवृत्तिकत्वम उत्तरज्ञानस्य बाधकत्वं पूर्वज्ञानजन्यप्रवृत्तिनिवारकत्वम् । अन्यथाख्यातिवादेऽ ज्ञानस्य स्वरूपेण बाध्यत्वमनभिमतम्, किं तु विषयबाध्यत्वमेवाभिमतम् । वयं ज्ञानफलभूतप्रवृत्ते र्बाध्यत्वमिति स्वीकुर्मः । अतः शुक्तिरजतादिस्थले गृह्यमाण इदं रजतमिति ज्ञानं नायथार्थम् । तथाचैवमभ्यधुः भगवद्रामानुजपादाः

[62]"शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः ।
रूप्यशुक्त्यादिनिर्देश भेदो भूयस्त्वहेतुकः ।।

रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ।
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ।।

कदाचित् चक्षुरादेस्तु दोषाच्छुक्त्यंश वर्जितः ।
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ।।

दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ।
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।।

**बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते।**
**शुक्तिभूयस्त्ववैकल्यसाकल्य ग्रहरूपतः ॥**

**नातो मिथ्यार्थ सत्यार्थ विषयत्वनिबन्धनः।**
**एवं सर्वस्य सर्वत्वे व्यवहार व्यवस्थिति· ॥''**

इति जिज्ञासाधिकरण श्रीभाष्ये। भ्रमनिर्वाहस्तु त्रिवृत्करणपञ्चीकरण - प्रतिनिधिन्याय - भेदाग्रहैरेतै. क्रियते। अस्य विस्तरस्तु श्रीभाष्यादिग्रन्थेषु अवलोकनीयः। यद्यपि प्राभाकरा अपि सर्वं ज्ञानं यथार्थमित्येव आतिष्ठन्त इत्यवोचाम तथापि ते इदमिति ज्ञानमनुभवरूपं यथार्थम्, रजतमिति स्मरणरूपं यथार्थमित्येवं ज्ञानद्वयं यथार्थत्वेन स्वीकुर्वन्ति। विशिष्टाद्वैतिनस्तु नैयायिकवत् इद रजतमित्याकारकं विशिष्टज्ञानमपि स्वीकुर्वन्ति। तच्च विशिष्टज्ञानं यथार्थमिति विशिष्टाद्वैतिनः, अयथार्थमिति नैयायिकाः। एवं श्रीभाष्ये [63]'ख्यात्यन्तरवादिनां च सुदूरमपि गत्वा अन्यथावभास. अवश्याश्रयणीय' इति कथनेन अन्यथाख्यातिवादस्य वैशिष्ट्यं प्रादर्शि। ख्यातिविचारे इतोऽपि विस्तर न्यायपरिशुद्धितत्त्वमुक्ताकलापादिषु ग्रन्थेषु सुनिपुणं कृत इति विस्तरभिया इतो विरम्यते। तत्र गुरुमताभिमतं अख्यातिवादं वयमपि स्वीकुर्म इति मीमांसापादुकाकारा· अभिप्रयन्ति - यथा -

[64]**''आपातादन्यथाधीरखिल हृदयसंवादिनी, येऽत्र रुष्टाः**
**तेऽपिच्छायामिव स्वामतिपतितुमिमां कुत्रचिन्न क्षमन्ते।**
**तत्सामग्र्यैव तत्तद्व्यवहरणमिति स्थापयन्तस्त्विहान्ये**
**प्रध्यायन्तो लघुत्वं गुरुमतकथकाः प्राणिता देशिकैर्नः ॥''**

इति। एव चोदनायाः प्रामाण्यस्थापनाय आत्मवादप्रामाण्यवादख्याति-वादादय प्रसङ्गात् सूत्रेऽस्मिन् चर्चिताः।

तस्मात् सिद्धं चोदनावाक्यजनितसंवित् श्रेयस्साधनार्थप्रकाशस्वरूपा कारणदोषबाधकप्रत्ययाभावात् अनपोदित प्रामाण्या अवतिष्ठत इति।



# पादटिप्पणी

1. शाबरभाष्यम् 1-1-5
2. श्लो. वा. औत्पत्तिकसूत्रम् - 9
3 श्लो.वा औत्पत्तिकसूत्रम् - 10
4. श्लो.वा औत्पत्तिकसूत्रम् - 16
5 शाबरभाष्यम् 1-1-5
6. श्लो.वा. औत्पत्तिकसूत्रम् - 8
7 से मी. पृ 57
8. शाबरभाष्यम् 1-1-5
9. मी.पा. 108
10 न्यायरत्नाकर पृ 8
11. "योऽप्ययं शास्त्रसम्बन्धो वर्ण्यते कैश्चिदादित ।
क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा॥"
इति प्रतिज्ञासूत्र श्लोकवार्तिकव्याख्यायामुक्तम्।
12. मी.पा. 109
13. मी.पा. 123
14. मी.पा. 110
15. मी पा. 111
16. मी.पा. 112
17. मी.पा. 113
18. मी.पा. 114
19. मी.पा. 118
20. मी.पा. 119
21. मी.पा. परित्राणे उद्धृतोऽयं श्लोक । पृ. 282
22. न्यायकुसुमाञ्जलि - 2-3
23. मी.पा 122
24 तै.स 2-4-6
25 शाबरभाष्यम् 1-1-5
26. शाबरभाष्यम् 1-1-5
27 श्लोकवार्तिकम् चित्राक्षेपवाद· 7
28. श्लोकवार्तिकम् चित्राक्षेपपरिहार· - 2,3,4,5
29. ब्र.सू. 3-2-37
30 ब्र.सू. 3-2-38
31 मी पा 124
32. मी.पा 125
33 मी पा 126
34 मी पा. 127
35 न्यायदर्शनम् - 2-1-52
36 श्लोकवार्तिकम् चित्राक्षेपपरिहार श्लो 23
37 श्लोकवार्तिकम् चित्राक्षेपपरिहार·
38 तै स. 1-3
39. तै.सं 7-5-1
40 मी.पा. 128
41 ब्र.सू. 2-3-33
42 ब्र सू. 2-3-40
43 आत्मसिद्धि श्लो. 3
44 मी.पा 130
45 मी.पा 131
46. ब्र सू. 2-3-19
47 बृहदारण्यकोपनिषत् - 4-5-5
48 प्रश्नोपनिषत् 4-9
49 मी.पा. 132
50 मी पा. 135
51 मी.पा. 136
52 श्रीभाष्यम् 1-1-1
53. तत्त्वमुक्ताकलाप - 4-10
54 न्यायपरिशुद्धि - पृ. 44
55 प्रकरणपञ्चिका 128
56. प्रकरणपञ्चिका
57 मी.पा. 137
58. मी.पा 138
59 भगवद्गीता
60 भगवद्गीता
61 न्यायपरिशुद्धि पृ 47
62 श्रीभाष्यम् 1-1-1
63 श्रीभाष्यम् 1-1-1
64. मी पा 139



# ७. पदनित्यत्वाधिकरणविचारः

## पदनित्यत्वाधिकरणम् 1-1-6

**सूत्राणि - कर्मैके तत्र दर्शनात्। अस्थानात्। करोतिशब्दात्। सत्त्वान्तरे च यौगपद्यात्। प्रकृतिविकृत्योश्च। वृद्धिश्च कर्तृभूम्नाऽस्य। समं तु तत्र दर्शनम्। सतः परमदर्शनं विषयानागमात्। प्रयोगस्य परम्। आदित्यवत् यौगपद्यम्। शब्दान्तरमविकारः। नादवृद्धिः परा। नित्यस्तु स्यात् दर्शनस्य परार्थत्वात्। सर्वत्र यौगपद्यात्। संख्याऽभावात्। अनपेक्षत्वात्। प्रख्याऽभावाच्च योगस्य। लिङ्गदर्शनाच्च। 1-1-6-23.**

### अधिकरणस्य सङ्गतिनिरूपणम्

पूर्वस्मिन् अधिकरणे ''औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्च अर्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्' इति शब्दार्थसम्बन्धस्य स्वाभाविकत्वं कथितम्। सम्बन्धस्य नित्यत्वं केवलं सूचितं तत्र, न निरूपितं तत्। यतः प्रकृते तत् विचार्यमाणत्वात्। अतः पूर्वसूत्रे सिद्धानुवादमात्रं कृतमिति ज्ञेयम्। चोदनासूत्रे विवक्षितस्य प्रतिज्ञाद्वयस्य निरूपणं कार्यमिति प्रथमं प्रतिज्ञानं सत्सूत्रे निरूपितं, द्वितीयं तु औत्पत्तिकसूत्र इति मन्तव्यम्। अत एव तत् प्रमाणमनपेक्षत्वात् इत्येव मुख्यो विषयो भवति पूर्वसूत्रे। अतस्तत्र सूचितं यत् अनादित्वरूपं नित्यत्वं शब्दस्य, तत् कथं युज्येतेत्याशङ्कायां समाधानं विधातुं प्रवृत्तमिदमधिकरणमिति प्रतीयते।

परं तु शाबरा· शब्दार्थयोस्सम्बन्धस्य नित्यत्व पूर्व प्रतिपादितमिति अ वर्णरूपाणां शब्दानां नित्यत्वं स्थापयित्वा वर्णसमुदायरूपस्य प्रामाण्य प्रतिष्ठापनीयमिति वर्णयन्ति।

तदिदं मतं सेश्वरमीमांसायां मीमांसापादुकायां च न समादृतम्। एतन्मते (अस्मन्मते) वर्णानामनित्यत्वमेव स्वीक्रियत इति पदानां नित्यत्वस्थापनेनापि वेदस्य प्रामाण्यं दुरपह्नवमिति पदनित्यत्वप्रसाधनमेवास्य अधिकरणस्य प्रयोजनमिति उच्यते। वर्णानां नित्यत्वकथनं तु तेषां उत्पत्तिविनाशशालित्वेन बाधितार्थविषयकत्वात्, अत एव वेदनित्यतां प्रति स्वयमसाधकत्वाच्च न विचारसहं भवति। अतः स्वरसगत्या अस्मदभिमतः पक्ष एव समादरणीय इति कथयन्ति मीमांसापादुकाकृतः -

[1]"**शब्दस्यार्थेन बन्धः सहज इति वचोमात्रमत्र प्रसक्तं**
**साकाङ्क्षे ह्यत्र शब्दाधिकरणमुदितं नित्यतात्यै पदानाम्।**
**वर्णस्थैर्योक्तिपक्षे वितथविफलते स्तः पदस्थैर्यपक्षे**
**सूत्राणां योजनं च स्वरसगति भवत्पक्षवन्नातिखेदः॥"** इति।

## अधिकरणघटितानां सूत्राणामर्थवर्णनम्

सम्प्रति अधिकरणार्थप्रकाशनाय सूत्राणामर्थवर्णनं क्रमशः क्रियते। इदं तु सेश्वरमीमांसारूढम्। मीमांसापादुकायां केवलं वर्णानित्यस्थापनं पदनित्यत्वस्थापनं च कृतं, न प्रत्येकं सूत्रार्थवर्णनम्। अत प्रत्येकं सूत्राणामर्थं सेश्वरमीमांसारीत्या अत्र निरूपयामः।

## कर्मैके तत्र दर्शनात् - 1-1-6

इदं पूर्वपक्षसूत्रम् - अस्यायमर्थ. - शब्दः अनित्यः तथैव उपलम्भात्। कृतकत्वं तु शब्दस्य प्रतीयत एव। उच्चारणानन्तरमेव शब्दस्य विनाशदर्शनात् पुनः क्रियमाणस्य शब्दस्य अर्थेन सह सम्बन्ध. नित्य इति कथनं दुर्निरूपम्। यदि अगृहीतोऽपि सम्बन्धः कश्चिदर्थं बोधयति, तर्हि प्रथमश्रुतादेव शब्दात् बोधापत्तिप्रसङ्गः। अतः शब्द. कृतकत्वेन अनित्य इति शब्दार्थसम्बन्धस्यापि

त्यत्वमापतितम्। तदाह सूत्रकारः 'कर्म एके तत्र दर्शनात्' इति। अत्र पूर्वसूत्रात् शब्दः प्रथमान्तत्वेन विपरिणतः अनुषञ्जनीयः। क्रियत इति कर्म कार्यमिति त्। सर्वोऽपि शब्द. अनित्यः इति एके - अनित्यत्ववादिनः तार्किकादय. इति त्। तत्र हेतुं प्रदर्शयति **तत्र दर्शनादिति**। उच्चारणसमनन्तरमेव शब्दस्य म्भात् उच्चारणजन्यत्वं शब्दस्य सुकरमेव। यो हि यदनन्तरं नियमेन उपलभ्यते ज्जन्य इति अन्वयव्यतिरेकनियमदर्शनात्। अत एवोक्तं कणादमहर्षिणा योगात् विभागात् शब्दाच्च शब्दनिष्पत्तिः।' इति

यद्वा शब्दार्थयोस्सम्बन्धस्य नित्यत्वमेव अत्र (अधिकरणे) धयिषितमिति तच्च नोपपद्यत इति पूर्वपक्षप्रस्तावः क्रियते। 'शब्दस्यार्थेन न्ध' इति पूर्वसूत्रस्थसम्बन्धशब्दः अत्र अनुषज्यते। स च सम्बन्धः साङ्केतिक.। ह सूत्रकारः कर्मेति कर्मत्वं क्रियमाणत्वं कार्यत्वमिति वा। संकेते सति हि कत्वं पदानां युज्यते। तथैव दर्शनात्। यदि वाचकतादिसम्बन्धः स्वाभाविकः तेषामेव गवादिशब्दानां वस्त्वन्तरेषु सङ्केतात् वाचकत्वं न पश्येम। अपि च र्यम्लेच्छादिपुरुषभेदेन एकस्यैव शब्दस्य अनियतत्वदर्शनात् शब्दार्थयोः बन्धो न नित्य इति प्रतीयते। किं च शब्दार्थसम्बन्धस्य नित्यत्वस्वीकारे दार्थव्युत्पत्तेः पूर्वमपि शब्दोऽर्थ प्रत्याययेत्। अपि च विप्रतिपन्नः शब्दः ङ्केतिकः, वाचकत्वात् डित्थादिशब्दवत् इत्यनुमानमप्यत्र प्रमाणम्।

अपि च उत्पन्नस्यैव अर्थस्य नामकरणं पश्चात् क्रियते। एतच्च शतपथब्राह्मणे करणविधानावसरे स्पष्टम् - यथा - 'अनपहतपाप्मा वा अहमस्मि हितनामा नाम मे धेहि' इति। अतः पदपदार्थयोस्सम्बन्धः पौरुषेयः।

## एतत्सूत्रस्य शाबरव्याख्याननिर्वाहः

यत्तु शाबरे वर्णानामनित्यत्वं पूर्वपक्षीकृत्य सौत्रं कर्मपदं कार्यं बोधयति; ः विनष्ट शब्दः पुनरस्य क्रियमाणस्य अर्थेन अकृतकः सम्बन्धो नोपपद्यते; निदानं तु सर्वत्र उच्चारणानन्तरमेव शब्दस्योपलम्भदर्शनादिति व्याख्यातम्, समीचीनम्। एवं रीत्या व्याख्याने पूर्वसूत्रात् शब्दशब्दस्य प्रथमान्तत्वेन रिणतस्य अनुषङ्गः कार्यो भवतीति गौरवम्। एवं वर्णानां नित्यत्वमपि न साधु

इति अत्रैव उत्तरत्र अस्माभि· प्रस्तोष्यते। अत· वर्णानित्यत्वपरं पूर्वपक्षोत्थानमपि न रमणीयमिति सम्बन्धस्यानित्यत्वपरं पूर्वपक्षं प्रस्तूय पदानित्यत्वमेव पूर्वपक्षिणा विवक्षणीयमिति अस्मद्व्याख्यानमेव युक्तिसहमित्यवगच्छामः ।

## अस्थानात्

इतोऽपि सम्बन्धस्य पौरुषेयत्वं सुवचम्। यतः [3]'तद्धेदं तर्हि अव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति नाम्नां रूपाणामिव प्रलयश्रवणात्। अस्थानं नाम प्रलयः । सृष्टेरनन्तरं [4]'नामरूपे व्याकरवाणि' [5]'तत् नामरूपाभ्यां व्याक्रियत' इत्यादिप्रमाणैः नाम्नां करणं प्रतीतम्। तथा च नाम्नः प्रलयश्रवणात् सम्बन्धस्य पदस्य च अनित्यत्वं सूपपादमिति 'अस्थानात्' इति सूत्रकृता उक्तम्।

## अत्र शाबरव्याख्यानविमर्शः

यदपि [6]'नो खल्वप्युच्चरितं मुहूर्तमप्युपलभामहे अतो विनष्ट इत्यवगच्छाम' इति ग्रन्थेन वर्णानां क्षणिकत्वपरं शाबरं भाष्यम्, तदपि न साधु। अस्थानं नाम सत्ताभावः। स च प्रलय एव। अन्यस्मिन् काले यत्र कुत्रापि वस्तुनः सत्तादर्शनात्। सृष्टिप्रलययो· श्रुतिस्मृतिप्रमाणसिद्धयोः शाबरैरस्वीकारात्। एवं च सति अत्र वर्णस्वरूपस्य प्रलय उच्यतामिति न शङ्कनीयम्। 'तद्धेदं तर्हीति' श्रुतौ विवक्षितं नामपदं न वर्णं न बोधयितुं क्षमते। नामशब्दस्य वाचकत्वात् पदानामेव बोधकता तस्य युक्तेति वाचकशब्दानामेव प्रलयः सूत्रे विवक्षितमिति अस्मत्कृतव्याख्यानमेव साधु।

## करोतिशब्दात्

करोतिशब्द श्रवणादपि पदानामनित्यत्वं सूपपादम्। [7]'सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वा'

**[8]'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्।**
**वेदशब्देभ्य एवादौ देवादीनां चकार सः ।।''**

इत्यादि श्रुतिस्मृतिप्रमाणेषु करोति शब्दप्रयोगदर्शनात् नाम्नां

कृतकत्वमवश्यमभ्युपेत्यम् । उक्तश्रुतिवाक्यात् रूपनाम्नो. समानकर्तृकत्वमपि प्रतीतमिति सिद्धं पदानामनित्यत्वम् ।

## अत्र शाबरभाष्यविमर्शः

अत्र शाबरे भाष्ये शब्दं कुरु, शब्दं मा कार्षीरित्यादि प्रयोगदर्शनात् करोतिशब्ददर्शनात् वर्णानामनित्यत्वं सुस्थिरं इति निरूपितम् । स्थूलदृष्ट्या अस्मत्पक्षसमानत्वेऽपि एतद्व्याख्याने वैदिकं श्रुतिस्मृत्यादि प्रमाणं न किंचित् समादृतमिति नोपादेयमेतद्व्याख्यानम् ।

## सत्त्वान्तरे च यौगपद्यात्

इतश्च पदानामनित्यत्वं सूपपादम् । यथा हरिरिति शब्द. भगवन्तं विष्णुं बोधयति तथैव सिंहवानरादीनपि बोधयतीति पदानामनित्यत्वं सुवचम् । तथा हि एकश्शब्दः युगपत् अनेकां बुद्धिं जनयतीति चेत् एकस्यैव पदस्य अनेकार्थबोधकत्वं सम्प्रतिपन्नमेव । अनेकार्थबोधने सङ्केतरूपसम्बन्धसत्त्वात् एकमेव पदमनेकान् अर्थान् बोधयति । सङ्केतं विना तदनुपपत्तेरिति शब्दार्थसम्बन्धस्य संकेतरूपत्वात् पौरुषेयत्वाच्च पदं तावत् अनित्यमिति जातम् । सत्त्वान्तर नाम अर्थान्तरमित्यर्थः । एक एव ब्रह्मशब्दः प्रकृतिं, जीवं परमात्मानं च बोधयतीति उपनिषत्सु प्रसिद्धम् । तत्र अर्थनिर्णयस्तु प्रकरणवशात् तात्पर्यबलाच्च क्रियते । पदानां नित्यत्वे अर्थभेद न सम्भवतीति पदानामनित्यत्वमेव साधु ।

## अत्र शाबरमतविमर्शः

एवं व्याख्याने कृते सति नानादेशेषु अनेकप्राणिनिष्ठत्वं शब्दस्य कथनेन वर्णानित्यत्वं पूर्वपक्षरीत्या प्रस्तुतं शाबरभाष्ये । तत् दुरुपपादम् । यतः एकस्यैव आकाशस्य नानादेशेषु विद्यमानस्य अनित्यत्वं भवतां न अभिमतमिति ईदृश व्यख्यानं न रमणीयम् । न च एकस्यैव क्रियमाणस्य वस्तुनः एव अनेकदेशनिष्ठत्वेन अनित्यत्वं विवक्षितमिति न दोष इति वाच्यम्, क्रियमाणं वस्तु व्यक्त्यात्मना अनेकं भवतीति घटवत् अनित्यता शब्दस्य नोचिता । यदि जात्यात्मना उच्यते, जातिस्तु नित्येति तस्या अनेकत्वं दुरुपपादम् ।

## प्रकृति विकृत्योश्च

इतोऽपि पदमनित्यं भवितुमर्हति । यत·दधि अत्र इत्यादिस्थले इ यणचीत्यनेन इको यणादेशे प्राप्ते दध्यत्रेति रूप सिद्ध्यति । तथा चायं इका यकाररूपो विकारदर्शनात् प्रकृतिविकृतिभावस्तु वीरणकटादिवत् अनित्यस् एवभवतीति सिद्धं शब्दस्य अनित्यत्वम् । अत्र शाबरव्याख्यानं निर्दुष्टमेवेति प्रती

## वृद्धिश्च कर्तृभूम्नाऽस्य

किं च वर्णान्तरभावरूपं वैकृतमेव दृश्यत इति तु न ; परं तु क्वचित् शब्द वृद्धिह्रासभेदेन दृश्यते । यथा गोशब्द· गोत्ववाचक· अभियुक्तैः प्रयुज्यते, त तस्मिन्नेव अर्थे म्लेच्छैः गावीति प्रयुज्यते । तथा च तत्तत्कर्तृभेदेन शब्द वृद्धिह्रासदर्शनात् समानरूपताविरहेण स्वाभाविकत्वं सम्बन्धस्य दुर्घटम् । अ पदं न नित्यमिति सिद्धम् । अत्रापि शाबरं व्याख्यानं न दुष्यति ।

# सिद्धान्तसूत्राणि

## समं तु तत्र दर्शनम्

एवं षड्भिः सूत्रैः पूर्वपक्षः उपस्थापित. । तेषां क्रमशः परिहार· षड्भि सूत्रै. क्रियते । तत्र प्रथमं तावत् 'समं तु तत्र दर्शनम्' इति प्रवर्तते । अस्यायमर्थःसङ्के सति पदानां वाचकत्वं युक्तमिति यदुक्तं तन्न साधु । पदानां वाचकत्वं सम्बन्ध स्वाभाविकत्वेऽपि न हीयेत । सङ्केतात् यत्र वाचकत्वं कल्प्यते तत्र सम्बन्ध स्वाभाविकत्वं न अपगच्छति । यथा रेखाविशेषस्य सङ्केता वर्णविशेषबोधकत्वेऽपि स्वतः बोधकताशक्ति सम्बन्धस्य नापैति । अतः शब्द बोधकताशक्तिः स्वाभाविकीति मन्तव्यम् । यथा अग्निजलादीना औष्ण्यशैत्यादिशक्तियोगस्सहजसिद्ध., यथा च चक्षुरादीनाम् इन्द्रिया बुद्धिजनकताशक्तिः स्वाभाविकी तथा शब्दस्यापि बोधकताशक्तिः स्वाभाविकी प्रतिपद्यामहे । न च हस्तचेष्टादिवत् सङ्केतमूलं शब्दस्य बोधकत्वमिति वाच्य सङ्केतयितृपुरुषाज्ञानात् । न चाधुनिक. पुरुष कश्चित् वेदस्यापि संकेतयिता भवि

मर्हति । न चेश्वर एव वेदस्य सङ्केतयिता स्यादिति वाच्यम्, शास्त्रैकवेद्यस्य ईश्वरस्यैव अस्माभिः स्वीकारात् शास्त्रे ईश्वरस्य संकेतयितृत्वं न कुत्रचिद् अश्रवणात्। 'धाता यथापूर्वमकल्पयत्'

**"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।**
**वेदशब्देभ्य एवादौ देवादीनां चकार सः ।।"**

इत्यादौ नामरूपव्याकरणस्य वेदपूर्वकत्वश्रवणात् । अत एव वेदस्य सङ्केतमूलं बोधकत्वं दुर्घटम्।

अपि च केनचित् पुरुषेण सङ्केतः अस्यायमर्थ इति कृतश्चेत् सङ्केतकरणार्थप्रयोगस्यापि सङ्केतापेक्षत्वेन अनवस्थापत्तिः । एवं प्रतिपुरुषं सङ्केतं साधयितुं न क्षमते । यतः भाषा तु बहुपुरुषसाधरणेति तत्र बोधकता पदाना न सम्भवेत्।

## संस्कृतभाषायाः माहात्म्यवर्णनम्

भाषास्वपि संस्कृतभाषाया अनादित्वं तु शास्त्रसम्प्रतिपन्नम्। न चास्या काचन भाषा योनित्वेन कीर्त्यते। एषैव सर्वासामपि भाषाणां मूलमिति मन्महे। यदि संस्कृते कश्चन सङ्केतयिता कल्प्येत, तर्हि स एव संस्कृतमयस्य वेदस्यापि स्यादिति आपतति। परं तु तन्न युक्तम्। स च सङ्केतयितृपुरुष स्मर्तव्यत्वे सति अस्मरणात् नास्तीत्येव प्राप्तम्। स्यान्नाम संस्कृतातिरिक्तासु आधुनिकभाषासु आदिमत्त्वेन सङ्केतयिता, तथापि संस्कृते वेदे च न भवितुमर्हतीति युक्तमुत्पश्याम. । अत एवोक्तं सेश्वरमीमांसायाम् [9]'अतोऽन्यत्र सङ्केतेन बोधकत्वदर्शनेऽपि वृद्धव्यवहार पारम्पर्यव्युत्पन्नस्य सङ्केतयितृपुरुषसम्भावना रहितस्य संस्कृतशब्दराशे र्न साङ्केतिकत्वमुत्प्रेक्षणीयम्' इति एवमेवाभिहितं तत्त्वमुक्ताकलापेऽपि [10]'क्षुद्रभाषासु नैवम्' इति। क्षुद्रभाषासु आधुनिकभाषासु आदिमत्त्वेन बोधकत्वं स्वाभाविकं न, परं तु सङ्केतमूलमिति तदर्थः।

यदुक्त पूर्वपक्षिणा उत्पन्नस्यैव अर्थस्य नामकरण समाम्नानदर्शनात पदानामनित्यत्वं सुवचमिति तदपेशलम् । नाम्नः आदिमत्त्वे अनादिमत्त्वेऽपि तत्कर्तृदर्शनात् न दोष । पूर्वस्मिन् कल्पे यादृशसंस्थानविशिष्टस्य यत् नाम,

तदेवास्मिन् कल्पे तादृश संस्थान विशिष्टस्य नाम क्रियते। अत· नामकरण संस्कारे क्रियमाणं नाम पूर्वपूर्वकल्पानुसारं भवतीति नापूर्वं भवति । अपि च वाचकानुसन्धानपूर्विका वाच्यसृष्टिराम्नायते 'स भूरिति व्याहरत्, स भूमिमसृजत' इति । अत नामकरणं तु प्रवाहतोऽनादीति न सांकेतिकत्वं तस्य सम्भवतीति सिद्धम् ।

शाबरभाष्ये तु एतत्सूत्रं वर्णनित्यत्वस्थापनपरं व्याख्यातम्। वर्णनित्यत्वं तु श्रुतिस्मृतिप्रमाणविरुद्धमिति अनन्तरं प्रदर्शयिष्यत इति शाबरं व्याख्यानं न नो रोचते।

## सतः परमदर्शनं विषयानागमात्

द्वितीय सिद्धान्तसूत्रमिदम्। अस्थानादित्यत्र नाम्नः प्रल्यश्रवणात् पदानित्यत्वं सुवचमिति सूचितम्। तदत्र विमृश्यते। अस्माकं सिद्धान्ते (वेदान्ते) कारणे कार्यस्य लय एव नाशशब्द वाच्य इति स्वीक्रियते। तथा च नाम्नः प्रलयस्तु सति परमात्मनि भवति। प्रलयावस्थायां परमात्मना अविभक्तं वर्तमानं नाम पुनः सृष्टिकाले तदेव नाम कारणात् विभक्तं सत् दृश्यते। अतो नानेन प्रलयश्रवणेन सम्बन्धानित्यत्वं पदानित्यत्वं वा साधयितुमलम्। विद्यमानस्य अदर्शनं तु विषयानागमात् युक्तमिति सूत्रार्थ. ।

एतादृशमौपनिषदं सिद्धान्तं शाबरा न सहन्त इति ते विद्यमानस्य शब्दस्य अदर्शने संयोगविभागादीनां कारणत्वं मन्यमानाः सूत्रमिदं व्याकुर्वन्ति । तत्र संयोगविभागादीनां प्रत्यक्षत्वमपि न स्वीकुर्वन्ति । तदिदं सर्वमौपनिषदसिद्धान्तविरुद्धमिति नोपादेयम्।

## प्रयोगस्य परम्

तृतीयं सिद्धान्तसूत्रम् इदम् । करोति शब्दप्रयोगस्वारस्येनापि पदानित्यत्वं सुवचमिति यत् कथितं, तन्निषिध्यते वाचकप्रतिसन्धानपूर्विकैव वाच्यसृष्टि. श्रुतौ प्रतिपादितेति पूर्वं निरूपितत्वात् 'नामानि कृत्वे' त्यादि केवलं प्रयोगस्य वाचक. । अतो न दोषः।

अत्र शाबरं व्याख्यानं न दुष्यति ।

## आदित्यवत् यौगपद्यम्

चतुर्थं सिद्धान्तसूत्रमिदम्। 'सत्त्वान्तरे च यौगपद्यात्' इत्यत्र एकस्यैव शब्दस्य अनेकार्थप्रत्यायन सामर्थ्यात् सम्बन्धस्य नित्यत्वं दुर्वचमिति निरूपितम्। तदत्र निरस्यते आदित्यवत् यौगपद्यमिति। यथा एक एव आदित्यः युगपत् अनेकान् अर्थान् प्रकाशयति तथैव एक एव गोशब्दः तात्पर्यानुरोधं शक्तिभेदेन अनेकान् अर्थान् बोधयतीति न दोषः।

यच्च शाबरे सूत्रमिदं वर्णानां नित्यत्वे विभुत्वेऽपि च नानापुरुषनिष्ठत्वं नानादेशवर्तित्वं च आदित्य दृष्टान्तेन न दोषायेति व्याख्यातम्, तत् सम्बन्धस्यैवास्मिन् अधिकरणे विचार्यमाणत्वात् वर्णनित्यतापरं व्याख्यानमनुचितमिति उपेक्षणीयम्।

## वर्णान्तरमविकारः

पञ्चमं सिद्धान्तसूत्रमिदम्। 'प्रकृतिविकृत्योश्च' इति सूत्रार्थ. अत्र निषिध्यते। दध्यत्रेति यः शब्दः दधिशब्दस्य विकारत्वेन निर्दिष्टः, स तु दधिशब्दात् भिन्नः। तथा च दधिशब्दः दध्यशब्दश्चेति द्वावपि भिन्नौ अनादी च वर्तेते। एवं व्यख्यानकरणात् अत्र शब्दान्तरमविकार इत्येव उचितमिति मत्वा आचार्यपादैः सेश्वरमीमांसायां शब्दान्तरमविकार इत्येव निरदेशि। परं तु सर्वेष्वपि मीमांसाग्रन्थेषु वर्णान्तरमविकार इत्येव निर्देशदर्शनात्। इकारयकारयोः प्रकृतिविकृतिभावस्य नात्र लक्ष्यत्वात् न दोषाय कल्पते। अत्र [11]'वर्णेभ्यः क्वापि' इति मीमांसापादुकापद्यमप्यनुसन्धेयम्।

अत्र शाबरं सूत्रार्थवर्णनं नातीव दुष्यतीति प्रतीमः।

## नादवृद्धिःपरा

षष्ठं सिद्धान्तसूत्रमिदम्। 'वृद्धिश्च कर्तृभूम्नाऽस्य' इति पूर्वपक्षसूत्रस्य समाधानसूत्रमिदम्। उपचयापचयरूपः यो वृद्धिह्रासादिः शब्दे भवति, स तु न शब्दस्य वाचकतास्वरूपं अन्यथयति। तीव्रमन्दभावादि· नादशब्दाभिलप्यः वर्णनिष्ठ. दृश्यते। तावता न वाचके शब्दे कश्चन भेद उत्पद्यत इति न सम्बन्धस्य

अनित्यत्वं वाच्यम् । शाबरे तु वर्णनित्यत्वस्थापनपरमिदं व्याख्यातम् सम्बन्धस्य नित्यत्वं प्रसाधितम् ।अत परं वाचकस्य शब्दस्य अपौरु प्रसाध्यते।

## नित्यस्तु स्यात् दर्शनस्य परार्थत्वात्

वाचकश्शब्दः अपौरुषेय. सांकेतिको न, शब्दप्रयोगस्य परार्थत्‍ अस्यायंभावः - सर्वोऽपि शब्दं परप्रत्ययनार्थमेव प्रयुङ्क्ते । यदि कश्चन शब्दस्य अयमर्थः मया संकेतित इति सङ्केतपूर्वकं परं बोधयेत्, तदा ' सङ्केतितात् शब्दात् व्यतिरिक्तेषु शब्देषु सङ्केतज्ञानेन भवितव्यम् । अन्यथा बोधानुदयप्रसङ्ग. । एवं प्रतिशब्दं प्रतिपुरुषं च सङ्केतज्ञानापेक्षायां अनवस्थैव स्य वाचकश्शब्दो नित्यः अपौरुषेय इति स्वीकार्यम् ।

अत्र शाबरं व्याख्यानं न प्रतिकूलमस्माकम् ।

## सर्वत्र यौगपद्यात्

न चास्मिन्नेव देशे काले वा गोशब्दस्य सास्नादिमत्पिण्डमर्थः, अपर देशे काले वा नैवम् इति नियमादर्शनात् शब्दः अपौरुषेय इति सिद्धम् । पौरुषेयत्वं शब्दस्य स्यात्, तदा एतत्क्षणात् अयं शब्दः एनमर्थं बोधयितुं प्र इति स्वीकर्तव्यम् । एवं रीत्या कस्यापि स्मरणविरहात् शब्दस्य नित्यत्वं सुवच

युगपत् सर्वगवीषु गोशब्दात् प्रत्ययो जायत इति शब्दनित्यत्वं प्रसा शाबरभाष्ये ।

## संख्याऽभावात्

एते शब्दा· नित्या· अत एव अपौरुषेयाः, अन्ये च अनित्याः सांकेतिका पाणिन्यादिमहर्षिभि र्वा लौकिकैः वा एतावता विविच्य असंख्यानात् शब्द नित्यत्वं सूपपादम् । अतः संख्या अभावात् इति सूत्रस्वरूपं भवति ।

अत्र शाबरभाष्ये उच्चारणावृत्तिस्तु शब्दान्तरत्वे न भवितुमर्हती शब्दनित्यत्वं प्रसाधितम् । शब्दान्तरस्य स्वीकारे अष्टौ गोशब्दा इत्येव वक्त भवति, परं तु अष्टकृत्वो गोशब्द इत्येव प्रयोगदर्शनात् । अतो वर्णा· नित्या इ

शाबरा वर्णयन्ति। अत संख्या भावात् इति सूत्रस्वरूपं एतस्मिन्मते युक्तं भवति।

## अनपेक्षत्वात्

यत्तु पाणिनिना महर्षिणा [12]'लोपश्शाकल्यस्य' इत्यादिप्रयोगेन शाकल्यादीनां सङ्केतयितृत्वं क्वचित् स्वीकृतमिति शब्दनित्यत्वस्थापनं न निर्दुष्टमिति तदपि एवं परिहर्तव्यम्। शाकल्यादीनां मत भेद एव तत्र उच्यते। न तु सङ्केतयितृत्वं तेषां निर्दिश्यते। 'सिद्धे शब्दार्थसम्बन्धे नियमार्थं व्याकरणमि'ति नियमात् न शाकल्यादयः कंचन शब्दं कस्मिंश्चिदर्थे सङ्केतयन्ति।

शब्दस्य अपेक्षितविनाशकारणरहितात् शब्दो नित्यः इति शाबरभाष्यकृतं व्याख्यानमत्र।

## प्रख्याभावाच्च योगस्य

भगवानेव यदा यदा भुवि अवतीर्ण· आसीत् तदा सर्वस्य शब्दस्य सङ्केतयिताऽपि आसीत् स्वयोगबलादिति चेदत्रोच्यते। भगवतः अवतारकथनं तु प्रत्यक्षादिवेद्यं न, परं तु शास्त्रैकसमधिगम्यम्। तदुच्यते प्रख्याऽभावात् योगस्येति। अयमर्थः - प्रख्यानं नाम प्रसिद्धिः प्रत्यक्षादि प्रमाणैरित्यर्थः। योगस्य परमात्मनः योगस्य प्रत्यक्षादिभिरदर्शनात् इत्यर्थः। तथा च शास्त्रस्यैव प्रामाण्यात् तच्च शास्त्रं वेद एवेति स्वीकारात् तस्य अपौरुषेयत्वस्वीकाराच्च शब्दस्य नित्यत्वं सुस्थम्।

शाबरभाष्ये तु प्रख्याभावशब्देन प्रत्यभिज्ञां बोधयित्वा शब्दस्य वायवीयावयवसंयोगजन्यत्वाभावेन नित्यत्वं प्रसाधितम्। अस्मिन् व्याख्याने योगशब्दार्थः वायवीयावयवसंयोगः कथं भवतीति विद्वांसः प्रमाणमत्र।

## लिङ्गदर्शनाच्च

[13]'तस्मै नूनमभिद्यवे वाचा विरूपनित्यया वृष्णे चोदस्व सुष्टुतिम्' इत्यादि श्रुतिरपि शब्दस्य नित्यत्वे लिङ्गं हेतुः भवति। अस्यायमर्थः - विरूपा च सा नित्या चेति विरूपनित्या। रूपयतीति रूपं कर्ता। विगत रूपं यस्या इति कर्तृरहिता इत्यर्थः। अत्र वाक् शब्दः अर्थप्रत्यायकं पदं वा वाक्यं वा बोधयति, न वर्णमात्रम् वर्णानामर्थप्रत्यायनसामर्थ्यविरहात्। एतेन इयं श्रुतिः वर्णनित्यत्वबोधकेति

शाबरभाष्यकृतं व्याख्यानं न निर्दुष्टमिति प्रतीयते।

एवं शब्दानां नित्यत्वमपौरुषेयत्वं वा प्रसाधितम्।

एतावता सेश्वरमीमांसानुरोधमधिकरणमिदं निरूपितम्।

## वर्णानित्यत्वस्थापनम्

वर्णाः न नित्या. उच्चारणजन्यत्वेन उत्पत्तिमत्त्वात्। न च वर्णानामनित्यत्वे तत्समुदायरूपस्य पदस्यापि अनित्यत्वं सिद्धमिति शब्दार्थयोस्सम्बन्धस्यापि नित्यत्वं व्याहन्येत इति वाच्यम्, जातिग्रहणवदुपपत्तेः। तथा हि घटादीनां व्यक्तेः अनन्तत्वेन शब्दार्थसम्बन्धग्रहणस्य दुश्शकत्वेऽपि घटत्वजातिमादाय यथा व्युत्पत्तिरिष्यते, तथैव वाचकपदानामानन्त्येऽपि वाचकपदत्वजातिपुरस्कारेण व्युत्पत्तिस्वीकारात् पदनित्यत्वं सम्बन्धनित्यत्वं च निर्दुष्टमेव। तदुक्तं मीमांसापादुकायाम् -

[14]''**व्युत्पत्ति र्वाच्यवर्गे ह्यति विषमतमा जातियोगान्निरूढा**
**शिक्षेयं वाचकेऽपि प्रथयितुमुचिता शीलितन्यायवृत्तैः।**
**किं चोदात्तादि भेदा अपि विलयभृतो वाचकेषूपयुक्ताः**
**तादृक्त्वेनैव तेषां यदि नियमवचस्तद्वदत्रेति भाव्यम्॥**'' इति।

किं च वर्णा नित्या इति कथनेन वेदानां प्रामाण्यम् अनाप्तवाक्यस्य चाप्रामाण्यं च सिद्ध्यतीति मन्येत, तर्हि किं वर्णानामनित्यत्वकथनेन वेद प्रामाण्यं हीयेत? नैतत् युज्यते। वर्णानां तु अनित्यत्वं तु क्रमवत् युक्तमेव। आनुपूर्वीरूपो यः क्रम. स तु उच्चारण एव भवतीति पुरुषकृतिसाध्यत्वेन अनित्यः तद्वदेव वर्णा अपि अनित्याः वर्णानां नित्यता विरहेण वेदस्य प्रामाण्यं नापैति। पदस्य सम्बन्धस्य च नित्यत्वात् वेदनित्यत्वं दुरुपह्नवम्। वेदानामपौरुषेयत्वं नित्यत्वं च पूर्वपूर्ववर्णोच्चारण-क्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेण उच्चार्यमाणत्वरूपम्। अन्यथा वर्णनित्यतामत्रेण वेदनित्यत्वस्थापने काव्यादिष्वपि वर्णानां सद्भावात् तत्समुदायरूपस्य तस्यापि अपौरुषेयत्वनित्यत्वादिप्रसङ्ग.। अतः एतदधिकरणकृत्यं न वर्णनित्यतास्थापनम्, अपि तु सम्बन्धस्य पदस्य च नित्यत्वस्थापनम्, येन च वेदप्रामाण्यसिद्धिरिति सिद्धम्। तदिदमुक्तं -

[15]''**वर्णानित्या यदिस्युस्तदपि भवति किं मानताऽनाप्तवाक्ये**
**ते चानित्या भवेयुः क्रमवदथ च सा किं न निर्दोषवाचि ।**
**वेदप्रामाण्यसिद्ध्यै तदिह बतमुधा वर्णनित्यत्वक्लृप्तिः**
**वेदानित्यत्वशङ्कां प्रजनयति पदानित्यताऽतो निषेध्या ।।''** इति ।

किं च अस्पर्शत्वे सति विशिष्टशब्दाधारत्वं श्रोत्राप्यायकत्वं चेति आकाशस्य लक्षणम् अस्मदिष्टम् । शब्दाश्रयस्य आकाशस्य उत्पत्तिविनाशौ वेदान्तिनामभिमतावेव । [16]'आत्मन आकाशस्सम्भूत' इति श्रुतिस्वारस्येन आकाशस्य उत्पत्तिमत्त्वं स्वीकार्यमेव । एतच्च [17]'न वियदश्रुतेः' इत्यत्र ब्रह्ममीमांसायां स्पष्टम् । अतः आकाशस्य अनित्यत्वेन तदाश्रितस्य तद्गुणस्य च शब्दस्य अनित्यत्वं स्वरससिद्धम् । अपि च स च शब्दः आकाशेन सह उत्पद्यते, तद्विलये च विलीयते । अतः आप्रलयावस्थायित्वमेव शब्दस्य स्थिरत्वम् । तत्तत्पुरुषोच्चारणकालेषु न नवनवोत्पत्तिः, किं तु अभिव्यक्तिमात्रम् । तत्र ताल्वादिव्यापाराणां व्यञ्जकत्वमभिमतम् । अत एव स एवायं गकार इति प्रत्यभिज्ञाया निर्वाहोऽपि सुकर । एवं प्रतिकल्पं वर्णभेदस्वीकारोऽपि पदनित्यत्वं कथनं तु साजात्यनिबन्धनमिति ब्रूमः । तदिदमाहुः-

[18]''**शब्दस्पर्शादिहीनात् त्रिगुणजलनिधेरूर्मिजालैकदेशे**
**श्रोत्रादि ग्राह्य तत्तद्गुणगणघटितः श्रावितो भूतवर्गः ।**
**शब्दस्याकाशनाशे लय इति कतिचित् प्रत्यभिज्ञानुरोधात्**
**तैरत्यास्थायि नित्या पदनियतिरसौ वर्णसाजात्ययुक्ता ।।''**

यच्च शब्दस्य सर्वभूताश्रितत्वादिविशेषप्रपञ्चनं न्यायसिद्धाञ्जनतत्त्व मुक्ताकलापादिग्रन्थेषु, तदत्र विस्तरभिया न कृतम् ।

अपि च परा पश्यन्ती मध्यमा वैखरीति वर्णानां क्रमेण उत्पत्तिरुच्यते । त वायुजन्यः शब्द· प्रथमं प्राणापानापरपर्यायमित्रावरुणवासस्थाने नाभौ उत्पद्यते सा वाक् सूक्ष्मा परा चेति व्यवह्रियते । ततः हृदयस्थाने उत्पद्यमाना वाक् पश्यन्ती ताल्वादिस्थाने जायमाना वाक् मध्यमा । तत. श्रोतृश्रव्यत्वेन विद्यमाना वा वैखरीति च व्यपदिश्यते । एतादृशक्रमनियतिविशिष्टो वर्ण· कथं नित्य. स्यात्

अतो वर्णानामनित्यत्वं दुरपह्नवम्। तदुक्तं -

[19]''**सूक्ष्मा पश्यन्त्यसौ वाक् क्रमसमुदयनात् मध्यमा वैखरीति**
**प्राप्ता भेदं विचित्राकृतिरुदयति तत् सुस्थितं वर्णजन्म॥**'' इति

किं च मीमांसकैः वर्णानां वाय्वादिनामभिव्यक्तिमात्रं स्वीकृत्य नित्यत्व प्रसाधितम्। तत् [20]'अभिव्यक्तौ दोषात्' इत्यत्र वैशेषिकदर्शने दूषितम् सूत्रस्यायमर्थ - वर्णानामभिव्यक्तौ समानदेशानां समानेन्द्रियग्राह्यान प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दोषः स्यात् येषां समानदेशानां समानेन्द्रियेण ग्रहण भवति, एकेन व्यञ्जकेन तेषामभिव्यक्तेर्दर्शनात्। यथा घटस्य संख्या परिमाणं रूप च एकेन चक्षुरिन्द्रियेण गृह्यते, एकश्च दीपस्तेषामभिव्यञ्जको दृश्यते। तथा च वर्णानामभिव्यक्तिपक्षस्वीकारे समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं क्वचिदुपलब्धम्। अन्यथा एकस्य ककारस्य अभिव्यक्तौ सर्ववर्णाभिव्यक्तिप्रसङ्गः।

एतद्दूषणमपाचिकीर्षुणा मीमांसकेन समानेन्द्रियग्राह्यत्वेऽपि केषांचित् सहकारिभेदापेक्षादर्शनात् न दोषायेति समहितम्। तथा हि - यथा निम्बत्वादिकं चक्षुरिन्द्रियग्राह्यमपि न केवलं चक्षुरिन्द्रियेण निम्बत्वादिकं निर्धारयितुं क्षमते, परं तु त्वचि वर्तमानस्य गन्धविशेषस्य ग्रहणसापेक्षं निर्णीयते। तद्वत् ककारादिग्रहणेऽपि प्रतिनियतः वायुभेदः सहकारीति न ककाराभिव्यक्तौ सर्ववर्णाभिव्यक्तिप्रसङ्गः।

नैतन्मीमांसकमतं युक्तिसहम्। तथा हि - गन्धग्रहणात् पूर्वमेव चक्षुरिन्द्रियेण निम्बत्वगादेर्विषयीकृतत्वात् न गन्धग्रहणं तद्ज्ञानं प्रति कारणं भवितुमर्हति। तद् द्रव्यं प्राक् न दृष्टं चेत् तत्र भूयोवयवसंनिकर्षभाव एव कारणम्। यत्र गन्धग्रहणपूर्वकं तदुपलब्धिः, तत् अनुमितिरूपं भवति। अतो विषमोदाहरणमिदं तस्य भवति। अपि च समानदेशत्वसमानेन्द्रियग्राह्यत्वसत्त्वेऽपि तत्तद्वस्तु प्रत्यक्षे सहकारिकारणान्तरस्वीकारे घटार्थमारोपितात् आलोकात् अन्यः पटार्थमारोपणीयः स्यात्। अतो वर्णा न नित्या, अपि तु अनित्याः इति सिद्धम्। तदिदमाह -

[21]''**एकाक्षग्राह्यवर्गे सहकृति नियमो भाति निम्बत्वगादौ**
**तद्वद्वर्णप्रभेदप्रतिनियतमरुद्भेद इत्यप्यपास्तम्।**

**व्यक्तिर्निम्बत्वगादे र्न भवति परमुद्भूतिमात्रोपयोगात्**
**तादृक्चेत् व्यक्तिहेतु र्न कथमिह भवेदन्यथाऽति प्रसङ्गः ।।''** इति।

न च 'स एवायं गकार' इत्यादिप्रत्यभिज्ञाबलात् शब्दनित्यत्वमेष्टव्यमिति वाच्यम्, 'स एवायं गन्धः' 'तदेवेदं रूपम्' इति रूपरसगन्धस्पर्शादिष्वपि प्रत्यभिज्ञायाः दर्शनात् न प्रत्यभिज्ञायाः वर्णनित्यत्वसाधकत्वकथनं युक्तम् । न चानेकत्वे वर्णानां व्यक्त्यानन्त्यतदुत्पत्तिध्वंसादिकल्पनं गौरवमावहतीति वाच्यम्, 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात् वर्णानामुत्पत्ते र्दर्शनात् तन्नित्यत्वकल्पनं न साधु। तदिदमाहुः -

[22]''**गन्धादौ प्रत्यभिज्ञा भवति न च तया तत्र नित्यत्वमिष्टं**
**सादृश्यात् तत्प्रक्लृप्तिः समगतिरुभयोः आगृहीति र्न चेत् स्यात् ।**
**व्यक्त्यानन्त्यं च दृष्टं सममिदमुभयो र्लाघवोक्तिश्च लघ्वी**
**तस्मात् वैयत्यमात्रादयमुपनिहितो वर्णनित्यत्ववादः ।।''** इति।

न चैवं सति वर्णानित्यत्ववत् पदानित्यत्वमपि सुकरं, 'नामानि कृत्वा अभिवदन्' इति करोति शब्दश्रवणादिति वाच्यम्, तत्र 'धाता यथापूर्वमकल्पयत्' इति यथापूर्वमेव करणात् न पदानामनित्यत्वं सांकेतिकत्वं वा सम्भवतीति प्रागेव न्यरूपि अस्माभिः । अत एवोक्तं —

[23]''**कृत्वा रूपाणि नामान्यपि च वितनुते नाथ इत्यागमोक्त्या**
**नानित्यत्वं पदानां पुनरपि हि यथापूर्वमेव प्रयुङ्क्ते ।**
**बाह्यक्षेपाय सूत्रैरिह कथयतु वा वर्णनित्यत्वमाप्तः**
**क्लृप्तं तद्वैभवात् स्यात् न कथमितरथा नैगमानां प्रकोपः ।।''** इति।

## वर्णसमुदायस्यार्थप्रतीतिजनकत्वसम्भवनिरूपणम्

ननु वर्णानां समुदायः हि पदम्, तथा सति पूर्वपूर्वोच्चरितवर्णानां क्रमशः नष्टत्वे क्रमस्य विरहात् पदनिष्पत्तिः कथं सम्भवति? न च एकस्मिन्नेव क्षणे पदघटितानां सर्वेषामपि वर्णानामुत्पत्तिः स्यादिति वाच्यम्, तथा सति वर्णानां पूर्वोत्तरभावित्वविरहेण अर्थ प्रतीति र्न स्यात् इति चेत् —

अत्राहुः वर्णनित्यत्ववादिनः मीमांसकाः - वर्णास्तु नित्याः, उच्चारणवशा क्रमेण अभिव्यज्यन्ते। तथा च 'घटः' इत्यत्र घकारोत्तराकारोत्तरटकारोत्तराकारोत्त विसर्जनीयरूपाः वर्णा विद्यन्ते। तत्र घकारोत्तरत्वमकारस्य घकाराभिव्यत्युत्पत्तिक्ष ध्वंसोत्पत्तिक्षणोत्पत्तिकाभिव्यक्तिकत्वरूपमेव। तथा च क्रमस्यापि विवक्षितत्वा अर्थप्रतीतिजनकत्वं वर्णसमुदायस्य सुशकम्।

अत्र वदन्ति अनित्यत्ववादिनः - 'घट' इत्यत्र घकारोत्तरत्वं अकारस्य घकारोत्पत्तिक्षणध्वंसोत्पत्तिक्षणोत्पन्नत्वमेव। क्रमस्यात्र उत्पत्तिघटितत्वात नकिंचित् अनुपपन्नमत्र।

वैयाकरणास्त्वेवमत्र आशेरते - पदार्थप्रतीतेः पूर्वं तैः कल्पितस्य पदस्फोटाख्यस्य वस्तुनः वर्तमानत्वात् अर्थप्रतीतिः पदात् सुलभैवेति।

मौनिवाक्ये कथं निर्वाह इति चेत् - उच्यते - व्यवहर्तृपुरुषाशयमपि उत्तरत्वे निवेश्य निर्वाहः कार्यः। यथा घकारोत्तरत्वेनाभिमतः अकार इति।

किं च तत्तद्वर्णानुभवजन्यतावत्संस्काराधीनम् एकं स्मरणं यथावत्क्रमादिविषयकं पदार्थज्ञानव्यवहितपूर्वक्षणे विद्यत इति तदेकस्मृत्यारूढत्वेन वर्णानां पदार्थप्रतीतौ करणत्वं वक्तव्यम्। अतः पूर्वपूर्वोच्चरितवर्णानां नष्टत्वेऽपि न काऽपि क्षतिः। तदिदमाह -

[24]"**उत्पत्त्यैव क्रमाप्तिं कतिचिदकथयन् बोधके वर्णवर्गे**
**व्यक्त्यैकेऽन्ये तु तत्तद्व्यवहृतिकृदभिप्रायभेदात् वदन्ति।**
**युक्तं तत् यौगपद्यं न कथमपि ततः संस्क्रियाजालजन्य-**
**स्मृत्यारूढेषु वर्णेष्ववगतिकरणं कल्प्यमेकं यथार्हम्॥"** इति।

एवं वर्णानामनित्यत्वं प्रसाध्य वैयाकरणाभिमतं स्फोटवादोऽपि निरस्तः सेश्वरमीमांसायां मीमांसापादुकायां च।

## स्फोटवादनिरासः

अत्राहु वैयाकरणाः स्फोटवादिनः - 'शब्दात् अर्थं प्रत्येमि' इत्येव लोके व्यवहारदर्शनात् वर्णानामनेकत्वात् तेषां वाचकताकल्पनं न युक्तम्। अत.

ातिरिक्त· पदस्फोटः पदार्थबोधकः, एवं वाक्यार्थबोधकत्वेन पदातिरिक्त· क्यस्फोटः च स्वीकार्यम्। इति।

तदेतत् प्रमाणविरोधात् अनुपादेयम्। तथा हि – वर्णपदाद्यतिरिक्तं स्फोटाख्यं चिद् वस्तु नानुभूयत इति न तत्र प्रत्यक्षं प्रमाणम्। अर्थप्रतीतिजनकत्व पदानां क्यानां वा पूर्वोक्तरीत्या जायमानत्वात् तदर्थं स्फोटस्य अनुमानेन कल्पनमपि न भवति। एवमागमोऽपि न प्रमाणम्। [25]'शब्दब्रह्मणिनिष्णातः परं ब्रह्माधिगच्छति' यत्र शब्दशब्दो न स्फोटं बोधयति, परं तु ऋग्यजुस्सामादिरूपं वेदमेव। स्फोटस्त्वं वर्ण संश्रयः' इति ध्वन्यात्मकशब्दापेक्षया वर्णात्मकशब्दस्य र्थबोधकताशक्तिरस्ति, तद्रूपत्वं परमात्मनो वर्तत इति स्तूयते। किं च गौरित्येकं मिति प्रत्यक्षस्य एकोपाध्यवच्छिन्नवर्णसमुदायविषयत्वेनाप्युपपत्तेरिति न त्वसाधनार्थं स्फोटकल्पना युक्ता। तदिदमाह-

**[27]'वर्णान्यः कोऽपि वैयाकरणनिगदितः स्फोटसंज्ञस्तु शब्दो**
**न प्रत्यक्षो न कल्प्यो न च वचनमितो नान्यतोऽपि प्रसिद्धः।**
**वर्णेषूक्तेषु बोधे भजति हि कलहः स्फोटबोधेऽपि साम्यं**
**शब्दव्युत्पत्तिसिद्धौ न च भवति मुधा स्फोटसिध्यैव योगः ॥''**

ते।

किं च शब्दादर्थं प्रत्येमीत्यत्र एकत्वव्यवहारस्य अस्मदुक्तरीत्या निर्वाहे ोटकल्पनं न युक्तं भवति? तथा हि एकज्ञानविषयत्वेन संघातभावमापन्ना वर्णा पदम्; एवमेकार्थप्रतिपादनरूपकार्यावच्छिन्नानि पदार्थप्रतिपादनानि पदान्येव क्यम्। अत्रैक्यं समान बुद्ध्यवस्थितानां संघातभावविषयमिति न विरोध.। तत्समुदायातिरिक्त स्फोटयोरनुपलम्भात्। एवं यदि न स्वीक्रियते मीमांसाया तीयतृतीयचतुर्थाध्यायानां विषयनिरूपणमेव स्फोटवादिनां दुश्शकं भवेत। क्यार्थस्यभवदुक्तरीत्या वाच्यार्थस्य अखण्डत्वे तिस्र आहुतीर्जुहोतीत्यादौ ख्याभेदेन कर्मभेदनिरूपणं न कर्तुं शक्येत। उद्देश्योपादेयविभागपरत्वेनैव ङ्गाङ्गिभावस्य निरूपणं व्रीहीनवहन्तीत्यादौ यत् क्रियते, तत् भवन्निरूपणरीत्या संगच्छेत। एवं 'पुरोडाशकपालेन तुषान् उपवपति' इत्यत्र कपालप्रयोजकत्वं

पुराडाशस्यैवेति पुरोडाशपदकृत्यमिति यत् मीमांसकेष्ट वर्णनं तत् भवदुक्त वाच्यार्थस्याखण्डत्वे न सम्भवति। अतो स्फोटवाद नसमीचीन., अप्रामा श्च। तदुक्तम् -

[28]"**वाक्यस्फोटोऽवक्लृप्तः प्रतिफणिति पदस्फोटनीत्या निरस्तो**
**वाक्ये तद्गोचरे वा कथमपि हि न निर्भागता जाघटीति।**
**यत् भेदाङ्गप्रयुक्तिप्रभृति तदपि हि त्वन्मते दुर्घटं स्यात्**
**शब्दादर्थो विभातीत्यपि समुदित धीमूल एकत्ववादः ॥"**

एवं स्फोटतत्त्वस्य निरासोऽकारि मीमांसापादुकायाम् अमुमेव स्फो निरसितुमेव मीमांसका· वर्णनित्यत्ववादं प्रवर्तयामासुरित्यपि वक्तुं शक्यत मीमांसापादुकायाम् उत्प्रेक्षितम् - यथा

[29]**नित्यश्शब्दो यदीष्टः, स कथमभिमतो दृश्यमानातिरिक्तः**
**प्रत्यक्षे शब्दवर्गे ध्वनिभिरपि परं तादृशैर्व्यक्तिरस्तु।**
**अश्रद्धेयाऽत्र वैयाकरणसरणिरित्यर्थमर्थापयद्भिः**
**नित्यत्वं वर्णनिष्ठं भवतु च कथितं लाघवं लक्षयद्भिः ॥"** इ

एवं वर्णानित्यत्ववादः मीमांसापादुकायां निरूपितः। एवं पदनित्यत्त्व प्रसाध्य वेदस्य प्रामाण्यं प्रतिष्ठापितम्।

पूर्वेषु पञ्चसु अधिकरणेषु पूर्वपक्षसूत्रं न किमपि दृष्टं यच्चास्मिन्नधिक दृश्यते। न चैवं विना पूर्वपक्षप्रस्तावं सर्वत्र सिद्धान्तकथनमात्रं स्यात्, त उपादेयत्वात् पूर्वपक्षिणामनेकत्वात् कस्य निरास. प्रस्तोतव्य इ विनिगमनाविरहाच्च, सर्वेषां पक्षाणां प्रस्तावे अल्पबुद्धीनां छात्रा प्रत्ययासम्भवाच्चेति वाच्यम्, प्रत्यधिकरणं प्रधानतया ये पूर्वपक्षिणस्सन्ति ते वादप्रस्तावः पूर्वपक्षत्वेनावश्यं कार्य एव। अन्यथा मन्दबुद्धीनां छात्रा बुद्धौस्खालित्यसम्भवात् सिद्धान्ते दृढतरज्ञानासम्भवात्। अतः यथासम्भ पूर्वपक्षसिद्धान्तयो प्रस्तावः कार्य इत्याहुः

[30]'**शुद्धे सिद्धान्तसूत्रे फलवति न तथा वर्णपक्षोक्तबाधौ**
**पक्षाणां च त्रिकालप्रभवमतिभुवां का चिकित्सेति चेन्न।**

**छद्मप्रक्षोभणीय च्छलगतिरमुना शिक्षितः छात्रगुप्त्यै**
**दुष्टोपन्यासतन्निस्तरणकथनतस्तादृशान्योपरोधात् ।।'** इति।

नन्वेवं सति पूर्वपक्षकथनस्यापि अपेक्षितत्वे पूर्वपक्षसूचकं सूत्रं किं, सिद्धान्तद्योतकं सूत्रं किमिति कथमवगति र्भवेदिति चेदत्र उच्यते - सूत्रार्थस्य स्वारस्यं दृष्ट्वा निश्चेतव्य यदिदं पूर्वपक्षपरं, इदं सिद्धान्तपरमिति। इयं च परम्परा न केवलं सूत्रमात्रदृष्टा, अपि तु वेदेऽपि दृश्यते यथा - [31]'कुत एतदिति। कथमसत सज्जायेत। सदेव सोम्य इदमग्र आसीत्' इत्यादि श्रुतिपरम्परा दृश्यते। एवं शाबरभाष्येऽपि 'को धर्म. कथं लक्षणकः' इत्येव निरूपितम्। एवं ब्रह्मसूत्रभाष्येऽपि 'किं तद् ब्रह्म? यद् जिज्ञासितव्यम्' इत्यादि दृश्यते। अतः पूर्वोक्तरीत्या अङ्गपञ्चक विशिष्टमेव सर्वमपि अधिकरणं विवेचितं मीमांसाशास्त्रे इत्यवधेयम्। तदिदमुक्तम्-

[32]**''दृष्टौ तद्वैक इत्याद्यकृतक फणितौ पूर्वपक्षोक्तिभङ्गौ**
**तत्र स्वाध्यायपाठः फलमिति तु न सत् दुष्टहानादिदोषात्।**
**सूत्रेऽप्येषैव रीतिर्भवति फलवती नान्यथाऽतिप्रसङ्गात्**
**कः पूर्वः कश्च पक्षः पर इति नियमः स्वारसिक्या प्रवृत्त्या ।।''**

इति।



## पादटिप्पणी

1. मी.पा. 140
2 वैशेषिकदर्शनम्
3. बृहदारण्यकोपनिषद् 1-4-7
4 छा. उ. 6-3-2
5. बृ. उ 1-4-7
6 शाबरभाष्यम् 1-1-7
7 पुरुषसूक्तम् - 7
8 विष्णुपुराणम् - 1-5-625
9. सेश्वरमीमासा - 1-1-6
10. तत्त्वमुक्ताकलाप.
11. मी पा. 144
12. अष्टाध्यायी 8-3-19
13. तै. स 2-6-11
14. मी.पा 141

15. मी पा 142
16. तै. उ. आनन्दवल्ली
17 ब्र सू 2-3-1
18. मी पा 143
19 मी.पा 144
20 वैशेषिकदर्शनम् 2-2-31
21. मी.पा. 145
22. मी.पा. 146
23. मी.पा 149
24 मी.पा. 150
25. महाभारतम् - शान्तिपर्व 276-2
26. न्यायसिद्धाञ्जने अद्रव्यपरिच्छेदे उद्धृतमिदं प्रमाणवचनम्।
27 मी पा. 151
28 मी.पा 152
29. मी.पा 147
30. मी.पा 163
31 छा उ. 6-2-2
32. मी.पा 154



# ८. वेदस्य अर्थप्रत्यायकत्वाधिकरणविचारः

**सूत्राणि – उत्पत्तौ वा अवचनाः स्युः अर्थस्य अतन्निमित्तत्वात् (पू)**
**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् (सि)**
**लोके सन्नियमात् प्रयोगसंनिकर्षः स्यात् (सि)**

एवं सूत्रत्रयघटितमधिकरणमिदं सप्तमं वरीवर्ति।
तत्र आद्यं तु सूत्रं पूर्वपक्षपरम्, अन्त्यद्वयं तु सिद्धान्तद्योतकम्।
शाबरभाष्यरीत्या अधिकरणार्थप्रदर्शनम्

तत्र तावत् शाबरव्याख्यानं कीदृशमत्र प्रवर्तत इति द्योतयितुकाम शाबरभाष्यानुसारं अधिकरणार्थनिरूपणं प्रस्तौमि।

चोदनावाक्यानि अर्थात् वेदवाक्यानि विषयो भवति अधिकरणेऽस्मिन्। चोदनाया. धर्माधर्मयोः प्रमाण्यमस्ति वा न वेति संशयः। तत्र तावत् वेदवाक्यात् प्रतीतस्य अर्थस्य पृथक्सम्बन्धग्रहापेक्षत्वात् तथा क्वचिदनुपलम्भात् वेदवाक्यानि नार्थप्रत्यायकानीति पूर्वः पक्षः। तदुक्तं न्यायमालाविस्तरे –

[1]"**वेदवाक्यममानं स्यात् मानं वा नास्य मानता।**
**पृथक्संगत्यपेक्षायामनपेक्षत्व वर्जनम्॥**" इति।

अस्यायं भावः [2]'अथ गौरित्यस्य शब्दस्य कोऽर्थः? सास्नादिविशिष्टाकृतिरिति ब्रूम.' इति भाष्यग्रन्थेन आकृतिवादे पदार्थस्य नित्यत्वं प्रसाधितम्। एवं

शब्दाधिकरणे [3]'शब्दनित्यत्वं समर्थितम्। एवं सम्बन्धाक्षेपपरिहारग्रन्थे [4]'यो ह्यत्र व्यपदेश्यः सम्बन्धः तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षण' इति सम्बन्धस्यापि नित्यत्वमभ्युपगतम् । एवं सत्यपि वेदवाक्यानामप्रामाण्यं साध्यते पूर्वपक्षिणा।

तमिमं पूर्वपक्षं प्रस्तौति सूत्रकारः 'उत्पत्तौ वा अवचनाः स्युः अर्थस्य अतन्निमित्तत्वात्' इति। अस्यायमर्थः-वेदवाक्यात् जायमानस्य अर्थप्रत्ययस्य। निर्मूलत्वात् वेदवाक्यं न प्रमाणम्। तथा हि - 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति हि वेदवाक्यम्। तत्र यागादेः स्वर्गादिफलसाधनत्वरूपो धर्मः वाक्यार्थः। स च नैकेन पदेन उच्यते। अतः सङ्केतग्रहणात् निर्मूलो वाक्यार्थप्रत्ययः। तथा हि - प्रत्येकं वा पदानि वाक्यार्थमवगमयेयुः अथवा श्रूयमाणपदसंघातव्यतिरिक्तमन्यत् किंचित् उत पदसंघातरूपं वाक्यम् उत पदार्था वा। तत्र न तावत् प्रथमः पक्षः पदानां वाक्यार्थविशेषेण साकं सम्बन्धग्रहणाविरहात् प्रत्येकं पदेभ्यः वाक्यार्थावगति र्न सम्भवति। न च प्रत्येकं पदेभ्यः वाक्यार्थप्रत्ययः दृष्टचरः क्वचित्। नापि द्वितीयः पक्षः, 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यत्र पदत्रयमभिहितम्। उक्तपदत्रयात् अतिरिक्तं किंचित् होमस्य स्वर्गसाधनत्वबोधनपरं पदं न अनुभूयते। नापि तृतीयः पक्षः एवंजातीयकानां वाक्यानं वैदिकानां लोके अदर्शनात् वाक्यवाक्यार्थयोः सम्बन्धाग्रहणात् न वाक्यात् वाक्यार्थप्रत्ययः सम्भवति। नापि चतुर्थः पक्षः - पदार्थवाक्यार्थयोः नियतसम्बन्धविरहात् । नियतसम्बन्धः धूमाग्न्योरिव अत्र अदर्शनात्। असति च सम्बन्धेऽपि पदार्थात् वाक्यार्थप्रत्ययो भवतीति चेत् - कस्मिंश्चित् पदार्थेऽवगते सति पदार्थान्तरस्यापि अवगतः स्यात्। एवम् एकस्मिन् पदार्थे अवगते सर्वोऽपि पदार्थोऽवगतः स्यात् । एतादृशदोषपरिजिहीर्षया यदि वेदवाक्यानां पौरुषेयत्वमाश्रित्य पुरुषगतप्रामाण्येन तद्वाक्यस्यापि प्रामाण्यमातिष्ठते, तर्हि लौकिकवाक्ये कामं तद् भवतु प्रामाण्यग्रहणं, तथापि ईदृशेषु वेदवाक्येषु पुरुषस्यापि संकेतग्रहासम्भवात् पौरुषेयत्वकल्पनयापि भक्षितेपि लशुने न शान्तो व्याधिरितिवत् वेदवाक्यानां प्रामाण्यकल्पनं दुर्घटम्।

अत्र समाधिः - प्रसिद्धेषु पदार्थेषु विद्यमानानेव पदानां विशिष्टक्रियारूपवाक्यार्थज्ञानोपायत्वात् न पृथक् वाक्यस्य वाचकत्वम्। एतदेव

स्पष्टयति सूत्रकार· 'तद्भूतानां क्रियार्थेन समाम्नायो ऽर्थस्य तन्निमित्तत्वात्' इति।

सूत्रस्यायमर्थ - तद्भूतानाम् - तेष्वेव पदार्थेषु भूतानां वर्तमानां पदाना क्रियार्थेन - क्रिया हि भावना - अर्थ - प्रयोजनम् - तदुक्त श्लोकवार्तिके -

[5]**'प्रयोजनतया चैषामर्थमिच्छन्ति भावनाम्।**
**क्रियार्थेनेति तेनेह समाम्नायप्रयोजनम्॥'**

इति। तथा च साध्यसाधनेतिकर्तव्यताविशिष्टभावनाप्रतीतिरूपप्रयोजनोद्देशेनेत्यर्थ क्रियार्थेनेत्यस्य पर्यवस्यति। समाम्नायो नाम उच्चारणम्। कुत·? अर्थस्य पदार्थस्य तन्निमित्तत्वात् वाक्यार्थप्रत्ययनिमित्तत्वात्। तथा च वाक्यार्थस्य निर्मूलत्वं परास्तम्। न हि लोके गामनयेत्यादिवाक्यं प्रतीयमानगवादिपदार्थान् विहाय पदार्थेभ्योऽत्यन्तभिन्नेऽर्थान्तरे प्रसिद्धं वर्तते। तथा च पदार्था एव वाक्यार्थाना मूलमिति वाक्यानाम् अर्थप्रत्यायकत्वं सुवचम्। अत एवोक्तं न्यायमालाविस्तरे

[6]**"वेदेऽपि लोकवत् नैव वाक्यार्थे सङ्गतिः पृथक्।**
**ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः॥"** इति।

एवं च सति वाक्यानां वाक्यार्थबोधकत्वप्रकारविषये शाबरानुयायिनः भाट्टा प्राभाकराश्च विभिन्नं मतम् आतिष्ठन्ते। तदपि अत्र अधिकरणार्थशोधनाय किंचित् प्रस्तूयते।

## अभिहितान्वयवादः

तत्र तावत् भाट्टाः शाब्दं ज्ञानमेवं वर्णयन्ति। यथाह मानमेयोदयकारा भट्टनारायणः

[7]**"तत्र तावत् पदैः ज्ञातैः पदार्थस्मरणे कृते।**
**असन्निकृष्टवाक्यार्थज्ञानं शाब्दमितीर्यते॥"**

इति। अस्यायमर्थ· - ज्ञातैः पदै· कृते पदार्थस्मरणे यत् असन्निकृष्टवाक्यार्थज्ञानम् उत्पद्यते तत् शाब्दमिति। शाब्दज्ञानं तु व्युत्पत्तिमूलकमेव भवति। व्युत्पत्तिश्च वृद्धव्यवहारादिजन्येति सिद्धम्। व्युत्पत्तिकाले गोपदं सास्नादिविशिष्टस्य वाचकम् आनयनपदमानयनक्रियाबोधकमिति 'गामानय' 'गां बधान' इत्यादि प्रयोगानन्त

विविच्य पदार्थान् व्युत्पित्सु गृह्णाति । एवं जाते च पदार्थज्ञाने, तत.
विशिष्टवाक्यार्थज्ञानं लक्षणया जायत इति वदन्ति । लक्षणा हि वाच्यार्थानुपप
सम्भवति । अत्र गवादि पदैः स्मर्यमाणा· गवादिपदार्थाः परस्परान्वयमन
सामान्यरूपा एव यदि स्यु., तर्हि व्युत्पत्तिसमकालगृहीतमेकविशिष्टार्थबोधताः
भज्येतेति सामान्यरूपस्य वाच्यार्थस्य अनुपपद्यमानत्वेन परस्परान्वयरूपवि
एव तेषां पर्यवसानम् । तथा च गौः आनयनक्रियान्वितः , आनयनम
गोसम्बद्धमिति परस्परान्वयलाभेन गवानयनरूपवाक्यार्थस्य सिद्धिः । अ
पदाभिहिताः पदार्था एव परस्परमन्वयं प्राप्नुवन्तीति अभिहितान्वयवादः भाट्ट
प्रथते । अत एव एतत्पक्षसाधकतया कुमारिलपादैः

**[8]'पश्यतः श्वेतिमारूपं हेषा शब्दं च श्रुण्वतः ।**
**खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥**
**दृष्टा वाक्यविनिर्मुक्ता न पदार्थैं विना क्वचित् ॥'**

इत्येवं कथितम् । अस्यायमर्थः - येन पुरुषेण अज्ञाताश्रयं श्वैत्यं ज्ञातं, हेषा शब्द
अज्ञातरूपः हयः अनुमितः, एवं खुरविक्षेपशब्देन अज्ञातकर्तृकं धावनमनुमि
तस्य पुरुषस्य 'श्वेतोऽश्वो धावती'ति वाक्यार्थज्ञानदर्शनात् । तत्र कस्यच
पदस्याभावेऽपि उपस्थितैः पदार्थैरेव अन्वयबोधः जात इति सर्वैरप्यास्थेयम
अपि चास्मिन् मते [9]'पदानि हि स्वं स्वं पदार्थमभिधाय निवृत्तव्यापाराणि । अथेदा
पदार्थाः अवगताः सन्तो वाक्यार्थं गमयन्ति' इति शाबरभाष्यवचनमपि अनुकू
भवति । तथा च पदैरभिहिताः पदार्था एव वाक्यार्थज्ञानकारणम्, न तु पदानि ।
चात्र केवलपदैरभिहित· पदार्थ इति वक्तव्यम्, अपि
आकाङ्क्षायोग्यतासत्तिविशिष्टपदैरभिहिताः पदार्थाः वाक्यार्थे बोधे हेतुरि
वक्तव्यम् ।

## अन्विताभिधानवादः

अत्राहुः प्राभाकरा· - वाक्यं पदसमूह. । संसृष्टार्थविवक्षयैव वाक्यप्रयोग
वृद्धैः क्रियते, तथैव श्रोतृजनोऽपि संसृष्टार्थमेव प्रतिपद्यते । यथ
शिबिकोद्यमनव्यापृताः चत्वारः षड् वा जनाः शिबिकाम् उद्यच्छन्ति तथै

क्यघटकानि सर्वाण्यपि पदानि वाक्यार्थमवबोधयन्ति । पदानां च र्थान्तरान्वितस्वार्थे शक्तिरित्युच्यते । वृद्धव्यवहारादिना बोधस्तु इत्थं भवति ा - उत्तमवृद्धेन 'गामानय' इत्येवं प्रयोगे कृते तदनन्तरं मध्यमवृद्धः गवानयने र्तते । व्युत्पित्सु बालस्तदा मनसि एवं बोधः भवति यत् मध्यमवृद्धस्य प्रवृत्तिः नजन्या प्रवृत्तित्वात् मदीयप्रवृत्तिवत् इति । तादृशप्रवृत्तिजनकं ज्ञानं गामानय इति त्तमवृद्धवाक्यजन्यं तत्प्रयोगानन्तरं प्रवृत्तेरुपजातत्वात् । एवमेव असकृत् योगदर्शनेन मध्यस्थस्य पुरुषस्य गामानयेति वाक्यस्य गोकर्मकानयनरूपे क्यार्थे व्युत्पत्तिः सम्मुग्धाकारा जायते । ततः 'अश्वमानये'ति प्रयोगे श्रुते, जातायां अश्वानयनप्रवृत्तौ अश्वपदावापे तदर्थान्वयात्, गोपदोद्वापे च तदर्थानन्वयात् श्वपदस्य अर्थान्तरान्विते हयरूपेऽर्थे गोपदस्य अर्थान्तरान्विते सास्नादिमदर्थे प्रत्येकं मध्यस्थस्य व्युत्पित्सोः शक्तिग्रह. उत्पद्यते । एवं शक्तिग्राहकप्रमाणशेखरेण यवहारेण पदानाम् इतरान्वितेऽर्थे शक्तिग्रहः सञ्जायते । अस्याः तरान्वितार्थानुभवजनकतारूपत्वेन इयमानुमानिकी शक्तिरित्यभिधीयते । न च युत्पित्सु बाल. अर्थान्तरान्वितार्थज्ञानं पदप्रयोज्यमवगच्छतीति पदाभिहितानां दार्थानामेव अन्वयबोधशक्तिः अङ्गीक्रियतामिति वाच्यम्, प्रथमभाविनि पदानि रित्यज्य पदार्थेषु वाक्यार्थबोधबोधनशक्तिस्वीकारस्य असामञ्जस्यात् ।

अपि च वाक्यार्थज्ञाने वाक्यस्य तात्पर्यमावश्यकम् । नो चेत् वाक्यार्थस्य ाब्दत्वमेव नैव भवितुमर्हति । अत एवोक्तं प्रकरणपञ्चिकायाम् -

[10]**'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।**
**न्यायसम्पादितव्यक्ति पश्चात् वाक्यार्थबोधकम् ।।''** इति ।

किं च वाक्यार्थस्य पदार्थ एव यदि हेतुः स्यात् तर्हि वाक्यार्थ शाब्दो न स्यात् । शब्दः प्रमाणमिति परित्यज्य अर्थः प्रमाणमिति स्वीकृतं स्यात् अभिहितान्वयवादे । तथा सति चोदनायाः अप्रामाण्यापत्त्या सर्वोऽपि वेदः अप्रमाणमिति नास्तिकमतप्रवेशः स्यात् । अन्विताभिधानं तु शब्दनिष्ठमेवेति शब्द. प्रमाणमिति वक्तुमुचितत्वात् ।

अपि च अभिहितान्वयवादे शक्तित्रयकल्पनमापतति - यथा - (1) पदानां पदार्थबोधकत्वम् (2) पदार्थानामन्वयार्थरूप वाक्यार्थबोधकत्वम् (3) पदानामेव

पदार्थेषु संसर्गबोधनशक्तिजनकशक्तिः इति। अन्विताभिधानवादे तु एकैव शक्तिः योग्येतरान्वितं स्वार्थमभिदधातीति न शक्तित्रयकल्पनम्।

इतोऽपि बहुविषयः तत्तद्ग्रन्थेषु बहुग्रन्थेन चर्चितः यस्तु विस्तरभिया नात्र वितीर्यते इत्यलमतिविस्तरेण।

एवं वाक्यात् वाक्यार्थप्रत्ययो भवत्येवेति तद्भूतसूत्रेण सिद्धान्तितम्। तत्रैव सिद्धान्तस्य पोषणरूपं सूत्रान्तरमपि प्रायोजि सूत्रकृता 'लोके सन्नियमात् प्रयोगसंनिकर्षः स्यात्' इति। अस्यायमर्थ. - लोके तावत् गवादिरूपपदार्थानां चक्षुरादिसंनिकर्षसम्भवात् चक्षुरादिना तमर्थमुपलभ्य तदर्थप्रतिपादकशब्दप्रयोगः सन्नियम. सन्निबन्धनरूप उपपद्यते। वेदे तु तथा न भवितु मर्हति, वैदिकार्थानामतीन्द्रियत्वात्। अत· अग्निहोत्रं जुहुयात् स्वर्गकाम इत्येतेभ्य एव पदेभ्य. ये पदार्थाः अवगताः, तेभ्य एवावगम्यते अग्निहोत्रहोमात् स्वर्गो भवतीति। अतस्सिद्धं वाक्यानां वाक्यार्थप्रत्यायकत्वमिति चोदनारूपस्य वेदस्य धर्माधर्मयो· प्रामाण्यं निराबाधमिति। एवं रीत्या शाबरभाष्ये अस्याधिकरणस्य निरूपणं कृतम्।

## शाबरव्याख्यानविमर्शः

यदुक्तं शाबरे लौकिकवैदिकोभयसाधारणं सर्वमपि वाक्यं विषयीकृत्य वाक्यात् वाक्यार्थज्ञानं सम्भवति वा न वा? अथवा वाक्यस्य वाक्यार्थप्रत्यायकत्वं वर्तते वा न वेति संशयमुद्भाव्य वाक्यस्य वाक्यार्थप्रत्यायकत्वं सम्भवतीति निर्णय एवास्य अधिकरणस्य कृत्यमिति; तन्न क्षोदक्षमम्। सामान्यतः शब्दप्रामाण्यस्थापनं तु न्यायदर्शनकृत्यमिति तस्य अत्र विचारः अत्यन्तम् अनपेक्षितः। अतः केवलं वैदिक्रवाक्यं किं तदर्थप्रत्यायकम् उत न इत्येव विचारणीयमत्र। वेदवाक्यस्यैव अत्र प्रकृतत्वादिति शाबरव्याख्यानमत्र नोपादेयमेव। एवं पदस्य वा वाक्यार्थ हेतुत्वमिति पूर्वपक्षे विकल्पप्रस्तावोऽपि न समीचीन.। वेदवाक्यात् वाक्यार्थधीस्सम्भवति वा न वेति विचार्यमाणे सति तत्तद्वादिकृतं प्रकृतम् अनपेक्षितं किंचित् प्रस्तूय तन्निरसनप्रवृत्तिरपि न युक्ता। तदिदमाहुः मीमांसापादुकाकृतः -

[11] **"वाक्यात् वाक्यार्थबुद्धौ बहुविधकुहकक्षोभतो बाधितायां**
**तत्प्रत्यापत्तिसिद्ध्यै परमिहमुनिना न्यासि वाक्याधिकारः।**

**दृष्टापह्नुत्ययोगात् दृढतरविदितात् कार्यतो हेतुसिद्धौ**
**दन्तादन्तिप्रयासः पुनरिह विदुषां दर्पसंघर्षतन्त्रः ।।''** इति।

अतः वेदवाक्यानामर्थप्रत्यायकत्वमस्ति वा न वेति विचार एव एतस्मिन् अधिकरणे कार्य इति प्रतीयते। तदेव सूत्रकारस्यापि सम्मतं भवतीति ब्रूमः ।

## अस्मदभिप्रेताधिकरणार्थनिरूपणम्

वयं तु एवं अधिकरणं रचयामः -औत्पत्तिकसूत्रे शब्दार्थयोः सम्बन्ध तस्य ज्ञानमुपदेश इति धर्मस्य ज्ञापकं चोदनेति, तत् प्रमाणम् वेद. प्रमाणमिति च अर्थ-त्रयमभिहितम् । तत्र शब्दार्थयोः सम्बन्धस्य स्वाभाविकत्वम् उपपाद्य तस्य सांकेतिकत्वं निराकृतं पूर्वस्मिन् अधिकरणे । तत् प्रमाणमित्यस्य स्थापनमौत्पत्तिकसूत्रकृत्यं जातम् । अवशिष्टं 'तस्य ज्ञानमुपदेश' इति अत्र स्थाप्यते। तदर्थं वेदवाक्यानामर्थप्रत्यायकत्वं सम्भवति वा न वेति संदिह्यते। अतः वेदः लौकिकात् अतीतमप्यर्थं (स्वर्गादिपदार्थं) बोधयतीति तादृशेषु दृष्टविजातीयेषु पदार्थेषु प्रतीत्युत्पादनशक्ति र्वेदस्य वर्तते वा न वेति सन्देहस्य युक्तत्वात्।

अत्र पूर्वपक्षिण एवं कथयन्ति - वेदस्य अर्थप्रत्यायकत्वं नास्ति । लोकविरुद्धमपि पदार्थं वेदः बोधयतीति तत्र हेतुमुपस्थापयन्ति । न च पदपदार्थयोस्सम्बन्धस्य स्वाभाविकत्वात् वेदेऽपि पदपदार्थज्ञानसम्भवे न कोऽपि दोष इति वाच्यम्, लोकोत्तरेष्वर्थेषु वेदस्य प्रामाण्यं न स्वीकर्तुमुचितम्। अन्यथा विंध्याटव्यां गजस्तिष्ठतीति वाक्यात् विन्ध्याटव्यां शशः शृङ्गी तिष्ठतीति वाक्यमपि प्रमाणपदवीमलङ्कुर्वीत। किं च देवताप्रीतिद्वारा देवतायाः स्वर्गादिफलप्रदत्वं यत् स्वीकृतं तत्रेदमुच्यते - देवतायाः चेतनविशेषत्वात् अस्मासु अविद्यमानं सर्वज्ञत्वं कर्मफलप्रदत्वं इत्यादि देवतामात्रं कथं स्यात्? न हि कश्चित् मनुते शशविशेषे शृङ्गित्वमस्तीति। अतः तत् यथा असम्भवदुक्तिकं अत एव अप्रमाणम् तथैव वेदवाक्यमपीति पूर्वपक्षसारः । एतदेव सूत्रयति 'उत्पत्तौ वा वचना. स्युरर्थस्यातन्निमित्तत्वादि'ति। उत्पत्तौ च सम्बन्धौत्पत्तिकत्वादौ सत्यपि अथवा ज्ञानोत्पत्तौ सत्यामपि । अवचनाः स्युः - न प्रमापका. । अर्थस्य शब्दार्थस्य अतन्निमित्तत्वात् - शब्दमात्रनिमित्तत्वाभावादित्यर्थः ।

अत्रोत्तरः पक्षः - 'तद्भूताना क्रियार्थेन समाम्नाय· अर्थस्य तन्निमित्तत्व इति। तद्भूतानां तस्मिन्नर्थे भूतानां, संकेतासम्भवात् बोधकत्वेनैव लब्धसत्ताका क्रियार्थेन अलौकिकचतुर्वर्ग श्रेयस्साधनक्रियार्थेन समाम्नाय· समुच्चार सपरिकरक्रियारूपार्थबोधनार्थमेव समुच्चारणम्। उच्चार्यमाणा हि वैदिकशश अलौकिक चतुर्वर्गरूष श्रेयस्साधनरूपक्रियावचनाः उपलभ्यन्ते । अथ तन्निमित्तत्वात् - विलक्षणस्य वाक्यार्थस्य शब्दैकनिमित्तत्व व्याप्तिपरामर्शनिरपेक्षत्वादित्यर्थ· इति। एवं रीत्या सिद्धान्तसूत्रस्य व्याख्यानमव सेश्वरमीमांसायाम् । अत्रेदमाकूतम् - वेदवाक्यात् अर्थप्रत्ययो भवत्येव । व वाक्यानामयं स्वभावः यत् स्वार्थप्रत्यायकत्वं नाम। तदपलापो नोचितः। अन्न वह्निरुष्णः इति वाक्यात् जायमानस्य वह्नेरौष्ण्यप्रत्ययस्यापि भङ्गप्रसङ्गः । न शशविषाणवाक्यदृष्टान्तो युक्तः, शशविषाणवाक्यादपि बोधो जायत एव। प स च बोध. दृष्टबाधात् बाधितविषय इति अप्रमाणं भवति तद्वाक्यम्। एवं वक्ता आप्तो न भवति तत्र कारणदोषशङ्काग्रस्तत्वेन तद्वाक्यम् अप्रमाणं भव पौरुषेयवाक्ये कारणदोषशङ्कायाः अवसरो भवति । अपौरुषेये वेदे तु तस असम्भावितत्वात् वेदवाक्यं प्रमाणमेव, तद्वाक्यस्य अर्थप्रत्यायकत्वं सुलभमे न च अग्निहोत्रहोमः न स्वर्गादिसाधनम् इति बोधकं वाक्यं क्वचित् श्रूयते। उ वेदवाक्यात् अर्थप्रतीतिः जायत इति सिद्धं न स्समाहितम्।

अत एव शशविषाणवाक्यस्य अप्रामाण्यबोधनाय सूत्रकारेण 'लं सन्नियमात् प्रयोग संनिकर्षः स्यात्' इति प्रोक्तम् । अस्यायमर्थः योऽयं लं सन्नियमात् प्रयोगः असद्भूत शशविषाणादिवर्जनेन प्रयोगः, सः संनिकर्षः स्य संनिकर्षमूलत्वात्। प्रत्यक्षादिदृष्टविषयो हि लोके वाक्यप्रयोगः। शशविषाणा तु न केनचिद् दृष्टं सदिति न तद्विषयः प्रयोगः। इतोऽपि विस्तरः सेश्वरमीमांस द्रष्टव्यः ।

एतादृशोऽधिकरणार्थः पूर्वपक्षोत्तरपक्षादिप्रस्तावरूपेण मीमांसापादुकाय अधिकरणान्तरमिव विस्तृतं न निरूपितः, तथापि एतदधिकरणघटितप्रथमश्लो एतत्सर्वं विवक्षितमिति प्रतीम· ।

किं च वाक्यात् वाक्यार्थबोधे सम्बन्धज्ञानं नापेक्षते इति मीमांसापादुकायां निरूपितम् । अत्रेदमभिप्रेतम् - किं सम्बन्धज्ञानं कारणं उत न ? यदि ज्ञातसम्बन्धकंवाक्यं वाक्यार्थे हेतु , तर्हि वाक्यस्य वाक्यार्थस्य च सम्बन्धः क्वचित् गृहीत स्यात्। तथा तु न दृश्यते, तत्र तत्र वाक्यानुपूर्व्याः विलक्षणत्वात्। अन्यथा अपूर्वकाव्यादीनामनुदयप्रसङ्ग· स्यात्। एवमज्ञातसम्बन्धकमपि वाक्यं न कारणम्; अव्युत्पन्नानामर्थज्ञानविरहेण तेषामपि बोधप्रसङ्गः । अतः सम्बन्धज्ञानं अकिञ्चित्करम्। अतो व्युत्पन्नपदस्तोमातिशयेन वाक्यार्थज्ञानं भवतीति एष्टव्यम्। तत्र पदानां सम्बन्धः पूर्वमेव गृहीतः स्यात्। यत्र न गृहीतः सः, तत्र प्रसिद्धपदान्तर समभिव्याहारेण बोधो भवत्येव; यथा सहकारतरौ मधुरं पिको रौतीत्यादौ पिकादेः प्रत्ययः इति। तदिदमुक्तम् -

[12]''**वाक्यादज्ञातयोगादविदितकथनेऽतिप्रसङ्गः प्रसङ्गो**
**मैवं व्युत्पन्न शब्दस्तबकमहिमतस्तत्तदर्थोपलब्धेः।**
**सम्बन्धः स्यात् गृहीतः कथमपि न तु वा तत्तदर्थे पदानां**
**वाक्यं वाक्यार्थयुक्तं न तु विदितचरं काव्यक्लृप्त्यादिदृष्टः ॥''**

इति।

## मीमांसापादुकायामन्विताभिधानवादे निर्दोषत्वप्रतिपादनम्

अन्विताभिधानवादिनं प्रति काचन शङ्का उत्थाप्यते - सर्वमपि पद इतरपदार्थान्वितं सत् अर्थबोधकमिति हि प्राभाकरप्रक्रिया। तथा सति 'गां दद्यात्' 'गौ र्न हन्तव्या' इत्यादिवाक्ये कथं शाब्दबोधनिर्वाह.? यतः गोपदं दाधात्वादिसहितं दानाद्यन्वितगोत्वसंस्थानवदर्थबोधकमिति विशेषसम्बन्ध-व्युत्पत्ति र्लोके न दृष्टचरा। लोके अगृहीतादपि पदपदार्थसम्बन्धात् वाक्यार्थबोधः स्वीक्रियते, तर्हि अव्युत्पन्नानामपि बोधप्रसङ्गः । तत्रेत्थं समाधीयते- इदं पदम् इतरान्वितैतदर्थबोधकमिति ज्ञानस्य वाक्यघटकैकैकपदेऽपि पूर्वमपेक्षितत्वात् । लोकेऽपि गामानय, अश्वं बधान इत्यादौ व्युत्पत्त्या अश्वमानयेत्यादौ अर्थावबोधो जायते। एतद्बोधप्रकारस्तु अन्विताभिधानवादप्रसङ्गे अस्माभिः पूर्वं प्रादर्शि। एवं सामान्यरूपेण व्युत्पत्त्युपपादनता निर्वाह. कार्य·। अयमेव पन्थाः वेद वचसामपीति

न किंचिदनुपपन्नमत्र। तदिदमुक्तम् -

[13]"यत् वाक्यं गोपदादिव्यतिकरितमिदं वक्ति गोत्वादिमद्भिः
युक्तान् वाक्यार्थभेदानिति सकृदखिलव्यापि सम्बन्धबोधात्
वाक्यं वाक्यार्थबोधे प्रभवति तदिहातिप्रसङ्गो न शङ्क्यः
पुं वाक्येऽप्येवमेव स्थितिरिति न ततो वेदवाचां विशेषः।।"

इति। अत· पदसमूहो हि वाक्यमिति पदस्य वाक्यार्थं प्रति करणत्वमवश्यमेष्टव्य परं तु भाट्टाः पदार्थानामेव तत्र कारणत्वं स्वीकुर्वन्ति। पदार्थज्ञानं तु तत्र व्यापा न तु करणम्। न च व्यापारेण करणस्य अन्यथासिद्धि र्दृष्ट्या। अन्यथा यागस्य स्वर्गं प्रति करणत्वानुपपत्तिप्रसङ्गः स्यात्। अनेन इदं प्रतीयते र मीमांसापादुकाकृतामन्विताभिधानवाद एव विशेषादरो वर्तत इति।

## पदपदार्थयोः वाक्यवाक्यार्थयोश्च वैलक्षण्यप्रदर्शनम्

एवमन्विताभिधानपक्षादरेणैव पदपदार्थयोः वाक्यवाक्यार्थयो किंचिदाकारभेदेन वैलक्षण्यमुपपादयितुं, शक्यते। न च पदसमूहो हि वाक्य पदानि तु प्रत्येकं न प्रमाणम्, एकपदप्रयोगे बोधविरहात्, अतो न वाक्यं प्रमाण एवमेव पदार्थसमुदायो हि वाक्यार्थः, पदार्थस्तु न वाक्यप्रमेयः, अतः वाक्या प्रमेयोऽपि नास्तीति वाच्यम्, पदात् वाक्ये, पदात् वाक्यार्थे च किंचि वैलक्षण्यमाकारभेदेन दृश्यत इति न दोषः। प्रत्येकं पदसमर्थमपि इतरपदान्वि सत् अर्थबोधकं भवत्येव। एवमेव पदार्थोऽपि प्रत्येकम् अप्रमेयोऽ इतरपदार्थान्तरान्वितत्वेनरूपेण प्रमेयो भवतीति पदस्य वाक्यार्थबोधहेतुत्वे कोऽपि दोष.। तदुक्त -

[14]"वाक्यं नान्यत् प्रतीमः किमपि पदसमाहारतस्तान्यमानं
वाक्यस्यार्थः पदार्थादनधिक इति नापूर्वरूपोपपत्तेः।
अन्योन्योपक्रियादि प्रणिधिमति पदान्येव वाक्यं भवेयुः
वाक्यार्थत्वं पदार्थेष्वपि भवति मिथः श्लिष्टरूपातिरेकात्।।"

इति।

## सामान्यतः शब्दप्रामाण्यसमर्थनम्

सामान्यतः शब्दप्रामाण्य समर्थनं तु न्यायदर्शनकृत्यमिति प्रागवोचाम। न्यायदर्शनं तु सामान्येन लोकव्यवहारविरुद्धसपरिकरप्रमाणचिन्तायामधिकृतम्। एवं च सति धर्माधर्मादिविषयेषु वेदाख्यशब्दस्य प्रवृत्तिप्रकारो न्यायदर्शनसिद्धसामान्यलक्षणैस्तर्कैः मीमांसया साध्यः। ततश्चास्मिन् प्रमाणाध्याये (प्रथमाध्याये) सामान्येन शब्दप्रामाण्ये स्थितेऽपि स्थूणानिखनन्यायेन प्रसङ्गादत्र शब्दप्रामाण्यसमर्थनं क्रियते। नास्माभिः शाबरादिवत् सामान्यतः शब्दप्रामाण्य-समर्थनमेव एतदधिकरणकृत्यमिति निरूप्यते।

अत्रेत्थं विचार्यते - सर्वमपि वाक्यं न प्रमाणमिति चेत् तर्हि वादे वादिनः अधिकार एव न स्यात्। यदि किंचित् वाक्यं न प्रमाणमिति उच्यते, तर्हि तत्र हेतु र्वक्तव्यः। स च बाधितत्वं यदि स्यात्, तत्तु वेदवाक्ये न सम्भवति, आप्तवाक्येऽपि नास्तीति वेदवाक्यादीनां प्रामाण्यं सूपपादमेव। तदिदमाहुः -

[15]**"वाक्यं चेदप्रमाणं निखिलमभिलपेत् नास्य वादाधिकारः**
**किंचिश्चेत् मानमिष्टं तदितरदपि ते तादृशं किं न गानम्।**
**एतत् यो वा न मानं व्यपदिशति स चाबाधतो मानमिच्छेत् -**
**तस्मादाम्नाय वाक्यैरकलुषधिषणोत्पत्तिरक्षोभणीया॥"** इति।

अथैवं मनुषे - वाक्यात् वाक्यार्थज्ञानं न जायते अतः वाक्यं न प्रमाणमिति - अत्रेत्थं विमृश्यते त्वदुक्तस्य वाक्यस्य अर्थबोधजनकता वर्तते वा न वा? यदि स्यात् तर्हि बाधितार्थकत्वात् त्वद्वाक्यस्यैव अप्रामाण्यप्रसङ्गः, न वेदवाक्यस्य। यतः वेदवाक्यस्य क्वचिदपि बाधादर्शनात्। यदि बोधजनकता नास्ति वाक्यस्य, तर्हि त्वदुक्त्या न परमतभङ्गप्रसङ्गः। अतः अप्राप्तार्थबोधजनकता अबाधितार्थबोधजनकता च वेदे वर्तत इति वेदवाक्यानि प्रमाणान्येवेति सिद्ध्यति। तदिदमुक्तम् -

[16]**"वाक्यात् वाक्यार्थबुद्धि र्न घटत इति यद्वाक्यमुक्तं भवद्भिः,**
**तच्चेत् स्वार्थप्रतीतिं जनयति जनयेत् तद्वदन्यच्च वाक्यम्।**

नो चेत् भङ्गस्त्वदुक्त्या न कथमपि भवेदस्मदिष्टस्य तस्मात्
अप्राप्ते वेदवाक्यान्यपि निजविषये मानतां न व्यतीयुः ॥'' इति।

किं च वाक्यात् वाक्यार्थधी र्न भवतीति शङ्का न समीचीना। शङ्कितु र्वाक्यस्यापि वाक्यत्वाविशेषात् वाक्यार्थबोधजनकता तस्य न स्यात् इति स्वव्याघातकं दोषः। यथा ज्ञानस्य स्वपरनिर्वाहकत्वमिष्टं तथैव स्वव्याघातकस्य परव्याघातकत्वमप्यस्तु इति शङ्कनं तु बालिशभाषितमेव। यतः वाक्यात् वाक्यार्थबुद्धि र्न जायत इति वाक्यस्य अर्थधीजनकत्वं स्वीकर्तव्यम्, तथा वाक्त्यत्वाविशेषेण वाक्यार्थधीजनकत्वाभावोऽपि अभ्युपगन्तव्य इति भावाभावयोरेकत्र समावेशप्रसङ्गः। एवं वाक्यं न वाक्यार्थधीहेतुः पदत्वात् वर्णत्वात् शब्दत्वात् वेति विकल्पैः क्रियमाणानि अनुमानानि न सद्रूपाणि अपि तु हेतूनाम् आभासत्वात् दुष्टरूपाणीति सर्वमेतत् त्याज्यं भवति। अतः वेदवाक्यात् अर्थप्रतीति र्जायत इति अर्थप्रत्यायकत्वं वेदवाक्यानां निराबाधमिति ब्रूमः। तदिदमाहुः -

[17]''स्वव्याघातप्रसक्तौ स्वपरघटकवद्भावनं भ्रान्तकृत्यं
मूर्खाणां पण्डितानामपि न हि विहतं वाक्यमिष्टं प्रतीत्यै।
दृष्टं बोधं पदाद्यैरपलपितुमशक्यार्थकल्पान् विकल्पान्
अल्पप्रज्ञाभिनन्द्यान् अभिदधतु ततः स्वोक्तिरेवापकृत्ता॥'' इति।



## पादटिप्पणी

1 न्यायमाला 1-1-7
2. शाबरभाष्यम् 1-1-5
3. शाबरभाष्यम् 1-1-6
4. शाबरभाष्यम् 1-1-5
5. श्लोकवार्तिकम् -
6. न्यायमाला 1-1-7-52
7. मानमेयोदय श्लो - 92
8. श्लोकवार्तिकम् -
9 शाबरभाष्यम् 1-1-7
10. प्रकरणपञ्चिका पृ. 402
11. मी.पा. 155
12. मी.पा. 156
13. मी.पा. 157
14. मी पा. 158
15. मी पा. 159
16. मी.पा. 160
17. मी.पा. 161

## ९. वेदापौरुषेयत्वाधिकरणविचारः 1-1-8

**सूत्राणि - वेदांश्चैके संनिकर्षं पुरुषाख्याः (पू) (27)**
**अनित्यदर्शनाच्च (पू) (28)**
**उक्तं तु शब्दपूर्वत्वम् (सि) (29)**
**आख्या प्रवचनात् (सि) (30)**
**परं तु श्रुतिसामान्यमात्रम् (सि) (31)**
**कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात् (सि) (32)**

### शाबरभाष्यानुरोधमधिकरणनिरूपणम्

अत्रैवं रचयन्ति अधिकरणमिदं शाबराः - पदं, पदार्थः तयोस्सम्बन्धश्चेत्यतत् त्रयमपि नित्यमिति प्रसाध्य पदार्थमूलकत्वं वाक्यार्थस्य स्थापनं च विधाय चोदनायाः धर्माधर्मयो. प्रामाण्यं प्रतिष्ठापितं पूर्वेषु अधिकरणेषु। साम्प्रतं चोदनाया प्रामाण्यस्थापनायैव प्रकारान्तरेण शङ्कामुत्थाप्य परिहारः क्रियते। शङ्कायाः प्रकारस्तु इत्थं भवति यत् वेदाः पौरुषेया उत अपौरुषेया इति। तत्र पौरुषेयत्ववादिनः तार्किकाः अपौरुषेयत्ववादिनस्तु मीमांसकाः वेदान्तिनश्च। यद्यपि पदपदार्थसम्बन्धानां नित्यत्वात् वेदस्यापि नित्यत्वसम्भवात् अपौरुषेयत्वं वेदस्य प्रागेव सिद्धं, तथापि तस्य पौरुषेयत्वकल्पनाया निरसनीयत्वात् अपौरुषेयत्ववादोऽपि इतः प्राग् (अकथनात्) सूत्रानारूढात् सूत्रकृता अधिकरणमिदं प्रवर्तितम्।

अधिकरणेऽस्मिन् षट्सूत्राणि विद्यन्ते। तत्र द्वे सूत्रे पूर्वपक्षोत्थापनपरे स्त ।

यथा -

"वेदांश्चैके संनिकर्षं पुरुषाख्याः" - इति।

अस्यायं भावः - काठकं कालापकं पैप्पलादमिति पुरुषसमाख्यया उपलभ्यन्ते। अत एव तेषां कृतकत्वं सुवचमिति सिद्ध्यति। पुरुषस्य स विना समाख्यानं तु न क्वचित् दृष्टचरम्। यतः पुरुषसम्बन्धेन समाख्यायन्ते अत एव कृतका इति चोदनायाः कृतकत्वात् चोदना धर्माधर्मयो· न प्रमाण सिद्धम्। वेदान् च एके पूर्वपक्षिणः सन्निकर्षं - संनिकृष्टकालान्, पुरुषाख्य पुरुषेण आख्यायन्त इति कृतकान् इत्यर्थः। अतो वेदो नापौरुषेयः।

## अनित्यदर्शनाच्च

इतोऽपि वेदः पौरुषेय इति सिद्ध्यति - यथा जननमरणवतां प्रवाहणाद्यप बवरादीनां वेदे प्रतिपादनात् [1]'बबरः प्रावाहणिरकामयत' [2]'कुसुरुबि औद्दालकिरकामयत' इति तेषां जन्मनः पूर्वं वेदस्य असत्तायां सन्देहविरहात् न अपौरुषेयः, अपि तु पौरुषेयः। एवं प्राप्तेऽभिधीयते

## 'उक्तं तु शब्दपूर्वत्वम्'

इति सिद्धान्तसूत्रम्। अत्रेदमाकूतम् - शब्दशब्देनात्र अध्ययनं विवक्षि तथा च सर्वेषामपि अध्येतॄणां वेदाध्ययनं गुर्वध्ययनपूर्वकमिति वे कर्तुरस्मरणाच्च वेदस्य अपौरुषेयत्वं सिद्धम्। न हि कश्चित् स्वातन्त्र्येण प्रथमोऽ दृश्यते, यस्तु स्यात् वेदस्य कर्ता। अतः सर्वपुंसामध्ययनमध्ययनान्तरपूर्वकं यथैव गुरुणा अधीतं तथैव अधिजिगांसन्ते। अत एवोक्तं -

**[3]वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।**
**वेदाध्ययनसामान्यात् अधुनाध्ययनं यथा॥"** इति।

यत्तूक्तं काठकमित्यादिसमाख्यादर्शनेन वेदस्य पौरुषेयत्वमिति, त सूत्रकारः।

## आख्या प्रवचनात्

काठक कालापकमित्यादि समाख्यानं तु प्रवचननिमित्त वर्तते । न तु तत् कर्तृप्रापकम् । प्रवचने अनन्यसाधारणं विहितं योगदानमुपलक्ष्यैव एतादृशं समाख्यानं कृतम् । अतः प्रवचननिमित्तं समाख्यानमिति न तेन कृतकत्वसाधनं युक्तं वेदस्य ।

## परं तु श्रुतिसामान्यमात्रम्

यदप्युक्तं जननमरणवतां वबरादीनां प्रतिपादनश्रवणात् अनित्यसंयोगेन वेदस्य पौरुषेयत्वं युक्तमिति, तन्नसाधु प्रावाहणिशब्दस्य वबरशब्दस्य च न अनित्यपुरुषपरत्वमिष्यते, तथा क्वचिदप्यदर्शनात् । प्रावाहणि शब्दः प्रकर्षेण वाहयतीति नित्यसिद्धवायुवाचकः वबर इति तस्यैव वायोः शब्दानुकृतिरित्येवं नित्यपदार्थाभिधेयत्वं तादृशवाक्यानां भवतीति अनित्यदर्शनात् अपौरुषेयत्वं वेदस्य सुप्रतिष्ठितम् । सूत्रस्यायमर्थः - परं तु अनित्यदर्शनादिति यत् द्वितीयं कारणमुक्तं पौरुषेयत्वे तत् श्रुतिसामान्यमात्रम् - श्रुति शब्द. शब्दसाम्यमात्रमेव न तु अनित्यदर्शनपरमित्यर्थः ।

## कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात्

अथैवं शङ्कते - 'वनस्पतय· सत्रमासत' [4]'गावो वा एतत्सत्रमासत' इत्यादीनां प्रत्यक्षविरुद्धवाक्यानां श्रवणात् कथं वेदस्य प्रामाण्यसम्भव इति तत्रोच्यते - 'कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात्' इति । सूत्रस्यायमर्थः - कृतेकर्मणिभावे क्तः वा इति पूर्वपक्षनिरासद्योतक· विनियोग·अन्वय. स्यात् ; कुत इति चेत् कर्मणः - सत्रादेः कर्मणः प्रशंसापेक्षस्य संनिधिपठितत्वरूपसम्बन्धसत्त्वादिति । तथा च 'वनस्पतयः सत्रमासत' इत्यादीनां वाक्यानां प्रशंसाद्वारा इतिकर्तव्यतात्वेन प्रधानभावनायां प्रधानक्रियायामन्वयः सन्निधिपाठात् एष्टव्यः । वनस्पतयः नाम अचेतना अपि इदं सत्रं कुर्वन्ति चेत् किं बहुना विद्वांसो ब्राह्मणाः इति कर्मणः अतिशयप्रकाशनार्थपरं वाक्यमीदृशं भवति । अत. वेदस्यापौरुषेयत्वात् चोदनाया अपि अपौरुषेयत्वाच्च सिद्धं चोदनाया. धर्माधर्मयो· प्रामाण्यमिति ।

## मीमांसापादुकारीत्या अधिकरणविचारः

अत्राहुः मीमांसापादुकाकृत. - पदानां पदार्थेषु स्वाभाविकी शक्तिरस्तीति प्रागुपापीपदाम । अत एव पदानां नित्यत्वात् तत्कृतं पौरुषेयत्वशङ्कनं वेदानां न सम्भवति । परं तु वाक्यद्वारा पौरुषेयत्वशङ्का तु वेदानां कर्तुं शक्यत एव । यतः वेदवाक्यानां अनित्यार्थप्रतिपादनपरत्वात् इति । अतः पौरुषेयत्वसम्भावनया वेदानां प्रामाण्यं न घटत इति सिद्ध्यति । तत्र तावत् वेदानां पौरुषेयत्वे अयमपि हेतु र्भवति यत् काठकं कालापकं पैप्पलादमित्यादिसूचनम् । अतः काठकादिसमाख्यादर्शनादपि वेदपौरुषेयत्वं सुसाधम् । न च काठकमित्यादौ कठेन प्रोक्तमित्यर्थवर्णनात् प्रवचननिमित्तमेव तत्समाख्यानमिति न दोष इति वाच्यम् । प्रवचनकर्तृत्वं तु न कठमात्रवृत्ति, प्रवचनस्य बहुजनसाधारणत्वात् । अतः कठेन कृतं काठकमित्येव उचितत्वात् कठादीनां कतृत्वमेव स्वीकार्यम् । एवमेव [5]'विश्वामित्रस्य सूक्तं भवति' इत्यादावपि कर्तृत्वप्रतीते र्न वेदः अपौरुषेयः ।

अत्र समाधिः - न च काठकादिसमाख्यानेन वेदस्य पौरुषेयत्वसाधनं युक्तम् । समाख्यानस्य तादृशस्य प्रवचननिमित्तत्वात् । न च प्रवचनं तु बहुपुरुषसाधारणमिति शङ्क्यम्, प्रवचने कठादीनाम् असाधारण्यविवक्षया तदुपपत्तेः । एवं 'मन्त्रकृतो वृणीते' 'विश्वामित्रस्य सूक्तं भवती'त्यादौ विश्वामित्रादिमहर्षिणां सूत्रकाण्डमन्त्रकृत्त्वं प्राचीनकर्मानुगुणं प्रजापतिदत्तशक्तिविशेषाणां तत्तदधिकारानुगुणम् अनधीतवेदभागसाक्षात्करणमेव । अपि च वेद एव स्वस्य नित्यत्वमपि [6]'अजान् ह वै पृश्नीँ तपस्यमानान् ब्रह्म स्वयंभू अभ्यानर्षत्' इति श्रवयति । न च [7]'ऋचः सामानि जज्ञिरे' इत्यन्यत्र तस्य कर्तृकत्व प्रतीतेरिति वाच्यम्, तत्तद्वेदाभिमानिदेवतोत्पत्तिपरत्वात् तद्वाक्यस्य । तदिदं सर्वम् [8]'अत एव च नित्यत्वम्' इत्यत्र श्रीभाष्ये बहुधा समर्थितम् ।

## अत्र अभिनवदेशिकाशयः

काठकादिसमाख्यानविषये अभिनवदेशिकैः काचन अभिनवा युक्तिरपि प्रदर्शिता - यथा - सर्वशाखावेदाध्ययनं तु अत्यन्तं दुश्शकम् । एतत्तु [9]'वेदा वा एते । अनन्ता वै वेदाः । एतद् वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त

इतरदननूक्तमैव इति काठके भरद्वाजमहर्षिवृत्तान्ते स्पष्टम्। अत. भगवान् वेदव्यास एव सर्वशाखाध्ययनमपि यथा नष्ट न भवेत् तथा कार्यमिति मन्वानः एकैकम् महर्षिं एकैकशाखाध्ययने नियोजयामास । त इमे प्रत्येकशाखाध्यायिन· कठादय. । अतः कठादीना तत्तच्छाखिनां कूटस्थत्वात् तत्तन्नाम्ना तत्तच्छाखाव्यवहारोऽप्युपपद्यते । अत्र शाबरं वचनमपि अनुकूलं भवति यथा [10]'स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी । कठः पुनरिमां केवलां शाखामध्यापया बभूव' इति । स बहुशाखाध्यायिनां सन्निधौ एकशाखाध्यायी अन्यां शाखामनधीयमान· तस्यां प्रकृष्टत्वात् असाधारणमुपपद्यते विशेषणम्' इति।

तदिदं सर्वं

[11]"**कर्तृप्रत्यायकाः स्युः श्रुतिषु सुविदिताः काठकाद्याः समाख्याः**
**तेनेमाः पौरुषेय्यस्तदिह कुशलिनी विप्रलिप्सादिशङ्का।**
**मैवं शारीरकोक्तां सरणिमवयतां नित्यसिद्धेषु वेदेषु**
**आविष्कारेऽधिकारात् कतिचन पुरुषाः कर्तृनिर्देशमापुः ॥"**

इत्यत्र अभिहितम्।

किं च नैयायिकाः वेदस्य प्रामाण्यमुररीकुर्वन्तोऽपि तस्य पौरुषेयत्वमातिष्ठन्ते। स च पुरुषः अस्मदादिविलक्षणः साक्षात् परमपुरुष एवेति स्वीकुर्वन्ति। तथा सति काठकं कालापकम् इत्यादि व्यवहारस्य किं बीजम्? इति चेत्-अत्रैव वर्णयन्ति-यत् भगवानेव स्वयं कठादिरूपेणाविर्भूय तत्तच्छाखानिर्माणमकरोत् इति। अत्रेदं विमृश्यम् - प्रथमप्रवर्तकत्वं परमात्मनः स्वीकुर्वन्ति तार्किका.। सर्वेषामपि गुरुत्वात् तस्य । तथा सति अध्यापनेनैव काठकादि समाख्यानिर्वाह परित्यज्य निर्माणपर्यन्तकल्पनं न साधु। न च ईश्वरस्य कठादे र्वा अध्ययनकाले वेदकर्तृत्वेन स्मरणमस्ति। अतः अध्यापनकल्पनमेव परमात्मनः युक्तम्। तदिदमुक्तम् -

[12]"**कल्पे कल्पे दयालुः स्थिरचरकृदधिष्ठाय रूपं कठाद्यं**
**शाखाभेदान् विचित्रान् समतनुत ततोऽध्यापयामास चर्षीन्।**
**इत्युक्तं न्यायभक्तैरिदमपि च परं भक्तिमात्रप्रसूतं**
**निर्माणाध्यापने द्वे किमिति निगदिते पश्चिमेनैव लभ्ये ॥"** इति।

न च वेदः सकर्तृकः वाक्यत्वात् भारतादिवत् इत्यनुमानमेव वेदनिर्माणकल्पनस्य प्रमाणमिति वेदस्य सकर्तृकत्वे प्रसाधिते महाजनपरिग्रहेण स च कर्ता कपिलादि र्न भवितुमर्हतीति विनिश्चित्य भगवानेव स इति निश्चयसम्भवात् वेदस्य पौरुषेयत्वं सयुक्तिकमिति वाच्यम्, विपक्षे बाधकाभावात् अनुमानमिदं न साधु। वाक्यत्वमस्तु सकर्तृकत्वं मास्तु इति अप्रयोजकशङ्कायां बाधकतर्कविरहात्। अपि च पक्षे बाधकत्वमप्यस्तीति नैतदनुमानं समीचीनम् । न ह्यसौ कर्ता अस्मदादिभिरूपलभ्यते स्मर्यते वा इति। तदिदमाहुः -

[13]“**वाक्यत्वात् कर्तृमत्वे सति निगमगिरां कर्तृभेदे तु चिन्त्ये**
**वृद्धव्याहारसिद्धास्तदवधृतिकृतः काठकाद्याः समाख्याः ।**
**इत्येषा मुग्धभाषा बहुनिगमहता बाधशून्यो विपक्षे**
**नासौ वाक्यत्वहेतुः निगमकृतकतां सम्प्रयोक्तुं क्षमेत ।।**” इति।

## वेदशाखादिविभागदर्शनेन वेदस्य अनित्यत्वशङ्का - तत्समाधानं च

ननु वेदव्यासेन सम्पूर्णस्य वेदस्य ऋग्यजुस्सामाथर्वभेदेन विभागः कृतः । एवं विभक्तानामपि वेदानां अनेकशाखाघटितानां तत्तद्वेदस्य सम्बन्धिन्यः ईदृश्यः शाखाः इति शाखाविभागोऽपि कृतः । तदिदं सर्वं सर्वसम्मतम् । एवं च सति विभागवचनादेव वेदानामानुपूर्व्या अपि भेदो दृश्यत इति सिद्धं वेदस्य अनित्यत्वमिति चेत् - अत्र ब्रूमः - आनुपूर्वीमभङ्क्त्वैव शाखाविभागः कृत इति न तत्र अनित्यसंयोगो वेदस्य। पूर्वैः यादृशानुपूर्वीविशिष्टमध्ययनं कृतं तादृशमेव तदनन्तरवर्तिभिः कृतमिति आनुपूर्व्याः अभेदात् वेदस्य नित्यत्वं न व्याहतम् । शाखाविभागो नाम समुदायात् पृथक्करणमेव । तच्च समुदाये वर्तमानस्य आनुपूर्वीविशिष्टस्य भागस्य तथैव अध्ययनाध्यापनादि । तदिदं पृथक्करणं कथं कर्तुं शक्यते? किमर्थं वा क्रियत इति चेत् - उच्यते 'अजान् ह वै पृश्नीँ तपस्यमानान् ब्रह्मस्वयम्भू अभ्यानर्षत् तत् ऋषयोऽभवन्, तद् ऋषित्वम्' इति श्रुत्यनुसारं ऋषयः साक्षात्कृतवेदास्सन्ति। तेषां तादृशी तपोजन्या शक्तिरस्ति। मानवानां सम्पूर्णस्य वेदस्याध्ययने शक्तिविरहात् एकैकस्या शाखाया वा अध्ययनं कर्तुं यथाशक्तिः स्यात् तथा विभाजनं कार्यमिति शाखाविभागः कृतः ।

[14]''जन्मसंस्कारविद्यादेः तपः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥''

इति कुसुमाञ्जलावपि जन्मसंस्कारविद्यादीनां ह्रासः क्रमशः कथं जायत इति निरूपितम् । अतः शक्तिज्ञानादीनां ह्रासमभिलक्ष्यैवशाखाविभाग व्यासेन कृत इति स्वीकर्तव्यम् । तथाऽपि आनुपूर्व्याः भेदो न स्वीक्रियतेऽस्मभिरिति सिद्धं वेदस्य नित्यत्वमिति । तदाहुः -

[15]''वेदानां यच्च शाखाविभजनमुदितं द्वापरान्ते चतुर्णां
नानित्यत्वं ततः स्यात् समुदितपृथगाम्नानमात्रप्रवृत्तेः ।
कृत्स्नाम्नानक्षमाणामुपचिततपसां गोचरः कृत्स्नमादौ
पश्चात्तु ज्ञानशक्त्योरपचयनियमात् व्यासक्लृप्तिः समीची ॥''

इति ।

## वेदनित्यत्वे श्रुतिस्मृत्यादिप्रमाणप्रदर्शनम्

किं च वेदस्य नित्यत्वे श्रुतयः स्मृतयश्चापि प्रमाणम् । यथा - 'यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदांश्च प्रहिणोति तस्मै' इति, [16]'वाचा विरूपनित्यया' 'अजान् ह वै पृश्नी स्तपस्यमानान् ब्रह्म स्वयम्भू अभ्यानर्षत्' [17]'वेदेन रूपे व्याकरोत् । सतासती प्रजापतिः' । 'स भूरिति व्याहरत् । स भूमिमसृजत । स भुव इति व्याहरत् । सोऽन्तरिक्षमसृजत' इत्यादिः श्रुतिगणः । एवं

[18]''अनादिनिधनाह्येषा वागुत्सृष्टा स्वयम्भुवा
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥'' इति ।

''सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥''

इति च मनुस्मृतिः । एवं

''नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥''

इति विष्णुपुराणम् ।

न च 'ऋचस्सामानि जज्ञिरे' इत्यस्य जनिशब्दघटितस्य वेदवाक्यस्य का गतिरिति शङ्कनीयम् । जनिप्रादुर्भाव इति प्रादुर्भावस्यैव जनिधात्वर्थत्वात् प्रादुर्भावमात्रविवक्षणे न कोऽपि दोषः । 'धाता यथा पूर्वमकल्पयत्' इति श्रुत्यनुसारं भगवान् पूर्वकल्पानुसारं प्रादुर्भावयति वेदम् । तत्र अपूर्वानुपूर्व्या विरहात् नित्यत्वं वेदस्य सुस्थम् । एतेन 'तेभ्यस्तेपानेभ्यः त्रयो वेदाः अजायन्त अग्नेः ऋग्वेदः वायोर्यजुर्वेदः आदित्यात् सामवेदः' इति श्रुतिवचनमपि व्याख्यातम् । अतः वेदवाक्यमपि वेदापौरुषेयत्ववादिनामत्यन्तमनुकूलमेव । तदिदमुक्तं

[19]"**वेदाद् द्वेधाऽप्रधृष्याद् भवति विमृशतां वेदनित्यत्वसिद्धिः**
**मन्वादीनां च वाक्यैरवितथवचसां बाधदोषातिवृत्तैः ।**
**अङ्गोपाङ्गैरशेषैरपि कथितमिदं सद्गृहीतैस्तदास्मिन्**
**प्रादुर्भावादिमात्रं प्रजनयति विभुः सोऽपि पारम्पर्यरम्यः ॥"** इति ।

## वेदस्य सकर्तृकत्वशङ्कनं परिहासास्पदमिति निरूपणम्

किं च सकर्तृकत्वमुक्तरीत्या वेदस्य न सिद्ध्यति । यदि अनुमानेन तत्साधने आग्रहः क्रियते, तर्हि अनुमानेन प्रसाधितः वेदकर्ता किं यः कश्चन इष्यते उत विशेषरूपेण कश्चनेति वक्तव्यं भवति । तत्र सामान्यतः ऊहमात्रेण न कस्यचन वस्तुनस्सिद्धिरिति आद्यः पक्षः न समीचीनः । यदि विशेषरूपेण ईश्वर एव कर्तेति निरूप्यते । तत्रेदं वक्तव्यम् - स किं दृष्टः उत श्रवणात् प्राप्तः इति । परमात्मनः दर्शनायोग्यत्वात् न प्रथमः कल्पः । श्रवणपरम्परया कर्ता ईश्वर इति श्रुतश्चेत् वेदवाक्यात् श्रुतः उत वाक्यान्तरात् इति तत्र पृच्छ्यते । तत्प्रणीतत्वेन वेदवाक्यस्य प्रामाण्यम्, वेदवाक्यात् श्रवणात् तत्कर्तृत्वप्रसाधनमिति परस्पराश्रयदोषप्रसङ्ग इति न प्रथमः कल्पः युक्तः । किं च वेदवाक्यमेव स्वस्य नित्यत्वमेव आवेदयतीति प्रागस्माभिः न्यरूपि । एवं वाक्यान्तरादपि ईश्वरः कर्ता वेदस्येति अवगतमिति स्मृतिवचनानि पूर्वोक्तरीत्या ईश्वरस्य कर्तृत्वं न प्रतिपादयन्ति, परं तु वेदस्य अपौरुषेयत्वमेव प्रतिपादयन्तीति सिद्धं नः समीहितम् । इतोऽपि केवलमाग्रहवशात् अनुमानैकशरणः सन् आशङ्कां कुर्वीत, तर्हि स्वजन्मविषयेऽपि तथैव कुर्यादिति श्रीमद्वेदान्तदेशिकवर्याः आशेरन्ते । तदिदमाहुः -

[20]"**कर्ता दृष्टः श्रुतो वा न हि परकथितस्तापसादिः श्रुतीनां**
**प्रद्विष्टोक्ति र्न तत्त्वस्थितिमवगमयेन्नातिशक्ता नियोक्तुम् ।**
**श्रद्धेयैरन्यथोक्त्या भजति च विहतिं शङ्कनेऽतिप्रसक्तिः**
**शङ्का सार्वत्रिकी च स्वजनिविहतिकृत् सर्वचेतः प्रतीपा ।।**"

इति ।

न च 'प्रतिमन्वन्तरं चैषा श्रुतिरस्या विधीयते' इति वचनानुसारं मन्वन्तर-भेदेन वेदभेद इति प्रतीतेः वेदस्य पौरुषेयत्वमेवापतितमिति वाच्यम्, अनादिसिद्धानां वेदांशानामनन्तत्वात् कस्मिंश्चित् मन्वन्तरे कश्चित् वेदांशः प्रवर्तत इति तदर्थस्वीकारात् । यथा पृथक् जपार्थमुपयुज्यमानाः मन्त्रभागाः कस्मिंश्चित् काले यज्ञमध्ये जपार्थमुपसृज्यमानत्वेऽपि अनित्यत्वं नापद्यन्ते तद्वदत्रापीति भाव्यम् । न च स्मृतेः कर्तृत्ववत् वेदस्यापि कर्तृत्वं भगवति भवेदिति वाच्यम्, वेदस्य नित्यत्वं नाम ऐकरूप्येण प्रतिकल्पमुच्चार्यमाणत्वम्, अथवा पूर्वानुपूर्वीसापेक्षोच्चार्यमाणत्वम् । स्मृत्यादिषु अनित्यग्रन्थेषु पूर्वानु-पूर्वीनिरपेक्षोच्चारणव्यङ्ग्यवर्णराशित्वमेव वर्तते । नैतत् नित्येषु वेदेष्विति सिद्धं वेदस्य नित्यत्वम् । अत एव श्रुतिरपि 'ब्रह्मस्वयम्भू अभ्यानर्षत्' इति नित्यत्वमेव तस्य श्रावयति । तदिदमाह -

[21]"**अन्या मन्वन्तरेषु श्रुतिरिति च वचः कालयोगप्रवाहात्**
**जप्य श्रुत्यादिनीत्या न कथमितरथा द्रव्यपूर्वेण भेदः ।**
**दिष्टा यत्रानधीते मुनिभिरनघता तत्र तत्कर्तृतोक्ता**
**प्रोक्तं ब्रह्म स्वयंभ्वित्यपि जनिविलयाभावमत्र स्मरन्ति ।।**" इति ।

## अधिकरणोपसंहारः

तथा च प्रतिमन्वन्तरं प्रतिकल्पं वा भगवानेव वेदस्य प्रथमोपदेष्टृत्वेन स्थित्व पूर्वपूर्वोच्चारणानुपूर्वीसमानानुपूर्वीकोच्चारणेन वेदमध्यापयामासेति स्थिते सृष्टिप्रलयादीनामस्वीकारेण मीमांसकैः कुमारिलप्रभृतिभिः

"**वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।**
**वेदाध्ययनसामान्यात् अधुनाध्ययनं यथा ।।**"

इति प्राथमिकाध्ययननिषेधेन वेदनित्यत्वं प्रतिष्ठापितम् । यथा देवतादीनां विग्रहादिमत्त्व श्रुतिप्रसिद्धमपि तै र्न स्वीकृतं तथैव श्रुतिप्रसद्धयो· सृष्टिप्रलययोरपि अभ्युपगमो न कृतस्तैः । एतत्तु न श्रुतिस्मृतिप्रमाणशरणेभ्यो वेदान्तिभ्यो रोचते । किं च देवतादीनां विग्रहादिमत्त्वास्वीकारादेव 'वनस्पतयः सत्रमासत' इत्यस्य वेदवाक्यस्य प्रामाण्यस्वीकारार्थं वनस्पतय· अचेतना अपि सत्रानुष्ठानमकुर्वन्निति चेत् किं बहुना चेतना ब्राह्मणाः इति वर्णयित्वा विधेयार्थप्रशंसाद्वारा तद्वाक्यस्य प्रामाण्यं स्थापितम् । नैतत् युज्यते । यतः 'तत्तेज ऐक्षत' 'ता आपः ऐक्षन्त' इत्यादि श्रुतीनामभिमानिदेवतापरत्वं [22]'अभिमानिव्यपेदशस्तु विशेषानुगतिभ्याम्' इति सूत्रकारेणैव स्वीकारदर्शनात् । तद्वदत्रापीति भाव्यम् । तथा च देवता अपि एतत्सत्रमनुतिष्ठन्ति चेत् अस्माभिरपि अवश्यम् अनुष्ठेयं भवतीति उत्कृष्टप्रशंसार्थसम्भवः अस्माकं सिद्धान्ते भवतीति ध्येयम् । तथा च श्रुतिप्रसिद्धं सृष्टिप्रलयादि स्वीकृत्य सृष्टिकाले प्रथमोपदेष्टृत्वेन भगवान् वेदस्य वर्तत इति स्वीकार्यम् । तादृशे वेदे अनित्यत्वशङ्कनं तु श्रुतिस्मृतिप्रमाणविरुद्धमिति सिद्धं वेदस्य नित्यत्वम् । वेदस्य नित्यत्वे प्राप्ते चोदनाया अपि प्रामाण्यं सुस्थमिति चोदना धर्मे प्रमाणमेवेति चोदनासूत्रे प्रतिज्ञातस्य द्वितीयार्थस्य स्थापनं सुशकमिति धर्मे चोदनाप्रमाणमिति सिद्धम् । तदिदं मतं प्राचीनाचार्यपरम्पराप्राप्तं श्रुतिस्मृतिप्रमाणपोषितम् अत एव निर्दुष्टमिति च मीमांसापादुकाकृत· आशेरन्ते - यथा -

[23]"**कल्पादौ एवमीशः कथयति निगमान् पूर्वयैवानुपूर्व्या**
**तद्वन्मन्वन्तरादिष्वपि शिथिलसमाधानमात्रं क्रमैः स्यात् ।**
**नित्यश्रुत्यैव बाधादुपजनिविलयौ नानुमानैः प्रसाध्यौ**
**मीमांसाप्राच्यपादप्रसृतिरविहता देशिकै र्दशितोऽयम् ।।**" इति ।

## वेदस्य व्यावहारिकप्रामाण्यवादिमतनिरासः

अथ धर्मे प्रमाणभूतानि अष्ट इति मीमांसायां प्रोक्तम् । यथा-विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाणि । तत्र विधेः प्रामाण्यप्रकारस्तु प्रथमाध्यायस्य प्रथमे पादे कृत. । अर्थवादमन्त्रयोस्तु

प्रथमाध्यायस्य द्वितीये पादे निरूपणं कृतम् । स्मृत्याचारयोस्तु प्रथमाध्यायस्य तृतीयपादे कृतम्। चतुर्थे तु नामधेयवाक्यशेषसामर्थ्यादीनां निरूपणं कृतम्। एतेषां प्रामाण्यं जैमिनिना सूत्रितम् । तदिदं शारीरकशास्त्रोपजीव्यमपि भवति । इदं च प्रामाण्यं वेदस्य न पारमार्थिकमपि तु व्यावाहारिकमिति वर्णयन्ति अद्वैतिनः । तर्हि 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादीनां स्वसिद्धान्तस्थापकपराणामपि वाक्यानां प्रामाण्यं व्यावहारिकमिति स्वसिद्धान्तो न पारमार्थिको भवेत् । अपि च वेदस्य प्रामाण्यं व्यावहारिकमिति कथनेन बौद्धमताविशेषप्रसङ्ग , तैरपि वेदस्य परमार्थतः प्रामाण्यास्वीकारात्। अतः वेदस्य प्रामाण्यं पामार्थिकमेवेति स्वीकार्यम्। तदुक्तम्-

[24]"**अन्यैरप्यर्थवाद प्रभृतिषु निहितैरादिमाध्याय भेदैः**
**मानं तत्तत्प्रवृत्त्या निगममिह मुनिः सूत्रयामास साध्व्या ।**
**इत्थं प्रामाण्यसिद्धिं व्यवहरणदशाभाविनीं भावयन्तः**
**स्वाभीष्टस्थापकानामपि खलु वचसां मूलघातं सृजन्ति ।।**"

इति।

सेयं द्वादशाध्यायी शारीरकशास्त्रस्य परमोपजीव्येति आचार्या स्वयं प्रतिपादयन्ति -

[25]"**ग्राह्यं सर्वत्र मानं परभजनविधौ भेदतादात्म्यचर्चा**
**तत्रैवाङ्गप्रयुक्ती परिकरघटने मार्गभेदक्रमाप्तिः ।**
**कर्ता वैराग्यपादप्रभृतिषु विविधावस्थितिः स्थापनीयः**
**शेषं चाशेषमीदृग्विलगति बहुषु ब्रह्मकाण्डस्थलेषु ।।**" इति।



## पादटिप्पणी

1 तै स - 7
2. तै स - 7
3 न्यायप्रकाशे उद्धृतोऽय श्लोक पृ 1
4 तै स - 7-5-1
5 तै. स - 5-2-3
6 तै. आ. 2-13
7 पुरुषसूक्तम् 4
8 श्रीभाष्यम् 1-3-28

9. काठकम् - 1-1-11
10. शाबरभाष्यम् - 1-1-8-30
11. मी.पा. 162
12. मी.पा 163
13. मी पा. 164
14. न्यायकुसुमाञ्जलि 2-4
15. मी पा. 165
16. तै. स. 2-6-11
17. तै. ब्रा 2-6-2-7
18. मनुस्मृतिः 1-21
19. मी.पा. 166
20. मी.पा. 167
21. मी.पा. 168
22. ब्र.सू. 2-1-5
23. मी.पा. 169
24. मी.पा. 170
25. मी.पा. 171

॥ इति शम् ॥



# सङ्केतशब्दविवरणसूची

| | | | |
|---|---|---|---|
| 1. | अ.सा. | = | अधिकरणसारावलिः |
| 2. | आ.श्रौ.सू. | = | आपस्तम्बश्रौतसूत्रम् |
| 3. | कठ.उ. | = | कठोपनिषत् |
| 4. | छ.उ. | = | छान्दोग्योपनिषत् |
| 5. | त.मु.क. | = | तत्त्वमुक्ताकलाप |
| 6. | तै.आ. | = | तैत्तिरीय आरण्यकम् |
| 7. | तै.उ. | = | तैत्तिरीयोपनिषत् |
| 8. | तै. ब्रा. | = | तैत्तिरीयब्राह्मणम् |
| 9. | तै. सं. | = | तैत्तिरीयसंहिता |
| 10. | ता. ब्रा. | = | ताण्ड्यब्राह्मणम् |
| 11. | न्या. द. | = | न्यायदर्शनम् |
| 12. | न्या. प. | = | न्यायपरिशुद्धिः |
| 13. | न्या. सि. | = | न्यायसिद्धाञ्जनम् |
| 14. | न्या. कु. | = | न्यायकुसुमाञ्जलि. |
| 15. | पू. मी. | = | पूर्वमीमांसा |
| 16. | प्र. उ. | = | प्रश्नोपनिषत् |
| 17. | प्र. प. | = | प्रकरणपञ्चिका |
| 18. | प्रा. वि. | = | प्राभाकरविजयः |
| 19. | ब्र. मी. | = | ब्रह्ममीमांसा |
| 20. | ब्र. सू. | = | ब्रह्मसूत्रम् |
| 21. | ब्र. सू. शां. भा. | = | ब्रह्मसूत्रशांकरभाष्यम् |
| 22. | भा. दी. | = | भाट्टदीपिका |
| 23. | मी. पा. | = | मीमांसापादुका |
| 24. | मी. पा. परित्राणम् | = | मीमांसापादुकापरित्राणम् |

| | | |
|---|---|---|
| 25. मु. उ. | = | मुण्डकोपनिषत् |
| 26. शा. दी. | = | शास्त्रदीपिका |
| 27. शा. भा. | = | शाबरभाष्यम् |
| 28. बृ. उ. | = | बृहदारण्यकोपनिषत् |
| 29. श्रु. प्र. | = | श्रुतप्रकाशिका |
| 30. श्लो. वा. | = | श्लोकवार्तिकम् |
| 31. श्वेताश्व. उ. | = | श्वेताश्वरतरोपनिषत् |
| 32. वि. ध. | = | विष्णुधर्म. |
| 33. वि. पु. | = | विष्णुपुराणम् |
| 34. वै. द. | = | वैशेषिकदर्शनम् |
| 35. से. मी. | = | सेश्वरमीमांसा |



# ग्रन्थसूची


| संख्या | ग्रन्थः | प्रकाशनस्थानम् | प्रकाशकः | वर्षम् |
|---|---|---|---|---|
| 1 | अधिकरणसारावलि· | श्रीमद् अहोबिलमठम्, श्रीरङ्गम् | कुरुच्चि लक्ष्मीनरसिंहाचार्यः | 1940 |
| 2. | अनुमितिगादाधरी | चौखाम्बा सस्कृतसीरीज्, वाराणसी | विन्ध्येशरीप्रसाद द्विवेदी | 1927 |
| 3. | अष्टाध्यायी | कृष्णदास अकादमी, वाराणसी | प्रह्लाद गिरि वेदान्त केसरी | |
| 4. | आपस्तम्बश्रौतसूत्रम् | - | - | - |
| 5. | उपनिषद्संग्रहः | मोतीलाल बानरसीदास, वाराणसी | | 1970 |
| 6. | काठकम् | Heritage India Educational Trust, Mylapore | आर्. कृष्णमर्तिशास्त्री | 1992 |
| 7 | काशिका | रत्नापब्लिकेशन्, वाराणसी | प्रो. नारायण मिश्रा | 1985 |
| 8. | गौतमधर्मसूत्रम् | - | - | - |
| 9. | तत्त्वमुक्ताकलाप | उभयवेदान्तग्रन्थमाला, त्यागरायनगर् | उत्तमूर् वीरराघवाचार्यः | 1973 |
| 10. | तत्त्वमुक्ताकलाप | सपूर्णानन्द संस्कृत विद्यालय , वाराणसी | अय्या देवनाथताताचार्यः | 1992 |
| 11. | तन्त्रवार्तिकम् | तारा प्रिन्टिङ्प्रेस्, वाराणसी | महाप्रभुलाल गोस्वामी | 1987 |
| 12. | ताण्ड्यब्राह्मणम् | - | - | - |
| 13. | तैत्तिरीयआरण्यकम् | Heritage India Educational Trust, Mylapore | आर्. कृष्णमर्तिशास्त्री | 1992 |
| 14. | तैत्तिरीय संहिता | ,, | ,, | ,, |
| 15. | तैत्तिरीय सहिता | ,, | ,, | ,, |
| [illegible] | [illegible] | मद्रास् यूनिवर्सिटी | उत्तमूर् वीरराघवाचार्यः | 1956 |

